देवं परम् ॥ १ ॥ नत्वा क्षीराब्धिजाजानिं तथा ब्रह्मादिकान् सुरान् गणेशं विघ्नहर्तारं वंदे हैमवतीसुतम् ॥ २ ॥ चतुर्दशसु विद्यासु निष्णाताः शुद्धमानसाः । अपरोक्षब्रह्मतत्त्वा जयंति गुरवो मम ॥ ३ ॥ श्रुतिसकलरहस्यं विम्बितं यस्य चित्ते मुकुर इव विशुद्धे दोषमालिन्यशून्ये स्वपदविमलभक्त्या (भक्त्या?) यस्य तुष्टोऽस्मि शौरी तमनकजनकपदं भट्टमेनं नतोऽस्मि ॥ ४ ॥ जातोऽहमपोय मनोरथेन यस्यानुकंपामृतदृष्टिपुष्टः । पारं गतश्चाखिलदर्शनानां नारायणभट्टं जनकं नतोऽस्मि ॥ ५ ॥ वंदे भागीरथीमंबां गुणैरंवेव शालिनीं । यत्प्रसादादहं प्राप्तः संजातो जडधीरपि ॥ ६ ॥ श्रीमत्काण्वकुलाब्धिशीतकिरणो विद्याकलानां निधिः श्रीमद्विष्णुपदार्चितः परमभूर्विद्वच्चकोरप्रियः । भट्टचंद्र इमं विचक्षणमभिमत्पानंतभट्टः (?) सुधीर्नानाशांतिविधानमत्सुरतरुं व्यारोपयद्भूतले ॥ ७ ॥ विधानपारिजातोऽयं पंचस्तबकसंयुतः । नानाविधानगंधोढ्यः सेव्यो विबुधैरिह ॥ ८ ॥ प्रथमस्तबके स्वस्तिवाचनादिकमुच्यते । द्वितीये दुष्टयोगादिजातशांतिकमीर्यते ॥ ९ ॥ तृतीये गुरुशांत्यादिप्रतबंधविवाहयोः । प्रकीर्णानि विधानानि कीर्त्यंतेऽत्र चतुर्थके ॥ १० ॥ मरणस्य विधानानि कथ्यंते पंचमेऽत्र तु । जन्मांदिक्रमेणैव शांतिक्रम इहेरितः ॥ ११ ॥ न पांडित्याभिमानेन न च वित्तस्य वांछया । निबंधोऽरच्यते किं तु विदुषां परितुष्टये ॥ १२ ॥ यत्किंचिन्मम चापल्यं क्षम्यतां च विचक्षणाः । गुणगम्याः सदा संतो बालस्य पितरा इव ॥ १३ ॥ संचक्षामि विकीर्णानि विधानानि समंततः । संपश्यामि सतां प्रीत्यै तेन प्रीयतु केशवः ॥ १४ ॥ साधारणविधानानि प्रोच्यंते सर्वशांतिनाम् । असाधारणकृत्यस्य तत्रात्रात् स्पष्टसूचनाः ॥ १५ ॥ तत्र तावत् परिभाषाप्रकरणं ॥ दिशामनुक्तौ प्राची स्यात् तथा कर्तृप इष्यते । शुभेकाले शुभे देशे शांतिकर्म समाचरेत् ॥ १ ॥

End. अग्निविधाने तु ॥ समुद्रादिनि स्नात्वा संयतात्मा जितेन्द्रियः । निर्वपेदित्यमकुर्वन्न पूर्वाह्णस्या इत्याक्रमम् । अथैतिकर्तव्यतामाह पंचकारः । एवं यथोचितं कृत्वा कृत्वा पूर्वाह्णमिं चरेत् । एतेनापूर्व्यं सुमार्गं गर्तेबहिर्युचि शुभम् । निधायाधोमुखं न्यस्तं सुपात्रे कुशमास्तरम् । यथास्थानमपूरोदकराभ्यां संस्कृतया । मन्त्रोक्ता मुक्त्वा सुखी भवेत् सुरार्थे स्वस्थोचनः । चतुष्कोष्ठः प्रपत्रात्मा समपादः समुत्थितः । स्थिरस्थौर्द्धपादशो मध्यमितधारया । पूर्वाह्णतिरियं प्रोक्ता सर्वकर्मसूरयो । इति विधानपारिजाते पूर्वाह्णतिविधानम् ॥ अथैः प्रभादमानाय प्र-

यज्ञोनिरूपितः । प्रादपस्तद्विपेंद्रस्य मोचकस्तेन मुच्यतु ॥ मनोरथा-
भिवर्षिण्या विदुषामनुकंपया । विधानपारिजातेऽत्र द्वितीयस्तवकोऽभवत् ॥ अहो अस्य निबंधस्य महिमा किमु वर्ण्यते । यतः श्रीमदनंतोस्य हरिः कारयिता मया ॥ संति ग्रंथसहस्राणि देशे देशे महांत्यपि । कोऽप्यस्य महिमा वेद्योभिर्ज्ञैर्जयति सर्व्वतः ॥

Colophon. इति श्रीमत्परमवैदिकश्रीमन्नागदेवभभट्टसूनुना श्रीमदनंतभट्टेन विरचिते विधानपारिजाते निबंधे द्वितीयः स्तवकः समाप्तः ॥ छ ॥ कुञ्जवसुशशि-शाके भावमंत्रे च वर्षे शमन अयनकाले हेमंतर्गौ तथैव । अवनितनुजवारे वैशाखशुक्ले नवम्यां गुरुचरणप्रसादाद्यादवेनाप्यलेखि ॥ १ ॥ अगस्तिगोत्रोद्भवकृष्णशर्म्मा तस्यात्मजो वै शिवशर्म्मनामा । तत्सूनु-रामोद्भवयादवस्य काश्यामलेखच्छिवतुष्टये च ॥ २ ॥ श्री ॥

विवरणम् । विधानपारिजातो नाम धर्म्मशास्त्रीयनिबन्धः श्रीमदनन्तभट्टविरचितः सुप्रसिद्धोऽयम् ।

---

**No 114** विधानपारिजातः । Vidhána Párijátah. Substance, country-made white paper, 22×4 inches Folia, 829 (of which fol. 170 is wanting) Lines, 10-11 in a page. Character, Nágara. Date, ? Appearance, old Prose. Generally correct Complete (except the fourth stavaka in which some folia are wanting at the end)

Another copy of the same work put together without order, the fifth stavaka being placed after the third instead of the fourth, which again is incomplete. There are mistakes also in the page marks.

End of the fifth stavaka. अथ नामसंकीर्त्तनकालः ॥ मार्कंडेय. ॥ चक्रिणं हरिनं चैव शार्ङ्गिणं गदिनं तथा । मोक्षार्थी प्रत्यवेन्द्रादीन्दिक्षु प्राच्यादिषु स्मरेत् । व्यवहारे जिनं चैव मत्स्यकूर्म्मौ जले स्मरेत् । आजिष्णुमनिलभये संग्रामे त्वपराजितम् ॥ नेत्रबाधे हृषीकेशमौषधे चाच्युतं जपेत् । गरुडध्वजा-नुस्मरणादापदोमुच्यते नरः ॥ ज्वर हृष्ट (?) शिरोरोगे विषवीर्य्यं च शाम्यति । यदनचत्रपीडासु देवबाधास्वीषु तत् ॥ दस्युवैरिनिरोधेषु व्याघ्रसिंहादिसंकटे । अन्धकारे तथा तीव्रनारसिंहेति कीर्त्तयेत् । उच्छिष्ट कीर्त्तयेद्विष्णुं प्रसुप्तो माधवं नर. । भोजने चैव गोविंदं सर्व्वत्र मधुसूदनम् ॥ नारायणं सर्व्वकालं क्षुतप्रस्खलनादिषु । स्नाने दाने-

र्थेने सोमे प्रणिपाते प्रदक्षिणे। कीर्त्तयेद्वासुदेवं च अनुक्तेष्वपि यादृशम्। आलोच्य काण्डशास्त्राणि विचार्य्यं च पुनः पुनः॥ इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा॥ सर्व्वाणि नामानि हि तस्य राजन् सर्व्वार्थ-सिद्धौ हि भवंति पुंसां तथा यथेष्टं खलु देवतानां सर्व्वेषु कार्य्येषु जपेषु भक्त्येति। अनेकेषु निबंधेषु यावानर्थं उदीरितः। स सर्व्वः संगृहीतोऽत्र विद्वज्जनमुदे मया॥ अंशा भागीरथी यस्य नागदेवात्मजः सुधीः। तेनानंतेन रचितः कालनिर्णयसंग्रहः। अनेन प्रीयतां देवो लक्ष्मीशः सर्व्वदा मम। यस्य प्रसादाद्युष्माकं सिद्धिर्भवति सर्व्वदा॥ अनेन ग्रंथदीपेन स्वसंदेहात्मकं तमः। निरस्य कर्म्म कुर्व्वन्तु निर्भया ज्ञानिर्णसदि॥

Colophon. इति श्रीमन्नागदेवभट्टात्मजेनानंतभट्टेन विरचिते विधानपारिजाताख्य-निबंधे कालविधानानि समाप्तानि॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

विवरणम्। पुस्तकेऽस्मिन् चतुर्थपञ्चमस्तबकौ विपर्य्यस्ताविव वर्त्तेते। चतुर्थस्तबकस्य कत्यन्तिमपत्राण्यपि न सन्ति॥

---

**No 115** विधानपारिजातः। Vidhána Párijátah. Substance, country-made white paper, 12 × 4 inches Folia, 500. Lines, 11 in a page. Character, Nágara. Date, ? *Appearance, very old, worn out, torn, and worm-eaten throughout.* Prose. Correct. Incomplete (up to a part of the fourth stavaka only).

A third copy of the same work.

विवरणमुक्तपूर्व्वम्।

---

**No 116**. विवादचन्द्रः। Viváda-chandrah Substance, country-made yellow paper, 18 × 5 inches. Folia, 68. Lines, 7-8 in a page Character, Bengali. Date, ? Appearance, very old, worn out, and torn. Prose. Generally correct. Complete.

Vivádachandra or the moon of disputes is a treatise on civil law written by Mahámahópádhyáya Misarú Miśra at the request of Lakhimá Deví, wife of king Chandra Siñha.

Beginning. ॐ नमो गणेशाय। वन्दे श्रीकण्ठवैकुण्ठावकुण्ठौ नतनन्दने। विघ्न-विच्छेदकुशलौ गिरिजाजलजापती॥ अभूदभूतप्रतिमल्लगन्धोराजा-

भवेशः किल सार्व्वभौमः। अत्याजयद्यो बहुभर्तृकत्वं दोषं भुवोऽपि प्रभुरप्रधामा। तस्मादनूनोजनि सूनुसारो श्रीमानुमासूनुसमान-सारः। राजोपजीव्योऽमरसिंहनामा ततो नृपोदर्पनरायणोभूत्। दर्पनरायणनृपतेः श्रीमद्धीरा महादेवी। अलभत सुनयं तनयं नरपति-गुणराशिपूरितं शूरम्॥ श्रीमल्लखिमा देवी तस्य चन्द्रसिंहनृपतेर्दयि तस्य। मिसरूमिश्रद्वारा रचयति विवादचन्द्राभिरामं॥ विवादे व्यव-हारे च व्यवस्था यस्य यादृशी निबन्धृभिः कृता साच लिख्यते हरिर्मुदे। तत्रादावृणादानस्थले व्यवस्था।

**End.** अतएव यो जातस्त्वनियुक्तायामेकेन बहुभिस्तथा अरिक्थभाजस्ते सर्वे बीजिनामेव ते सुता इति नारदस्मरणात्। असवर्णोढोत्पादितस्य सन्तानकारणत्वान्मुख्यत्वादौरस एव॥ अतएव संस्कृतायां भार्य्यायां स्वय-मुत्पादयेत्तु यं। तमौरसं विजानीयात् पुत्रं प्रथमकल्पितमिति सामान्यत एवाभिधानम्॥ स्वयमुत्पादितः। सुसंस्कृतायां स्वक्षेत्रे औरस इति गौतमवचनाच्च। बौधायनवचनन्तु सवर्णायामिति प्राशस्त्यपरमतएव न तस्य भागाधिक्यम्। न चैकमूलकत्वकल्पनालाघवाय सर्व्वेषां सव-र्णायां तात्पर्य्यम्। ब्राह्मणस्य क्षत्रियापुत्रादिषु नौरसत्वापत्तौ परि-गणनमुख्यत्वकल्पनालाघवाय सर्व्वेषां सवर्णायां व्यवहारायान्यथा विरो-धापत्तेरिति॥

**Colophon.** इति महामहोपाध्यायश्रीमिसरूमिश्रविरचितो विवादचन्द्रः समाप्तः॥

॥ * ॥ * ॥ * ॥ * ॥ * ॥ * ॥ * ॥

विवरणम्। विवादचन्द्रनामधेयो धर्म्मशास्त्रीयनिबन्धोऽयं महामहोपाध्यायश्रीमिसरूमि-श्रविरचितः।

---

**No. 117.** विवादचन्द्रः। Vivâda-chandrah. Substance, country-made white paper, 19 x 5 inches Folia, 73 Lines, 10 in a page Character, Nágara. Date, 1879. Appearance, old, and worm-eaten throughout. Prose. Correct. Complete

Another copy of the same work.

**Colophon.** इति श्रीमहामहोपाध्यायमिसरूमिश्रविरचितो विवादचन्द्रः समाप्तिमग-मत् नमो भगवते वासुदेवाय श्रीकाशिविश्वेश्वराय नमः संवत् १८७९॥

विवरणम्पूर्व्ववत्।

---

**No 118.** व्यवस्थार्णवः । Vyavasthárṇavaḥ. Substance, country-made yellow paper, 18×3½ inches. Folia, 83. Lines, 5 in a page, having a blank space, about half an inch square, in the middle. *Character, Bengali. Date,* ? *Appearance, fresh. Prose. Generally* correct. Complete.

A digest of the Hindu Dharma Śástras in general. Anonymous.

*Beginning.* ॐ नमो गणेशाय । मलादौ तिथिव्यवस्था । तिथिस्तु द्वादशांशचन्द्रभोगोपलक्षितः कालविशेषः मासस्तु शुक्लप्रतिपदादिदर्शान्तो मुख्यचान्द्रमासपदशक्यः । कृष्णप्रतिपदादिपौर्णमास्यन्तो गौणचान्द्रः एकराशिवच्छेदकः सूर्य्यभोगावच्छिन्नकालः सौरः त्रिंशत्तिथिभिश्चान्द्रः सावनः त्रिंशद्दहोरात्रः सौरसावनः विधो (?) मासः तत्र मुख्यचान्द्रश्चतुर्विधः प्रकृतः चयमासो मलमासोऽभानुलङ्घितश्चेति शुक्लप्रतिपदादिदर्शान्तोरविसंक्रान्तिवर्जितः स च वैशाखादिषट्के चोत्पत्तिकः कार्त्तिकादिषट्के कादाचित्कोनिष्टस्तत् वैशाखादिषट्के कार्त्तिकादिषट्के च तयोरेकाब्दे वैशाखादिषट्कोद्भवस्य मलत्वं कार्त्तिकादिषट्कोद्भवस्य भानुलङ्घितत्वं कार्त्तिकादिषट्क एव तयोः सम्भवे पूर्वस्य मलत्वं परस्य भानुलङ्घितत्वं ।

**End.** अथ सुवर्णस्तेयप्रायश्चित्तं ॥ तत्र ब्राह्मणस्वामिकाशीतिरतिपरिमित हेमापहरणे महापातकं । क्षत्रियादि स्वामिकतादृशहरणे तूपपातकं । तत्र प्रायश्चित्तं यथाज्ञानतोमरणमेव सर्व्वेषां अज्ञानतो द्वादशवार्षिकं वैश्यस्य षाड्वार्षिकं शूद्रस्य त्रैवार्षिकं अशीतिरत्तिकान्यूने भागहारक्रमेण प्रायश्चित्ते । * । अथ गुर्व्वङ्गनागमनप्रायश्चित्तं ज्ञानतः सर्व्ववर्णोत्तमवर्णविमातृगमने सर्व्वेषां शूद्रस्य ब्राह्मणीगमने च मरणं चतुर्विंशतिवार्षिकं वा अज्ञानकृते तु द्वादशवार्षिकं ब्राह्मणस्य क्षत्रियस्य नववार्षिकं वैश्यस्य षाड्वार्षिकं ॥ * ।

**Colophon.** इति व्यवहार्णवसमाप्तम् । (र्णवः समाप्तः ?)

विवरणम् । नानाविधव्यवस्थाविषयकः संग्रहनिबन्धोऽयम् ।

---

**No 119.** व्यवस्थानिर्णयः । Vyávasthánirṇayaḥ Substance, country-made white paper, 17×4 inches. Folia, 71. Lines, 8–10 in a page. Character, Nágara. Date, Śaka 1683. Appearance, old, worm-eaten throughout Prose. Not correct. Complete.

A digest of the Hindu Dharma S'ástras, treating of Tithi, Saṅkránti, Aśaucha, (impurity), Dravyaśuddhi (purification of things), Adhikárin (fit person), Práyaśchitta (penance), Udváha (marriage), &c. Anonymous.

Beginning. श्रीगणेशाय नमः ॥ तिथिसंक्रान्तिशौचेषु द्रव्यशुद्ध्यधिकारिषु । प्रायश्चित्तोद्वाहदायेष्वदि (पि?) व्यवस्थोऽत्र निर्णयः ॥ तत्रादौ तिथिव्यवस्था ॥ तिथिस्तु राशित्रयोदशांशयन्द्रभोगोपलक्षितः कालविशेषः यथा सूर्यसिद्धान्तः अर्काद्विनिःसृतः प्राची यद्यात्यहरहः शशी भागैर्द्वादशभिस्तस्यात् तिथिश्चान्द्रमसं दिनं ॥ अयमर्थः सूर्याचंद्रमसोर्यः परः सन्निकर्षः सामावास्येति ॥ गोभिलसूत्रादमावास्यायां सूर्याचंद्रमसोरेकांशावच्छेदेनैकराशावस्थानं तदनंतरं चंद्रस्य गतिशैघ्र्यात् त्रिंशांशकलया राशिभोग इत्यभिधीयते । इति विष्णुधर्मोत्तरोक्तम् ।

End. अथ यदि एकः सोदरः अन्योऽसंसृष्टस्तदाऽसंसृष्टस्यैवाधिकारः यदि च सोदरवैमात्रेयोर्संसृष्टो(?) तदासंसृष्टस्य सोदरस्यैवाधिकारः संसृष्टत्वन्तु विभागानंतरं यत्तव धनं तन्मम धनं यन्मम धनं तत्तवापीति प्रीत्यापि(?)भ्रातृपितृव्यभ्रातृपुत्राणामेव पुनरेकत्रतयावस्थानं तत्र तेषामेव संसृष्टत्वेनाधिकारो नान्येषां तथा विश्ववातिसिकानामिति संसृष्टानां मध्ये यदि कश्चित् विद्याशौर्यादिना धनं प्राप्नोति तदा तेषां विभागकाले तस्य तत्र द्वंशित्वं शेषाणामेकैकांशः संसृष्टिनां पुनर्विभागे सर्वेषां समांशिता तत्र ज्येष्ठं भाक्ति अत्र भ्रातृभिरविभक्तस्यावरे पुत्रांशे सोदरसोदरयोरेकदाधिकारः स्थावरातिरिक्तस्तु सोदरस्यैव विभक्तस्यावरे तु सोदरस्यैवाधिकारः तदभावे सोदरपुत्रस्य तदभावे वैमात्रेयस्य अत्रापि संसृष्टत्वेन विशेषो बोध्यः तदभावे सकुल्यस्य अत्र प्रथमा दौहित्रान्तपितृसंतानस्य तदभावे पितामहस्य तदभावे पितामह्याः तदभावे दौहित्रान्तपितामहसंतानस्य ततः प्रपितामहस्य ततः प्रपितामह्याः ततः प्रपितामहदौहित्रान्तसंतानस्य ततो मातामहस्य ततो मातुलस्य ततः प्रभृतिपुरुषत्रयस्याधस्तनस्य एवं प्रपितामहोर्द्धतमपुरुषत्रयं न विरुद्धमिति ॥ शाकेऽग्निकुंजरखरानन(षडानन?) शीतभानौ श्रीराधराघवन्नृपति(?) ॥

Colophon ॥ समाप्तोऽयं व्यवस्थानिर्णयाख्योग्रंथः ॥ संपूर्णं ॥ श्रीरामकृष्णाय नमोनमस्ते ॥ ॥

विवरणम् । व्यवस्थानिर्णयोनाम नानाविधनिषध्यादिघटितव्यवस्थाविषयकः संग्रहनिबन्धो ऽयम् ।

---

No. 120. व्यवस्थासारसंग्रहः । Vyávasthasára Sañgrahaḥ. Substance, foolscap paper, 18×3½ inches. Folia, 235. Lines, 8-9 in a page. Character, Bengali. Date, ? Appearance, old, slightly torn in the margin. Prose. Generally correct. Complete.

A work on the same subject by Náráyana Sarman.

**Beginning.** ॐ नमो दुर्गायै ॥ नत्वा कृष्णपदद्वन्द्वं श्रीनारायणशर्म्मणा क्रियतेऽति-प्रयत्नेन व्यवस्थासारसंग्रहः ॥ नानाऽगमश्रमान् ग्रन्थान् विविधान् बहुधा-मया । आलोच्य सारमाकृष्य संचिय रच्यते विधिः । व्यवस्थास्तु किय-त्योऽत्र उपयुक्तविशेषतः अन्योन्याश्रयान् विधेया बाहुल्याद्वया उपेक्षिताः इदानीमनुपयुक्तस्य त्यागः साध्यार्थकस्य (शास्त्रार्थकस्य?) आचायते यन्मयतेद्धि(?)सुधीभिः क्षम्यतामिति ॥ अथ प्रातःकृत्यं ॥ तत्र दक्षः प्रात-रुत्थाय कर्त्तव्यं यद्द्विजेन दिने दिने तत्सर्व्वं संप्रवक्ष्यामि द्विजानामु-पकारकं ।

**End.** पितामहः कारयेदायसं पात्रं ताम्रं वा षोड़शाङ्गुलं चतुरङ्गुलशतन्तु मृन्मयं वाथ मण्डलं पूरयेद्दृशनतैलाभ्यां विंशत्या तु पणैस्तत्तत्सुवर्णमाषकं तस्मिन् सुतप्ते निक्षिपेत् ततः कल्यान्तरमाद्य स एव मर्थ्यं हस्तमुपादाय तदग्नौ तापयेच्छुचिः । सौवर्णीं राजतीं ताम्रीमायसीञ्च सुशोधिताम् सलिलेन सकृद्धौतां प्रक्षिपेत्तत्र मुद्रिकां । अन्वीक्षितरहाद्यो न नखस्पर्श-गोचरे परीक्षेतान्नपात्रेण चुचुकारं सधोमकं अङ्गुष्ठाङ्गुष्ठियोगेनोद्धरेत्तत्र मुद्रिकां । कराग्रं योनौ धूनुयादिस्फोटो वा न जायते ॥ शुद्धतेऽति-धर्म्मेण पितामहवचो यथा । अथ धर्म्मजविधिः । राजतं कारयेद्धर्म्म-मधर्म्मं सीसकायसं ॥ लिखेद्भूर्ज्जे पटेवापि धर्म्माधर्म्मौ सितासितौ । अस्या-नारमाद्य बृहस्पतिः । पत्रद्वये लेखनीयौ सितासितौ श्रीवदामादिवैसं-त्त्वैर्गोपद्याद्वैव सामभिः आमन्त्र्य पूजयेद्गन्धैः कुसुमैश्च सितासितैः । अभ्युक्ष्य पञ्चगव्येन कृत्पिण्डान्तरितौ समौ कृत्वा तत्र भवे कुम्भे स्थाप्यौ-ऽनुपलक्षितौ ततः कुम्भात्पिण्डमेकं गृह्णीयादविलम्बितः । धर्म्मे गृहीते शुद्धः स्यात् अधर्म्मेण स हीयते ॥ * ॥

**Colophon.** इति व्यवस्थासारे विवादादिपरीक्षाकरबव्यवस्थापरिच्छेदः इति श्रीना-रायणोशर्म्मणा (नारायणशर्म्मणा?) विरचितं व्यवस्थासारसंग्रहपुस्तकं समाप्तं ॥ • ॥

विवरणम् । अनेकविषयकव्यवहारविषयवस्त्वाभियोगप्रतिपदनिबन्धोऽयं श्रीनारायणशर्म्मविरचितः ॥

---

No. 121. विवादचिन्तामणिः। Vivâda-chintâmaṇiḥ. Substance, country-made white paper, 11 × 4½ inches. Folia, 89. Lines, 8–10 in a page. Character, Nâgara. Date, Samvat 1884. Appearance, old, slightly worm-eaten throughout. Prose. Generally correct. Complete.

A work on disputed points of Hindu law by Mahâmahopâdhyâya Vâchaspati Miśra. This is a famous work, and is respected as an authority by later writers.

**Beginning.** श्रीगणेशाय नमः॥ क्षीराब्धेरुत्थितानां त्रिदशपरिषदि प्रोल्लसद्भूषणभंगंगीकुर्व्वन् कटाक्षैस्त्रिभुवनजननीं क्रीडया नम्रमौलिः देवः पायादपायात् कुसुमशरपरीरम्भसंजातभावः सद्यः स्विद्यन् भरेण स्मितकमलमुखीमाददानः करेण श्रीकृष्णाकल्पद्रुमपारिजातरत्नाकरादीनवलोक्य यत्नात् वाचस्पतिः श्रीपतिनम्रमौलिर्विवादचिंतामणिमातनोति। अथ विवादपदानि॥ तत्र मनुः। तेषामाद्यमृणादानं निःक्षेपः स्वामिविक्रयः। सम्भूय च समुत्थानं दत्तस्यानपकर्म्म च॥ वेतनस्यैव चादानं संविदश्च व्यतिक्रमः। क्रयविक्रयानुशयो विवादः स्वामिपालयोः॥ सीमाविवादधर्म्मश्च पारुष्ये दंडवाचिके। स्तेयं च साहसं चैव स्त्रीसंग्रहणमेव च॥ स्त्रीपुंधर्म्मोविभागश्च द्यूतमाह्वय (?) एव च। पदान्यष्टादशैतानि व्यवहारस्थिताविह॥

**End.** तथा यदि न प्रणयेद्राजा दंडं दण्ड्येष्वतंद्रितः। शूले मत्स्यानिवापक्ष्यन् दुर्बलान् बलवत्तराः। अद्यात् काकः पुरोडाशं श्वा वलिह्याद्धविस्तथा स्वाम्यं च न स्यात् कस्मिंश्चित् प्रवर्त्तेताधरोत्तरं दंडेषु दंडार्हेषु अधरोत्तरं उत्कर्षापकर्षवैपरीत्यं यथा। सर्व्वो दंडजितो लोको दुर्लभो हि नरः शुचिः। दंडस्य हि भयात् सर्व्वं जगद्भोगाय कल्पते॥ देवदानवगंधर्व्वरक्षांसि पतगोरगाः। तेऽपि भोगाय कल्पंते दंडेनैव निपीड़िताः॥ दुष्येयुः सर्व्ववर्णाश्च भिद्येरन् सर्व्वसेतवः। सर्व्वलोकप्रकोपश्च भवेद्दंडस्य विभ्रमात्॥ सर्व्वतोऽधर्म्मषड्भागो भवत्यस्य ह्यरक्षतः। यदधीते यद्यजते यद्ददाति यदर्च्चति॥ तस्य षड्भागभाग्राजा सम्यग्भवति रक्षणात्। रक्षन् धर्म्मेण भूतानि राजा वध्यांश्च घातयन्। यजतेऽहरहर्यज्ञैः सहस्रशतदक्षिणैः। तदर्थमित्यादि राजप्रयोजनार्थम्। समीक्ष्येति शास्त्रानुसारेण स्खलते. श्रेयसे अन्यथा तु प्रवे-

पुरनिष्टाय स भवेदित्यर्थः विधमोऽन्यथाकरणमकरणं च राजानं भूपं तेन भूपस्यैतत्प्रणयने इत्युक्तं कामात्मेत्यादि प्रकृते यदर्थः बांधवोऽन्नपुत्रः । तथा । यस्य स्तेनः पुरे नास्ति नान्यस्त्रीगो न दुष्टवाक् । न साहसिकदंडघ्नः स राजा शक्रलोकभाक् । एतेषां निग्रहे राज्ञः पंचानां विषये स्वके । साम्राज्यकृतसाजात्ये लोके चैव यशस्करः ।

Colophon. इति महामहोपाध्यायमिश्रश्रीवाचस्पतिविरचितो विवादचिंतामणिः समाप्तः शुभमस्तु सम्वत् १८८४ मीतीजेठ सुदी ५ ॥ लीपा (लिखा ?) काशीमध्ये गंगातटे । ॥

विवरणम् । वाचस्पतिमिश्रविरचितोविवादचिन्तामणिर्नाम व्यवहारशास्त्रीयनिबन्धोऽयं सुप्रसिद्धः ।

---

No 122 विवादताण्डवः । Viváda-tándavah. Substance, foolscap paper, 16 x 10 inches, bound in book form. Pages, 274. Lines, 15–22 in a page. Character, Nágara. Date, Samvat 1234. Appearance, old, and worm-eaten throughout. Prose. Generally correct. Complete.

A work treating of the same subject by Kamalákara Bhaṭṭa, son of Rámakrishna Bhaṭṭa,* and grandson of Viśveśvara Bhaṭṭa.

Beginning. श्रीरामकृष्णपितरं नत्वोमाख्यां च मातरम् । कमलाकरसंज्ञेन व्यवहारो निरूप्यते ॥ १ ॥ तत्रादौ सभा । मदनरत्ने बृहस्पतिः । दुर्गमध्ये गृहं कुर्य्याज्जलवृक्षान्वितं नृपः । प्राग्दिशि प्राङ्मुखीं तस्य लक्षण्यां कल्पयेत् सभाम् । माल्यधूपासनोपेतां बीजरत्नसमन्विताम् । प्रतिमालेख्यदेवैश्च युक्तामग्न्यम्बुना तथा ॥ मनुः । व्यवहारान् दिदृक्षुस्तु ब्राह्मणैः सह पार्थिवः । मन्त्रज्ञैर्(?)मंत्रिभिश्चैव विनीतः प्रविशे(शे ?)त् सभाम् ॥ तत्रासीनः स्थितो वापि पाणिमुद्यम्य (मुत्थाप्य ?) दक्षिणम् । विनीतवेशाभरणः पश्येत् कार्य्याणि कर्म्मिणाम् । पाणिमित्यभयं दत्वेत्यर्थः ॥ याज्ञवल्क्यः । व्यवहारान् नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह । धर्म्मशास्त्रानुसारेण क्रोधलोभविवर्ज्जितः । श्रुताध्ययनसम्पन्ना धर्म्मज्ञाः सत्यवादिनः । राज्ञा सभासदः कार्य्याः रिपौ मित्रे च

---

* In the colophon he is mentioned as a son of Náráyaṇa Bhatta

थे सभाः । ये कपिञ्जलन्यायाः । तस्मिन् देशे निषीदन्ति विप्रा वेद-विदस्त्रयः । राज्ञश्चाधिकृतोविद्वान् ब्राह्मणस्तां सभां विदुरिति मनुक्तेः ।

End. अन्यायगृहीतधने दण्डमाह याज्ञवल्क्यः । अन्यायेन तु यो दण्डो गृहीतो वरुणाय तम् । निवेद्य दद्यात् विप्रेभ्यः स्वयं त्रिंशद्गुणीकृतम् । एवं धर्मस्वरूपे फलमाह बृहस्पतिः ॥ धर्मशास्त्रानुमानेन प्रकुर्वन् पाप-निर्णयम् । विप्रस्येव यशो राज्यं राजा प्राप्नोति निश्चयम् ॥ तर्के दुस्तर्कमेधः फणिपतिभणिती पाणिनीये प्रपञ्चे । न्याये प्रायः प्रयत्नः प्रकटितपटिमा भाट्टशास्त्रप्रघट्टे । प्राज्ञः प्राभाकरीये पथि मथिततदुरन्ता-न्तवेदान्तसिंधुः ॥ श्रौते साहित्यमार्गे प्रवरतरगतिर्धर्मशास्त्रेषु यश्च । येनाकारि प्रौढवार्त्तिकस्य टीका चान्या विंशतिर्ग्रन्थमाला । श्रीरामा-र्पिंता निर्णयेषु सिंधुः शास्त्रे तत्त्वकौतूहले च । रामकृष्णसुते-नाथ कमलाकरशर्मणा । तेन धर्मः कृतो योऽत्र तेन प्रीतोऽस्तु राघवः ।

। ० ॥ ० ॥ ० ॥ ० ॥

Colophon इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणजगद्गुरुश्रीरामेश्वरभट्टसूरि-सूनुनारायणभट्टात्मजश्रीकमलाकरभट्टकृतं विवादताण्डवं समाप्तम् । श्रीराम ॥ शुभमस्तु (?) । सन१२६० सोमवार १८ भाद्र ॥

विवरणम् । विवादताण्डवं नाम श्रीकमलाकरभट्टविरचितोव्यवहारविषयकोऽयं निबन्धः ।

---

**No 123** विवादताण्डवम् । Vivádatáṇḍavam. Substance, country-made white paper, 17 × 4 inches Folia, 137. Lines, 9 in a page. Character, Nágara. Date, Samvat 1884. Appearance, not old. Prose. Not correct. Complete.

Another copy of the same work.

विवरणमुक्तपूर्व्वम् ।

---

**No. 124.** विवादभङ्गार्णवः । Vivádabhangárnavah. Substance, foolscap paper, 12 × 5 inches, bound in book form. Folia, 244. Lines, 21 in a page. Character, Nágara. Date, ? Appearance, not old. Prose. Generally correct Incomplete ( only a part of the work).

The Vivádabhangárnava or the ocean of decisions on disputes relating to Hindu civil law by Jagannátha Tarkapancháanana of Triveni in Bengal. The work is divided into eighteen chapters,

called Dvipas or islands, and each chapter into sections called Ratnas. The codex under notice has two chapters or Dvipas only. As a recent work well known to European *scholars, it need not be noticed in extenso.*

**Beginning.** देवेशभूतेशगणेशविघ्नराजान् नमस्कृत्य गिरीन्द्रकन्यां गुरून् मुनीन् प्रत्यक्षतोविमान्यान् भूपाज्ञया ग्रंथमिमं करोमि ॥ १ ॥ विवादभङ्गार्णव-नामधेयं वैषम्ययुक्तं बहुविस्तृतं च सदीपरत्नं स्वपथीरहृद्यं रादिक्लंगन्नाय इति प्रसिद्धः क्व मे बुद्धिजीर्णनौका क्व शास्त्रं दुर्गमाम्बुधिः प्रभवनुग्रह एवैतत् तरणे शरणं तथा २ राधाकान्तः सुविद्योविमलहृदमतिः श्रीगुरुः सप्रसादः श्रीरामोमोहनांतो निधिरपि परशोरामतः श्रीघनश्यामान्तः श्रीशगंगाधर इति विदितोयत्नवान् शिष्यवर्गः कुर्य्यात् ततुकार्य्यसिद्धिं स्वपदुधरमश्चौ निचयो मे विशंकः ३ पोतयानशरणः किल सिंधुं निर्भया बहु तरंति सुदुर्गम् दीर्घमद्गुणधरायसमेताः स्वानुकूलपवनेन-नियुक्ताः ४ व्याख्यातश्च तथा पूर्व्वैः ग्रंथकृद्भिः सुबुद्धिभिः आलोच्य तेषां वाक्यानि गूढार्थानि मनीषया गुरूपदेशात् सर्व्वं तत् सुविचिंत्य लिख्यते अथ अपादानं स्वत्वं देयमदेयंच येन यत्र यथा भवेत् दानमस्वधर्मंच अपादानमिति स्मृतं ।

**End.** अस्वामिविक्रयप्रकरणे इदमवधेयं। यथाप्यमेव प्रथमस्वामिना सम्बन्धिना विक्रीतं तत्र न षट्शतपणदण्डः विषमशिष्टतापत्तेः यत्र चौरस्य षट्-शतपणदण्डस्तदवधि तत्रोतरन्यूनत्वाय अधिकत्वाय वा इत्यत्र विनिगमनाविरह इति वाच्यं सम्बन्धिना चौरा इत्येना न्यूनत्वस्यैव युक्तत्वादिति विभावनीयमिति दिक् । अस्वामिविक्रयः समाप्तः ।

**Colophon.** परिच्छेदातीतानिखिलविद्याधारापरिश्रीलनविमलीकृतमानसश्रीकृष्णप्रसन्न-काञ्चीसमस्तसंलग्नविवेकीनिश्चयश्रीरुद्रतर्कवागीशात्मजश्रीजगन्नाथतर्कपञ्चाननभट्टाचार्य्यकृते विवादभङ्गार्णवे निःक्षेपादिद्वीपे द्वितीये अतिश्रीमान्विनेन्द्रनीलरत्नं चतुर्थं । । * । * । समाप्तोयं ग्रन्थः । * ।
* । * । * । * । * । * ।

विवरणम् । महामहोपाध्यायविद्वेचोवाचस्पतिश्रीजगन्नाथतर्कपञ्चाननविरचितोविवादभङ्गार्णवो नाम व्यवहारविषयकोऽयं निबन्धः ।

---

**No. 125.** विवादभङ्गार्णवः। Vivádabhangárṇavaḥ. Substance, foolscap paper, 12×5 inches, bound in book form. Pages, 313. Lines, 19-20 in a page. Character, Nágara. Date, ? Appearance, very old. Prose. Generally correct. Incomplete (a part only).

Another part of the same work containing Dáyabhága or the law of inheritance.

**Beginning.** अथ दायभागः। तत्र नारदः॥ विभागोऽर्थस्य पित्र्यस्य पुत्रैर्यत्र प्रकल्प्यते। दायभाग इति प्रोक्तं तद्विवादपदं बुधैः। यत्र यस्मिन् व्यवहारपदे प्रकल्प्यते क्रियते इति॥

**End.** ( लुप्ताचरम् )।

**Colophon.** ( लुप्ताचरम् )।

विवरणम्। पूर्व्वोल्लिखितस्य ग्रन्थस्य दायभागोनामांशविशेषोऽसम्पूर्णः।

---

**No. 126** विवादभङ्गार्णवः। Vivádabhangarnavaḥ. Substance, foolscap paper, 12×5 inches, bound in book form Pages, 346 Lines, 18-21 in a page. Character, Nágara. Date, ? Appearance, not old. Prose. Generally correct. Incomplete (a part only).

The last part of the Dáyabhága.

**End.** जीमूतवाहनादयस्तु कथंचिदपि स्त्रीमात्रसंक्रान्ते धनेऽस्वातन्त्र्यमाहुः एवं च अपुत्रास्यन्नं भर्तुरित्यत्र अपुत्रेतिसंक्रान्तधनाभिप्रायेण तस्मात् भर्तृदत्तमपि स्थावरं दायादैरेव लब्धव्यं इति अथ प्राप्तं शिल्पैस्तु यद्वित्तं प्रीत्या चैव तदन्यतः भर्त्तुः स्वाम्यं भवेत्तत्र शेषं तु स्त्रीधनं स्मृतमिति कात्यायनवचनात् सधवयार्ज्जिते भर्त्तुः स्वातन्त्र्यं भार्य्यापुत्रश्च दासश्च त्रय एवाधनाः स्मृता इति मनुवचने पुत्रपदस्य लिंगाविवक्षया पुत्रदुहित्रुभयपरत्वेनाविवाहितयाऽर्ज्जिते पितुः स्वामित्वेऽपि विधवयार्ज्जिते धने कीदृशी व्यवस्था न च तत्भातुरेव तत्प्रतिपक्षस्य भर्त्तुरभावेन विवादासंभवात् इति वाच्यं पितृभ्यां चैव यद्दत्तमित्यनेन पितृदत्तधन एव भ्रात्रधिकारकथनादिति चेन्न प्रतिपक्षाभावे भर्तृमातृभ्रातृणां सर्व्वेषामधिकारस्य पूर्व्वमुक्तत्वात् एवं ये तु दुहितृसंक्रान्तपितृधने दुहितृमरणानन्तरं दुहितृभर्त्राधिकारिणामधिकारं वदन्ति तन्मते संक्रान्तधनमपि स्त्रीधनमेव तत्राप्येषा व्यवस्था स्त्रीधनस्य षड्विधत्वकथनं निबन्धकारैर्न-

संख्यावच्छेदपरत्वेन व्यवस्थापितं नियमपरत्वेपि नियतस्वातन्त्र्यविषयधनपरं तथाहि विवाहे दत्तं पितृधनं दुहितरि संक्रान्तमपि भर्तृस्वामिकमेव भवति षड्विधेतरधने भर्तृस्वाम्यप्रतिपादनात् भार्य्यापुत्रश्चेत्यादिवचनेन स्त्रीधनन्तु न भार्य्यापुत्रश्चेत्यादिवचनस्य विषयः स्वातंत्र्यवचनेन वाधितत्वात् एवं च विवाहात् पूर्व्वं कतिपयदिवसं यावत् स्वातंत्र्येऽपि नास्य पारिभाषिकस्त्रीधनत्वं एवमर्जितेपि क्वचित् भर्तृस्वाम्यात् विधवयार्जिते कदाचित् स्वातंत्र्यसत्त्वेपि अर्जितसामान्ये स्वातन्त्र्याभावात् नियतस्वातन्त्र्याभावः । अत्र च सधवयार्जितधने पतिसत्त्वेपि पत्नीपरत्वं तत्स्वामित्वमिति भर्तुरुपरमे तथैव तच्छोत्वं तदुपरमेतु भर्तुरुत्तराधिकारिभिरेव ग्राह्यं नात्र स्त्रीधनाधिकारिणामधिकार इति यदि वादौ भर्त्ता म्रियते तदा तद्धनं अर्जिकायामेव पर्य्यवस्यति तदा तत् स्त्रीधनाधिकारिभिर्ग्राह्यं स्यादौ भार्य्यापरमे तद्धनं भर्तृमात्रस्वामिकं भवतीति तदुत्तराधिकारिभिरेव ग्राह्यं जीवद्विभागे तु पतिपत्नीविभागवादिमते द्वाभ्यां विभक्तव्यं न पुत्रास्तदंशं प्राप्नुवन्ति वचनाभावात् एतच्च स्वयर्जितधने मुनिभिर्व्वस्थान्तरालिखनात् भर्तृस्वाम्यलिखनात् पुत्रार्जितधने पितापुत्रयोर्भागदर्शनाच्चावगम्यते इति केचित् जीमूतवाहनस्मार्त्तादिमते तु सधवयार्जितेपि पत्न्या एव स्वामित्वं किंतु सति पत्यौ न स्वातन्त्र्यमत्र एवाधनाः कृता इति मनुवचने अप्राशस्त्यं तदर्थं तथा च अप्रशस्तधनाः अप्रशस्तत्वंच स्वातंत्र्याभावादेव एवं च तद्धनेपि स्त्रीधनाधिकारिणामेवाधिकारो भवतीति बोद्धव्यं एवं दुहितृसंक्रान्तपितृधनेपि तथा भवतीत्यपि यद्यपि सुवचं तथापि जीमूतवाहनस्मार्त्ताभ्यां तत्र पितृरुत्तराधिकार्य्यधिकारस्यैव कथनात्तत्राभिप्रायद्विविच्यते इत्यवधेयं अथ स्वसंक्रान्तं मातृस्त्रीधनं दुहिता स्वेच्छया यस्मै कस्मैचित् दद्यात्तदुपरमेपि दुहितृजाभावादिरपि प्राप्नुयात् न च पुंधनवत् स्त्रीधनेपि दुहितुर्यावज्जीवं भोग एवानुमत इति वाच्यं जीमूतवाहनेनालिखनात् युक्त्यभावाच्चेत्यवधेयं ।

Colophon परिच्छेदातीताखिलविद्याधारादरिक्रीडनविनोदनपादपद्मभृतः-जाह्नवीमलदहनश्रीरहनकवागीशभट्टाचार्य्यात्मजजगन्नाथतर्कपंचाननकृते विवादभंगार्णवे पंचमे दायभागदीपेऽतिरोभान्निवेन्द्रनीरूपणं नाम ॥ ॥ समाप्तोऽयं पंचमदीपः ॥ ० ॥ ० ॥ ० ॥ ० ॥ ० ॥ ० ॥ ०॥

विवरणम् । महामहोपाध्यायजगन्नाथतर्कपञ्चाननकृतविवादार्णवभङ्गाभिधनिबन्धस्य दायभागाख्यांशविशेषः ।

**No. 127.** विवादभङ्गार्णवः । Vivádabhangárṇavaḥ. Substance, foolscap paper, 11 × 4⅓ inches. Pages, 166. Lines, 18 in a page. Character, Nágara. Date, ? Appearance, rather old. Prose. Generally correct. Incomplete (a fragment only).

A fragment of the above-mentioned work treating of Samvitvyatikrama or breach of contract between master and servant, &c.

Beginning अथ संविद्व्यतिक्रमः यद्यपि स्वामिपालविवादे वेतनापक्रिया वर्ण्यते तत्र एव हृद्दस्पतिना वेतनादानानन्तरमेव तदभिहितं ॥ अतोरत्नाकरादिष्वपि आदौ स्वामिपालविवादोलिखितस्तथापि मनुना वेतनापकर्म्मानन्तरमेव सम्विद्व्यतिक्रमोनिरूपित इति स एवादौ लिख्यते ॥

End ( नास्ति ) ।

Colophon ( नास्ति ) ।

विवरणम् । पूर्व्वोल्लिखितस्य विवादभङ्गार्णवाभिधेयनिबन्धस्य संविद्व्यतिक्रमोनामांशविशेषोऽसम्पूर्णः ।

---

**No 128** विवादभङ्गार्णवः । Vivádabhangárnavah. Substance, country-made yellow paper, 7 × 5½ inches. Folia, 45. Lines, 25 in a page Character, Nágara Date, ? Appearance, old. Prose. Generally correct. Incomplete.

Another incomplete part of the above-mentioned work under the name of Sambhúya-samutthána or a treatise on co-operative trade.

Beginning. अथ संभूयसमुत्थानं ॥ तदाह नारदः ॥ वणिक्प्रभृतयो यत्र कर्म्मसंभूय कुर्व्वते ॥ तत्सम्भूयसमुत्थानं व्यवहारपदं स्मृतं ॥ संभूयधनमेलकं कृत्वेति रत्नाकरः संभूय मिलित्वा संशब्दयोगेन भूधातोर्मिलनबोधनात् तच्च मिलनं धनद्वारा शरीरचेष्टाद्वारा वा यथा पञ्चवणिजः स्वस्य धनानि एकत्र कृत्वा द्रव्यक्रयादिना वाणिज्यं कुर्व्वन्ति पञ्च वा भृतिभुजः एकवाक्येन कस्यचिद्दायस्य भित्तिसमवधानं स्वीकुर्व्वन्ति तथा च धनमेलकं कृत्वा इति रत्नाकरपाठ उपलक्षणपरः इति ध्येयम् । वचनार्थस्य वणिक्प्रभृतय इति आद्यार्थकप्रभृतिशब्देन भृतिभुगादीनां ग्रहणं कर्म्म वाणि

ष्यभिमितिनिष्पादनयाजनादिसंभूयसमचेष्टादिद्वारा मिलित्वा यत्र यत् सुपांशुप्। तथा च धनादिद्वारा मिलित्वानेकेषां यदि कर्म्मकरणं तत्संभूयसमुत्थानम् समुत्पूर्व्वस्थादादातोः कर्म्मकरणप्रत्यायनात् इति फलितं।

End नास्ति।

Colophon. नास्ति।

विवरणम्। पूर्व्वोल्लिखितस्य निबन्धस्य संभूयसमुत्थानं नामांशविशेषः, असंपूर्णः।

---

No 129. विवादरत्नाकरः। Vivádaratnákaraḥ. Substance, country-made yellow paper, 14×5 inches, bound in book form. Pages, 369. Lines, 21-23 in a page. Character, Bengali. Date* ? Appearance, old, slightly worm-eaten throughout, and written by different hands. Prose. Generally correct. Complete.

A digest of civil law under the name of Vivádaratnákara by Chandeśvara, complete in one hundred and one chapters called Taraṅgas. It has been published under the auspices of the Asiatic Society, Bengal.

Beginning. ॐ नमो नारायणाय। कुसुमशरविलासे भङ्गुरस्यापि पुत्रीकरतलवलयस्य स्मागतस्यार्द्धमेकं। निजमिव शशिखण्डं मन्यमानस्य शम्भोः भवतु च विवादः कान्तया कौतुकाय॥१॥ जटायां वद्धायां मदनजयिना विश्वपतिना विवादं जातं तद्धनविभजने तनययोः। परिच्छिन्दन् प्रज्ञा गणपतिविशाखौ नियमयन् भुवे दायादाय व्यवहृतिविपर्यिद्भवतु वः॥२॥ श्रीचण्डेश्वरमन्त्रिणामतिमतानेन प्रसन्नात्मना नेपालाखिलभूमिपालजयिना धर्म्मेन्दुदुग्धाम्बिना बागवत्याः सरित्तटे सुरधुनीसाम्यं दधत्याः शुचौ मार्गे मासि यथोक्तपुण्यसमये दत्तस्तुलापूरुषः॥३॥ घोरश्रीरविवादवारिधिजले निर्म्मज्जतामुद्धृतिं कुर्व्वन् पोत इवोत्तमद्गुणततं कीर्त्तिं परामश्नुते। मीमांसानयनो विचारचतुरो मन्त्रीन्द्रचण्डेश्वर। स श्रीमान् परमत्र वादविषयं प्रणौति रत्नाकरम्॥४॥ श्रीमान् विपद्दुर्गनिपातुकानामुद्धारसेतुकृतनिर्णयरत्नपुण्यः चण्डेश्वरः सचिवरत्नमिमं विवाद-

---

* At the end is given a date, 1266, S'aka era, but this has no connection with the work.

रत्नाकरं रचयति श्रुतिशास्त्रविज्ञः ॥ ५ ॥ ऋणादानं ततो वृद्धिरहता-
वृद्धिरप्यथ वृद्धेश्च परमा वृद्धिनिषेधस्तदनन्तरं ॥ अथाधिविधिमिहैव
ततोऽपि प्रतिभूविधिः । ऋणादानमिति प्रोक्तमुद्धाराख्यविधिस्ततः ।
निःक्षेपोऽथ ततोऽस्वामिविक्रयः परिकीर्त्तितः । संभूय च समुत्थानं
ततो दत्ताप्रदानिकं । अभ्युपेत्याशुश्रूषादास्यमोक्षमतःपरं । अथ
दासाधिकारी च वेतनस्यानपक्रिया । पण्यस्त्रीणां विधिश्चाथ कथितस्तद-
नन्तरं ॥ स्वामिपालविवादश्च ततः संविद्व्यतिक्रमः । विक्रीयासंप्रदानञ्च
क्रीत्वा चानुशयस्ततः ॥ सीमाविवादोऽप्यपरः सेतुश्च कथितोऽपरः । दृष्टा-
दृष्टे शस्यरक्षा शस्यघातकदण्डनं ॥ अथ दण्डोऽथ वाक्पारुष्यं दण्डपारुष्य-
मप्यथ । स्तेयं स्तेनः प्रकाशानां तस्कराणांच दण्डनं । दण्डश्चाप्यप्रका-
शानां तस्कराणामिहोदितः चौरान्वेषणमप्यथ स्तेनस्याप्यतिदेशनं । वर्ण-
नस्तेनकथनमस्मिन् रत्नाकरे कृतं ॥ स्तेनलाभे ऽनयादानं साहसं चाथ
कीर्त्तितं । घातकान्वेषण चाथ तथा संग्रहणं ततः । दण्डश्चाभिगमे प्रोक्तः
कन्यायाः दूषणं ततः । बन्धुस्त्र्यभिगमे दण्डो धर्म्मः स्त्रीपुंसयोस्ततः । स्त्रीरक्षा-
योषितां धर्म्मः प्रोषितस्वामिनीविधिः । मृतस्वामिवधूधर्म्मो नियोगश्च
ततः परं । परपूर्व्वादायभागजीवत्पितृकवण्टनं । प्रमीतपितृकाणाञ्च
विभागस्तदनन्तरं ॥ अनेकमातृकभ्रातृविभागश्च ततः परं । विभागान-
धिकारी च विभागमथ कीर्त्तित । अविभाज्यं ततः स्त्रीणां धनं तदनन-
न्तर । स्त्रीणां धनविभागश्च निष्प्रजाया धने ततः । लक्षणं स्त्रीधने लुप्त-
विभागश्च ततःपरं । नानावर्णसुतानांच विभागोऽथ विभक्तजैः । विभ-
क्तागतभागश्च विभागस्तनयान्तरैः । औरसः क्षेत्रजः पुत्रः पुत्रिका तत्सुता
अपि । पौनर्भवश्च कानीनो गूढोत्पन्नस्ततः पुनः । सहोढोदत्तकः क्रीतः
स्वयं चोपगतस्तथा । अपविद्धः कृत्रिमश्च शूद्रापुत्रस्ततः परं । पुत्रत्वस्य
विचारोऽस्मिन्नतिदेशः सुतस्य च । अथ पुत्रनिरुक्तादिनिन्दिताश्चाव-
कीर्त्तिताः । अपुत्रार्थविभागस्य भागः स्वसृष्टीनां ततः । विभागनिर्णय-
कृत्यं विभक्तानां ततःपरं । समाहृयश्च स्यूतः क्रियाभेदः प्रकीर्णकं ।
तरशुल्कं ततः प्रोक्तं निधिः परनिधिस्ततो विधिर्दण्डप्रणयनदण्डोत्कर्षा-
दिकं ततः ब्राह्मणस्य परीहारः परीहारः पुरस्य च । दण्डसंज्ञामानसंज्ञा
+ + + + शतमेकं तरङ्गाणां विदुषां चित्तरञ्जन । विधीयते
च विज्ञेन श्रीचण्डेश्वरमन्त्रिणा ॥ * ॥

End

अथ नैगमादिसंज्ञा ॥ तत्र कात्यायनः । नानापौरसमूहस्तु नैगमस्तु
प्रकीर्त्तितः । नानायुधवतो समवेताः प्रकीर्त्तिताः । प्रव्रज्यावसिता ये तु

पापण्डाः परिकीर्त्तिताः ब्राह्मणानां समूहस्तु सङ्घः संपरिकीर्त्तितः । शिल्पोपजीविनो ये तु शिल्पिनः परिकीर्त्तिताः । सर्व्वेतसीमतानान्तु समूहः संघ उच्यते । चाण्डालश्वपचादीनां समूहोगुल्म उच्यते सघपाषण्डपूगाश्च भृताश्च वेषवस्तथा । समूहस्तस्य ये चान्ये वर्गाख्यास्ते वृहस्पतिः । येषयोऽम्बरशिल्पिसमूहः । तथा चातुर्वर्ण्यस्य यान्तुनिरसजात्यादिसमुद्भवा । तस्य धर्म्माः समुद्दिष्टा जातिः सा परिकीर्त्तिता । सजातिः सवर्णः कल्पद्रुमोवाप्यथ परिजातोदयायुधो वाप्ययवा प्रकाशे तत् सारसमादधिकञ्च यत् तद्धाति रत्नाकर एव पारं । यं कामधेनुर्न्नयाति सकल्पशस्या यं सेवते निजफलाय स परिजातो वैरिगोवर्द्देत्यहृन्दसदसदर्पि चण्डेश्वरं तुलयितुं कतमे भवन्तु । श्रीकृत्यदानव्यवहारशुद्धिपूजा विवादेषु तथा गृहस्थे । रत्नाकरा धर्म्मभुवो निवन्धाः कृतामुनाउत्पदासमस्ता । रसगुणभुजचन्द्रैः सम्मिते शाकवर्षे सहसि धवलपक्षवाग्वतीसिन्धुतीरे । अदित तुलितमुच्चैरात्मना स्वर्णराशिं निधिरखिलगुणानामुत्तरं सोमनादः ॥

Colophon. ॥ * ॥ इति सप्रक्रियसद्दासन्धिविग्रहिकठक्कुरश्रीवीरेश्वरात्मजसप्रक्रियसद्दासन्धिविग्रहिकठक्कुरश्रीचण्डेश्वरविरचितो विवादरत्नाकरः सम्पूर्णः । * । श्रीहरिः । श्रीहरिः ॥ श्रीहरिः ।

विवरणम् । विवादरत्नाकरो नाम व्यवहारविषयकोऽयं निबन्धः श्रीचण्डेश्वरविरचितः । मुद्रितोऽयं वाङ्गीयासियाटिकसमित्या ।

---

No 130. विवादरत्नाकरसेतुः । *Vivádaratnákarasetuh.* *Substance*, country-made yellow paper, 16½ × 6½ inches, bound in book form. *Folia*, 435. *Lines*, 15–19 in a page *Character*, Bengali. *Date*, Saka 1720. *Appearance*, fresh, written on one side of a folium only. *Prose.* *Generally correct.* *Complete*

Though chiefly treating of civil law, the work deals also with subjects having only a remote connection with it, such as the creation, the caste system, &c. Compiled by a group of Pandits, *viz.;* *Bánesvara*, *Kripáráma*, *Gopálakrishna*, *Jivana*, *Vireśvara*, *Krishnachandra*, *Gaurikánta*, *Káliśankara*, *Syámasundara*, *Krishna*, *Keśava*, and *Sitáráma*. *It is complete in 21 chapters.*

**Beginning.** श्रीगणेशाय नमः। विघ्नेशं शरणं नमाम्युदरधिं सद्रत्नचिन्तामणिः यः प्रत्यूहतमोविनाशमिहिरः श्रीनाशभीनाशनः। संसारैकमहार्णवे निपततां निस्तारबीजं नृणां गोविन्दः कृपया सुरासुरगणैर्वन्द्याघ्रिरं पातु नः॥ चण्डेश्वरधारेश्वरविश्वरूपामिताक्षराकारहलायुधो च। श्रीकृष्णवाचस्पतिधर्म्मरत्नकृतस्तथा श्रीकरशूलपाणी गोविन्दसर्व्वधरतत्त्वकार श्चाचार्य्यचूड़ामणिनागभट्टा वाक्यानि चैषां सुविमृश्य कुर्म्मोऽधुना विवादार्णवभञ्जनाख्यं॥ इह वाक्यानि वर्णादेः स्त्रीशूद्रधर्म्मनिर्णयः। राजधर्म्मानन्तरमन्त्रिदूत्यादिलक्षणं राजधर्म्मः ऋणादानं इत्यादिविधिसङ्ग्रहः। ऋणादानोद्ग्रहणयोर्विधिदायनिरूपणं। सुतादीनां तत्र पुंसां अधिकारविवेचनं स्त्रीधनस्य स्वरूपं तदधिकारनिरूपणं। भागानर्हाश्च दायानामविभाज्यविभाज्यता। पितृकृतविभागस्य भ्रातृभागविधिस्तथा। संसृष्टानां विभागस्य विदेशगतवण्टनं निह्नुतस्य विभागस्य भागसन्देहनिर्णयः युक्तिर्व्यवहारलक्षणादिभाषापादस्ततः परं। उत्तरपादक्रियापादौ ततो निर्णयपादकः। निक्षेपविधिरस्वामिविक्रये च विधिस्तथा। विधिस्तत्र संभूयसमुत्थानेऽत्र भण्यते। कर्षकादेर्भागविधिस्तथा दत्ताप्रमाणिका। अनादेयादेयदण्डा दण्डानां विधिरुच्यते। भृतकानां विधिस्तत्र दास्यमोक्षाधिकारिणो वेतनस्वामिपालस्त्रीपरायां विधिरुच्यते। विक्रीतासंप्रदानस्य क्रीतानुशय उच्यते। सीमाविवादे च विधिः कृष्टाकृष्टे विधिस्तथा शस्यरक्षाविधिस्तत्र शस्यघातदमस्तथा। शस्यघातेऽप्यदण्डाय वाक्पारुष्यविधिस्तथा। विधिस्तु दण्डपारुष्ये तथा स्तेयनिरूपणं। प्रकाशतस्करदमो प्रकाशचौर्य्यदण्डनं चौरान्वेषणचौरातिदेशापवादनिर्णयः। साहसे तु दण्डभेदो घातकान्वेषणं ततः स्त्रीसंग्रहणदूषणौ परदारगमे दम.। स्त्रीपुंसधर्म्मनिर्णय. प्रकीर्णकमत.परं। बहुधा विषयस्तत्र विधिदण्डाश्रिताः पुनः॥

**End.** अनेन विधिना राजा मिथोविवदतां नृणां साक्षिप्रत्ययसिद्धानि कार्य्याणि शमतां नयेत्। उदितो विस्तरेणायं मिथोविवदमानयोः अष्टादशसु मार्गेषु व्यवहारविनिर्णयः। एवं कार्य्याणि सर्व्वाणि सर्व्वान् सम्यक् सभूपतिः। देशानलभ्यां लिप्सेत लब्धांश्च परिपालयेत्॥

**Colophon** ॥*॥ इति विद्वद्विरचिते विवादार्णवसेतुके। तरङ्गो निधिदण्डार्थैरेकविंशोऽत्र कीर्त्तितः॥*॥*॥*॥*॥

विवरणम्। विवादभङ्गसेतुर्नाम व्यवहारविषयकोऽयं निबन्धो नानापण्डितसङ्कलित.।

No. 131. विवादभङ्गार्णवसेतुः। Vivádabhangárṇavasetuḥ. Substance, foolscap paper, 18×4 inches. Folia, 128. Lines, 6-8 in a page. Character, Bengali. Date, ? Appearance, new. Prose. Generally correct. Complete.

Another copy of the same work.

विवरणमुक्तपूर्व्वम् ।

---

No. 132 विश्वादर्शः। Viśvádarśah. Substance, country-made white paper, 6×3½ inches. Folia, 19. Lines, 5-9 in a page. Character, Nágara. Date, ? Appearance, very old, worn out, worm-eaten, torn, and useless. Verse Generally correct. Complete.

Verses on religious subjects by Satya Sarasvatí, complete in four chapters, called Káṇḍas.

Beginning. चौत्यादिकाद्यादृष्टदिरपलाशैर्विनाशार्कविल्वैः सुमायंद्रपयष्टकान् द्विरपि कुशस्तै देशिनीभंगुल्लीभिर्नयां भृतात्थ पर्वेष्वपि न खलु नष्यर्कसंक्रान्तिपाते । दर्भान् प्रादेशमात्रान् नभसि पुनरमायां समुत्थाविरिंचौत्थमादुत्पादिनाखे ध्रुवसदभिमताधर्ममुक्कायकाद्यः ।

End. स्वयं ज्योतिर्ज्योतिःस्वमस्त्ययतिमात्रं त्वमिति चेत्तयोर्मूर्त्तिसेषु त्वखिलगुणराशिस्तव तया । द्विधाविद्याविद्यास्त्वनुपमसुखं चेतु + + + + + स्फुटं तत्तस्तत्क्षेयर कुरु तदान्वत् परमपि १४ इति. सुदृढैः संदूष्य मत्वंहतमिदं हतं धामसुखं समुद्रंप ता+वे धन्यरा । १५ ।

Colophon. इति श्रीविश्वादर्शाख्ये धर्मशास्त्रे काशीवर्णनं चतुर्थः कांडः ।

विवरणम् । धर्मानुबन्धिकतिपयाधुनिकश्लोकात्मकोऽयं निबन्धः श्रीसत्यसरस्वतीविरचितः। पुस्तकमिदं जीर्णं शीर्णं कीटकवलितञ्च वर्त्तते ।

---

No 133. वीरमित्रोदयः। Víramitródayaḥ Substance, country-made white paper, 14×3½ inches. Folia, 117. Lines, 9-10 in a page. Character, Nágara. Date, Samvat 1865. Appearance, very old, worn out, torn, thoroughly worm-eaten, and useless. Prose. Correct. Complete (so far as the part which the codex contains is concerned).

A digest of the Dharma Sástras or Hindu law compiled by Mitra Miśra, son of Paraśuráma Miśra, and grandson of Hañsa Paṇḍita, at the request of Rájá Vira Siñha, son of Mahárája Madhukara-sháh, and grandson of Mahárájádhirája Pratáparudra, complete in four chapters or Prakaraṇas. The codex under notice contains only the last chapter or the fourth Prakaraṇa, treating of Vyávahára or civil law.

**Beginning.** अथ विभागाख्यव्यवहारपदम् यत्र मन्वादिवचनव्याख्यासु बहुधा बुधाः विवदन्ते दायभागः स प्रबन्धेन वर्ण्यते तल्लक्षणमाह मनुः विभागोऽस्य पित्र्यस्य पुत्रैर्यत्र प्रकल्प्यते दायभाग इति प्रोक्तं तद्विवादपदं बुधैरिति पित्रोरयं पित्र्य इति एकशेषात् पितृशब्दात् यत् अत्र मातृधनस्यापि विभागकथनात् पित्र्यस्य पुत्रैरिति च द्वयमपि संबंधिमात्रोपलक्षणं पत्नी त्यादिनान्येषामपि भर्त्रादिधने तन्निरूपणात् अतएवोपक्रमे मनुना पितादिपद नोपात्तम् एष स्त्रीपुंसयोरुक्तोधर्मोवो रतिसंहितः आपद्यपत्यप्राप्तिश्च दायं धर्मं निबोधतेति दायधर्मोऽप्यत्र विभागरूपोऽभिप्रेतस्तस्यैवात्र लक्षणकथनपूर्व्वकं निरूपणात् ।

**End** कात्यायनोपि राजक्रीड़ासु ये सक्ता राजवृत्त्युपजीविनः अप्रियं चास्य यो वक्ता वधं तेषां प्रकल्पयेदिति शूद्राणां प्रव्रज्यादिकरणे दण्डमाह स एव प्रव्रज्यावसितं शूद्रं जपहोमपरं तथा वधेन शासयेत् पापं दण्डो वा द्विगुणं दममिति धर्मशास्त्रानुसारेण व्यवहारदर्शिनोराज्ञः फलमाह यम. एवं धर्मप्रवृत्तस्य राज्ञोदण्डधरस्य च यशोऽस्मिन् प्रथमे लोके स्वर्गवास स्तथाक्षय इति इति प्रकीर्णकाख्यं चतुर्थं प्रकरणं समाप्तम् । प्रत्यार्थं परिवर्द्धतेर्थिजनता दैन्यान्धकारापहे श्रीमद्वीरमृगेन्द्रदानजलधि र्येद्बृहच्चन्द्रोदये राज्ञादेशितमित्रमिश्रविदुषस्तस्योक्तिभिर्निर्मिते ग्रन्थेस्मिन् व्यवहारजातविषय. पूर्णप्रकाशोभवत् ।

**Colophon.** इति श्रीमत्सकलसामन्तचक्रचूड़ामणि मञ्जरीनीराजितचरणकमलश्रीमत् महाराजाधिराजप्रतापरुद्रश्रीमन्महाराजमधुकरसाहसूनु श्रीमत् महाराजाधिराजचतुरुदधिवलयवसुन्धरा हृदयपुण्डरीकविकासदिनकर श्रीवीरसिंहप्रोतिन श्रीहंसपण्डितात्मज श्रीपरशुराममिश्रसूनुसकलविद्यापारावारपरीणधुरीणजगद्दारिद्र्य महागजपा + + + ज्ञानजीमातु श्रीमन्मित्रमिश्रकृते वीरमित्रोदयाभिधनिबन्धे व्यवहार + + + + पूर्णिमगमत् इति श्रीव्यवहारखण्डः समाप्तः श्रीसंवत् १८६१ चैत्र कृष्णद्वतीया शनौ लि + + + ।

विवरणम् । · राजश्रीवीरमित्रानुज्ञातश्रीमित्रमिश्रकृतवीरमित्रोदयनामप्रख्यातधर्मशास्त्र निबन्धस्य व्यवहारखण्डः । भारतीयपाश्चात्यप्रदेशेषु वीरमित्रोदयस्य सम्यक्समादरोऽवगतौ ।

---

No. 134 व्यवहारतत्त्वम् । Vyavahàratattwam. Substance, foolscap-paper, 18×4 inches. Folia, 21. Lines, 8-11 in a page. Character, Bengali. Date, ? Appearance, nearly fresh. Prose. Generally correct. Complete.

A digest of Hindu civil law under the name of Vyávahàratattwa by Raghunandana, the chief authority of the Bengal School. It belongs to his series of Smrititattwa.

Beginning. श्रीकृष्णाय नमः । प्रणम्य सच्चिदानन्दं वागीशं विदुषां मुदे । व्यवहार-
तत्त्वं वक्ति श्रीरघुनन्दनः ॥ अथ व्यवहारदर्शनं । तत्र याज्ञवल्क्यः ।
स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः । आवेदयति चेद्राज्ञे व्यवहार-
पदं हि तत् । स्मृतिसदाचारविभ्रंशेन यदंशा परैरंशः भवीरतो वा
पीड़ितश्चेद्राजनि निवेदयत् । तद्व्यवहारदर्शनस्थानं । चेदित्यत्र यदिति
मैथिलाः । आवेदयति चेदित्यनेन स्वयं विवादोत्थानं राज्ञा न कर्त्तव्य-
मिति सूचयामित्यद्योपाध्यायाः । राज्ञीति व्यवहारदर्शकपरं ।
तथाच बृहस्पतिः राजकार्य्याणि संत्यज्य प्राड्विवाकोऽथवा द्विजः ।
विवादे पृच्छति प्रश्नं प्रतिप्रश्नं तथैव च । प्रियपूर्वं प्राग्वदति प्राड्विवा-
कस्ततः स्मृतः । कात्यायनः प्राड्विवाकलक्षणमाह । व्यवहाराश्रितं प्रश्नं
९. पृच्छति प्राड्विति स्मृतिः । विवेचयति यद्यस्मात् प्राड्विवाकस्ततः स्मृतः ।
अर्थिनं प्रतिभाषते कीदृशी प्रत्यर्थिनं प्रति च तथापि कीदृगुत्तरं इति
पृच्छतीति प्राट् श्रुत्वा गुणागुणत्वेन जयं पराजयं वा विविनक्ति इति
वाकः प्राट् च स विवाकश्चेति प्राड्विवाकः ।

End. अर्भकैः सहर्क्षप्रियोपाद्मसादरदान् श्रियः । वाच भार्य्योद्वाहवर्णान्
योऽन्यदापि सवते । परतो व्यवहारस्य अनन्तः पितरादरे । कौमारो
मं स्वतन्त्र. स्यात् जरयापि समन्वितः । तयोरपि पिता श्रेयान् वीजप्रा-
धान्यदर्शनात् । अभावे वीजिनो माता तदभावे च पूर्व्वजः । परि-
षद्य अनुज्ञोविभ्रमतः तथाच बृहस्पतिः । पितृदायादुपक्षेदाय-
स्त्रियामुज्ञोविभिः । पद्मुरशेष कुटुम्बार्थे तद्गुरशे हानुमर्ष्यति । कात्या-
यनः कुटुम्बार्थमगतो तु यशोसं व्याधितोऽथवा उपप्लवनिमित्तञ्च
विद्याद्यापत्कृतञ्च यत् । अस्तनैताविरश्चेव पेत्रकार्य्ये च यत्कृतं ।

धनतत्त्वं प्रदातव्यं कुटुम्बेन कृतं प्रभोः। प्रभोरिति कर्त्तरि षष्ठी तेन प्रभुना दातव्यमिति रत्नाकरः। वृहस्पतिः यः स्वामिना नियुक्तस्तु धनाय व्ययपालने कुशीदकृषिवाणिज्ये निसृष्टार्थस्तु सम्मतः। प्रमाणं तत्कृतं सर्व्वं लाभालाभव्ययोदयं। स्वदेशे वा विदेशे वा स्वामी तन्न विचारयेत्। सम्मतस्य स्वामिन इति शेषः॥ * ॥

Colophon. इति महामहोपाध्यायश्रीरघुनन्दनस्मार्त्तभट्टाचार्य्यविरचितं व्यवहारतत्त्वं समाप्तं॥ शुभमस्तु॥ श्रीहरिः पातु मां नित्यं गौरी च जगदम्बिका। श्रीसरस्वतीचरणे मम भक्तिरस्तु॥०॥०॥०॥०॥०॥०॥०॥०॥०।

विवरणम्। स्मार्त्तश्रीरघुनन्दनभट्टाचार्य्यविरचितं व्यवहारतत्त्वमष्टाविंशस्मृतितत्त्वान्तर्गतम्।

---

**No. 135** व्यवहारतत्त्वम्। Vyavahāratattwam. *Substance*, country-made red and yellow paper, $18 \times 2\frac{1}{2}$ inches. Folia, 32. Lines, 5 in a page. Character, Bengali Date, Saka 1740. Appearance, not old. Prose. Correct Complete

Another copy of the same work.

विवरणमुक्तपूर्व्वम्।

---

**No. 136.** व्यवहारतत्त्वम्। Vyavahāratattwam. Substance, country-made paper, $18 \times 1\frac{1}{2}$ inches. Folia, 33. Lines, 5 in a page, having a blank space of about half an inch square in the middle. Character, Bengali Date, Saka 1597. Appearance, old. Prose. Correct. Complete.

A third copy of the same work.

Colophon. शाके शैलाङ्कबाणेन्दुसम्मितेऽपूरि पुस्तकं व्यवहारादितत्त्वाख्यं श्रीराधाकान्तशर्म्मणा। श्रीहरये नमः॥०॥०॥

विवरणमुक्तपूर्व्वम्।

---

**No. 137.** व्यवहारचिन्तामणिः। Vyavahāra-chintámaṇih. Substance foolscap paper, $14 \times 3\frac{1}{2}$ inches. Folia, 82. Lines, 7–8 in a page Character, Bengali. Date, ? Appearance, fresh. Prose. Generally correct. Complete.

A digest of Hindu civil law under the name of Vyávahára *Chintámaṇi by Váchaspati Miśra compiled at the request* of Mahárájádhirája Harináráyaṇa, son of Mahárájádhirája Hṛidaya-náráyaṇa, and grandson of Darpanáráyaṇa.

**Beginning.** ॐ नमोगणेशाय ॥ ० ॥ आराध्य नन्दनन्दनमथ सन्धाय यत्नतोमन्यान्। श्रीवाचस्पतिविबुधो व्यवहृदिति चिन्तामणिं तनुते। भाषोत्तरक्रियापदानि निर्णयः सोपदेशकः। चतुःपात्तद्विषयो व्यवहारोनिरूप्यते। तत्रादावुपदेशो वर्णनीये तन्मूलव्यवहारसमयमाह नारदः। धर्म्मैकतानाः पुरुषा यदासन् सत्यवादिनः। तदा न व्यवहारोभूत्न द्वेषो न च मत्सरः। नष्टे धर्म्मे मनुष्याणां व्यवहारः प्रकीर्त्तितः। द्रष्टा च व्यवहाराणां राजादण्डः स्वयं (?) ॥

**End.** स्वत्वस्य स्वत्वदाराणां वशित्वं स्वर्थशासने विक्रये चैव दाने च वशित्त्वं लभ्यते पितुः। एतेनार्थशिष्टो निप्रलम्भे च विक्रये चेश्वरा मता इति नारदीयं। दानविक्रययोः प्रभुत्वप्रतिपादनं पुत्रत्वेन दानविक्रयपरमतो न विरोध इत्येके। पुत्रस्यार्थमतौ पितुस्तद्दानादौ प्रभुत्वमर्थमतौ प्रभुत्वमिति संप्रदायः ॥ ० ॥

**Colophon.** इति महाराजाधिराजश्रीदर्पनारायणात्मजमहाराजाधिराजश्रीहृदयनारायणात्मजमहाराजाधिराजश्रीहरिनारायणविरचिते निर्णयपादः समाप्तः ॥ ० ॥ इति महामहोपाध्यायमिश्रश्रीवाचस्पतिकृते व्यवहारचिन्तामणिः संपूर्णः ॥ श्रीगुरुर्जयति ॥ ॐ नमो भगवते वासुदेवाय ॥ ० ॥

विवरणम्। श्रीवाचस्पतिमिश्रविरचितोविवादचिन्तामणिर्नाम व्यवहारविषयकोऽयं निबन्धः सुप्रसिद्ध एव।

---

**No. 138.** व्यवहारमयूखः। Vyavahára Mayúkhaḥ. Substance, country-made coloured paper, 18 × 4 inches. Folia, 78. Lines, 8 in a page. Character, Bengali. Date, ? Appearance, fresh. Prose. Not correct. Incomplete.

A digest of Hindu civil and criminal law under the name of Vyávahára Mayúkha, current in Southern India, and belonging to a series entitled Ashṭádaśa Mayúkha. It has been published in *several* places as Benares, Bombay, &c. *By Nilakaṇṭha,* in his series entitled Bháskara.

**Beginning.** श्रीगणेशाय नमः ॥ अज्ञानमपनयन्नीतिं मत्वा भास्वत्पदाम्बुजं । सम्यक् निरचयति नीलकण्ठो व्यवहारनिर्णये किञ्चित् । विप्रतिपद्यमानानेकर-गता ज्ञाताधर्मज्ञापनानुकूलो व्यापारो व्यवहारः । वादिप्रतिवादिक-र्तृकः सम्भोगमाधिप्रमाणको विरोधिकोटिव्यवस्थापनानुकूलो व्यापारः । संप्रतिपत्युत्तरे तु व्यवहारप्रयोगोऽथोक्तश्च इति मदनरत्ने । वादवितण्डा-दिव्याहत्त्वर्थानन्तरद्वितीयपटलम् ॥

**End.** ब्राह्मण्यादीनां शूद्रादिगमने दण्डमाह ॥ वृषलं सेवते या तु ब्राह्मणीम-दमोहिता । तां श्वभिः खादयेद्राजा संस्थाने वध्यघातिनाम् । वैश्य वा क्षत्रियं वा ब्राह्मणी सेवते तु या । शिरसोमुण्डनं तस्याः प्रयाणं गर्दभे-न तु ॥ वृषलः शूद्रः ॥ वध्यघातिनः शौनकाः । तेषां स्थान इत्यर्थः । अपरञ्च दण्डो + + + स्मृतिकायाः । व्यभिचारनिर्णये + + + + माह याज्ञवल्क्यः ॥ पुमान् संग्रहणे + केशि + परस्त्रियां सद्योवाकोम + + + यिके प्रतिपन्नो द्वयोस्तथा । द्वयोरित्यनेन वान्यतरेण प्रति । दूषणमाह ॥ याज्ञवल्क्यः ॥ शतं स्त्रीदूषणे दद्याद्वत्तु मिथ्याभिशंसने । पशून् गच्छञ्छतनगन दीनां स्त्रीश्च । आपोनौ गच्छतो वेषां दुर्गेच्छा-भिमेहन. चतुर्विंशतिकोदण्डस्तथा प्रव्रजितागमे । दीनां दुःखितां स्वप-चामपि । स्त्रीसन्मुखपुरीषादि ॥ इति स्त्रीसंग्रहणं ॥

**Colophon** इति व्यवहारमयूखः समाप्त (समाप्त. ? ॥ * ॥ * ॥ * ॥

विवरणम् । अष्टादशमयूखान्तर्गतव्यवहारमयूखो नाम स्मृतिनिबन्धविशेषः श्रीनीलकण्ठ-विरचितः असम्पूर्णमिदं पुस्तकं कस्यचिदंशस्याविद्यामानत्वात् ।

---

**No. 139.** व्यवहारमयूखः । Vyavahára Mayúkhah. Substance, country-made paper, 8×5 inches. Folia, 96. Lines, 12 in a page, except in the last, which has one line only Character, Nágara. Date, ? Appearance, old. Prose. Correct Complete.

Another complete copy of the same work, having eleven preliminary ślokas more at the beginning, as also some portion of the text at the end, which seem to have been left out by the Bengali copyist.

**Beginning.** ॥ श्रीगणेशाय नमः ॥ योऽलीलया संतनुते च विश्वं तन्यालयत्यात्मनि विश्वरूपी । स्वयं नयत्याशु च पूर्णरूपः । तमोऽस्तु रविर्यथामो ॥ १ ॥

जज्ञे पितामहतनोः खलु कश्यपोयस्तस्मादजायत मुनिस्तु विभांडकाख्यः। तं पुत्रिणां धुरमरोपयदृष्यशृंगस्तस्यान्ववायेऽजनि शृंगिवराभिधानः ॥ १ ॥ तस्मिन् वंशे महति वितते मेंगराख्ये न्टपाणां राजा कर्णः समजनि यथा सागरे शीतरश्मिः। कीर्त्त्या यस्य प्रथिततरया श्रोत्रभित्तेभिपूर्णे कर्णस्यापि प्रविततकथानावकाशं लभंते ॥ २ ॥ विशोकाख्यदेवस्ततस्तत्सुतोभूद्विशोकीकृता येन सर्व्वा धरित्री। ततोथास्त राजाऽस्तगस्तत्सुतोभद्दयाख्यो- रयणैव सर्व्वोद्धितद्धः ॥ ४ ॥ बभूवाथ चैराटराजस्ततोभूद्भूपोमेदिनीशो- बभौ वीटराजः। नरसिंहदेवस्ततोमन्युदेवस्ततोभूद्भूपर्येद्रपालाभिधानः ॥ ५ ॥ शिवगणाख्यन्टपः समजन्यथो शिवगणाख्यपुरं प्रचकार यः। शिवगणेन समं सकलैर्गुणैः शिवशिवप्रथमोगणनासु यः ॥ ६ ॥ रोल्हिचंद्र इति तत्तनयोभूत् कर्म्मसेनन्टपतिस्तमथानुलोकयोनरहरिन्टपराजो रामचंद्र इति तत्सुतोऽनुजातः ॥ ७ ॥ यशोदेवस्ततो जातस्तारकेन्द्रन्टपस्ततः। चक्रसेनस्ततो राजा राजसिंहन्टपो यतः ॥ ८ ॥ ततोऽभवद्भूपतिमाधिदेवः स्वकीर्त्तिभिर्निर्ज्जितराजसिंधुः। अभूत्ततः श्रीभगवंतदेवस्तदेव यशोदयवान् क्षितीशः ॥ ९ ॥ यदाघदविषाद्रिनिर्जितवपूरलापलोलच्छया दूरे तुच्छ रत्नाहते निविशते नो यत्र पुंसां गतिः। किंच त्वत्सदरातिवामनयना नेत्राम्बुभिर्वर्ज्जितस्तेजोऽब्धिर्वडवामुखोद्धतभुक्तुस्तः कथं नोभवेत् ॥ १० ॥ आज्ञप्तस्तेन राज्ञा विबुधगणमणिर्दाक्षिणात्यावतंसोभट्टः श्रीनीलकंठः स्मृतिषु दृढमतिर्जैमिनीयेऽद्वितीयः ॥ श्रीरविश्राणं(?) ॥

End. अथ प्रकीर्णकं। ऊनं वाप्यधिकं वापि लिखेद्योराजशासनं। पारदारिकचौरौवा मुंचतोदंड उत्तमः। अभक्ष्येण द्विजं दूष्यं दंड्य उत्तमसाहस। मध्यमं क्षत्रियं वैश्यं प्रथमं शूद्रमर्धिकं। अभक्ष्यं सुरासूत्रपुरीषादिकूटस्वर्णव्यवहारोविमांसविक्रयी। अंगहीनस्तु कर्त्तव्यो दाप्यश्चोत्तमसाहसं विमांसं गवादिमांसं तथा शक्तोस्वामी दंडिणां शृंगिणां तथा प्रथमं साहसं दद्याद्विकुष्टे द्विगुणं तथा। विक्रोशः क्रंदनं। मनुः। मनुष्यमरणे क्षिप्रं चौरवत् किल्विषी भवेत्। प्राणिभृत्सुमहत्स्वर्द्धं गोगजाश्वहयादिषु क्षुद्रकाणां पशूनां तु हिंसने द्विशतोदमः। पंचाशत्तु भवेद्दंड. शुभेषु मृगपक्षिषु। गर्दभाजाविकानांतु दंडः स्यात् पंचमाषक.। माषकस्तु भवेद्दंड. श्वशूकानां निपातन इति। अयंच दंडोपलक्षणमूल्यदानोपरं बोध्यः। याज्ञवल्क्यः। जारं चोरेत्यभिवदन् दाप्यः पंचाशतं दमं। उपजीव्य धनं मुंचंस्तदेवाष्टगुणं स्मृतं (?)॥ उपजीव्य गृहीत्वा राज्ञोऽनिष्टप्रवक्तारं तस्यैवाक्रोशकारिणं। तन्मन्त्रस्य च भेत्तारं जिह्वां छित्वा प्रवासयेत्। अनिष्टं

मरणादि। आक्रोशः तत्र राष्ट्रभंशोस्त्वित्यादि। मनुः। राष्ट्र- कोशापह-
र्त्तॄंश्च प्रतिकूलेष्ववस्थितान्। घातयेद्विविधैर्दंडैररीणां चोपजापकं। या-
ज्ञवल्क्यः। मृतांगलग्नविक्रेतुर्गुरोस्ताडयितुस्तथा। राजयानसनारोढु
र्दंड उत्तमसाहसः। मृतांगलग्नं मृतकवस्त्रादि स एव। द्विनेत्रभेदिनो
राजद्विष्टादेशकृतस्तथा। विप्रत्वेन शूद्रस्य जीवतोऽष्टशतोदमः। द्विने-
त्रेनेत्रद्वयभेत्तृराजनिषिद्धकर्म्मविप्रत्वेन जीवितुश्च शूद्रस्येत्यर्थः। व्यव-
हारान्येनाजितोऽस्मीति न्यायतोऽपि पराजितः। तमायातं पुनर्जित्वा
दापयेद्द्विगुणं दमं॥ अत्र सर्व्वत्रानुक्तसंख्येयसंख्या पणविषयणी ज्ञेया।
पणस्तु कर्षान्वितं ताम्रं कार्षिकस्ताम्रिकः पण इति कोशात्। कर्षः पल-
चतुर्थांशः। वराटकानां दशकद्वयं यत् सा काकिणी ताश्च पणश्चतस्र इति
भास्कराचार्य्योक्तश्च पणः। उत्तमसाहसादिकं तु साशीतिपणसाहस्रोदंड
उत्तमसाहसः। तदर्द्धम् मध्यमः प्रोक्तस्तदर्द्धमधमः स्मृतः॥ इति।
तथा। उक्तापराधेषूक्तपरिमाणदण्डैर्दंसनासम्भवेऽधिकोपि दंडः। यदा-
हापस्तंबः। दंडोदमनादित्याहुस्तेनादांतान् दमयेदिति। तथा सर्व्व-
स्वापहारदंडे विशेषमाह नारदः। आयुधान्यायुधीयानां वाद्यादीन्
वाद्यजीविनां। वेश्यास्त्रीणामलंकारान् वाद्यातोद्यादि तद्विदां। यच्च
यस्योपकरणं येन जीवंति कारवः। सर्व्वस्वहरणेप्येतन्न राजा हर्तुमर्ह-
ति। अन्यायादुगृहीतस्य दंडस्य प्रतिपत्तिमाह याज्ञवल्क्यः। राज्ञा-
न्यायेन यो दंडो गृहीतो वरुणाय तं। निवेद्य दद्याद्विप्रेभ्यः स्वयं त्रिंश-
द्गुणीकृतं। त्रिंशद्गुणं वरुणोद्देशेन संकल्प्य विप्रेभ्योदद्यादित्यर्थः॥

**Colophon.** इति श्रीमीमांसकशंकरभट्टात्मजभट्टनीलकण्ठेन कृते भास्करे व्यवहार-
मयूखः॥ समाप्त॥ श्रीरामार्पणमस्तु॥ ॥ ॥ ॥ ॥

विवरणन्तूक्तपूर्व्वम्।

---

**No. 140** व्यवहारमाधवः। Vyavahára Mádhavaḥ. Substance, country-made yellow paper, 18×4 inches Folia, 101, of which fol 72 has a supplement (क्रोडपत्र) Lines, 10 in a page. Character, Bengali Date, Saka 1735. Appearance, not old Prose. Correct Complete.

A commentary on Parásara Smriti, Vyavahára Prakarana, by Mádhavácharya. It has been published by Mahámahopádhyáya Pandit Chandrakánta Tarkálankára under the auspices of the Asiatic Society, Bengal.

**Beginning.** श्रीगणेशाय नमः ॥ वागीशाद्याः सुमनसः सर्व्वार्थानामुपक्रमे । यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननं । सोऽहं प्राप्य विवेकतीर्थपदवीमाम्नायतीर्थं परं । सज्जन् सज्जनसङ्गतीर्थनिपुणः सद्वृत्ततीर्थं श्रयन् लब्धामाकलयन् प्रभावलहरीं श्रीभारतीतीर्थतो विद्यातीर्थमुपाश्रयन् हृदि भजे श्रीकण्ठमव्याहतं ॥ सत्यैकव्रतपालको द्विगुणधीस्त्र्यर्था चतुर्वेदितापञ्चस्कन्धकृती पञ्चव्ययदृक् सप्ताङ्गसर्व्वंसहः । षट्प्रत्यक्तकलाधरो नवनिधिः पुष्यद्विशत्प्रत्ययः । स्मार्त्तोच्छ्रायधुरन्धरो विजयते श्रीबुक्कणक्ष्मापतिः । इन्द्रस्याङ्गिरसो नलस्य सुमतिः शैव्यस्य मेधातिथिर्द्धौम्यो धर्म्मसुतस्य वैण्यनृपतेः सौजानिमेर्गौतमः । प्रत्यग्दृष्टिररुन्धतीसहचरो रामस्य पुण्यात्मनो यद्वत्तस्य विभोरभूत्कुलगुरुर्मन्त्री तथा माधवः । प्रज्ञामूलमहीविवेकसलिलैः सिक्ताफलोपघ्निता(?) मन्त्रैः पल्लविताविशालविटपा सन्ध्यादिभिः षड्गुणैः । शक्त्या कोरकिता यशःसुरभिता सन्ध्यासमुद्यत्फला सम्प्राप्ता भुवि भाति नीतिलतिका सर्व्वोत्तरं माधवी ॥ श्रीमती जननी यस्य सुकीर्त्तिः सायणः पिता । सायणो भोगनाथश्च मनोबुद्धी सहोदरौ । यस्य बौधायनं सूत्रं शाखा यस्य च याजुषी । भारद्वाजं कुलं यस्य सर्व्वज्ञः स हि माधवः । स माधवः सकलपुराणसंहिताप्रवर्त्तकः जगद्धिताप्तये पराशरस्मृतिविस्तृतौ प्रवर्त्तते । व्याख्याते ॥ अथ व्यवहारः प्रस्तूयते ॥ ० ॥ यद्यप्यृणादानादीनामष्टादशपदानां व्यवहाराणां मध्ये कमपि व्यवहारं पराशरो न व्युत्पादितवान् । तथाप्याचारकाण्डे चतुर्णां वर्णानां क्रमेणाचारान् ब्रुवन् । क्षत्रियस्तु प्रजाश्चैव क्षितिं धर्म्मेण पालयेदित्यस्मिन् वचने क्षत्रियविशेषस्य राजाचारविशेषमवोचत् क्षितिं धर्म्मेण पालयेदिति तत्र क्षितिपालनं नाम क्षित्याश्रितासु प्रजासु दुष्टानां निग्रहः शिष्टोपद्रवपरिहारश्च ॥

**End.** अतो दृष्टमप्रतिनिरूपितं प्रकीर्णाख्यं विवादपदमभिधीयते ॥ तस्य लक्षणभेदौ नारदेन निरूपितौ ॥ प्रकीर्णकेषु न ज्ञेया व्यवहारा नृपाश्रयाः । राज्ञामाज्ञाप्रतीघातस्तत्कर्म्मकरणं तथा । पुनः प्रमाणसंभेदः प्रकृतीनां तथैव च । पाषण्डनैगमश्रेणिगणधर्म्मविपर्य्ययाः । पितापुत्रविवादश्च प्रायश्चित्तव्यतिक्रमः । प्रतिग्रहविलोपश्च लोप आश्रमिणामपि । वर्णसङ्करदोषश्च तद्वृत्तिनियमस्तथा । न दृष्टं यच्च पूर्व्वेषु सर्व्वं तत् स्यात् प्रकीर्णकमिति ॥ प्रकीर्णके विवादे ये विवादा राजाज्ञोल्लङ्घनतदाज्ञाकारणतत्कर्म्मरक्षणादिविषयास्तान्नृपसभ्यो नृपो वा कुर्य्यात् । एवं तदसौयो नृपाश्रयो व्यवहारस्तत् प्रकीर्णमित्युक्तं भवति । न च राजाज्ञाप्रमा

पणे विशेषदण्डमाह याज्ञवल्क्यः । न्यूनं वाभ्यधिकं वापि लिखेद्यो राजशासनं पारदारिकचौरौ वै मुञ्चतो दण्ड उत्तमः । राजदत्तभूमेरंशं न्यूनं वा परिमाणान्न्यूनत्वमाधिक्यं वा प्रकाशयन् राजशासनं यो लिखति यश्च पारदारिकं चौरं वा गृहीत्वा राज्ञेऽनिवेद्य मुञ्चति तावुभावुत्तमसा हस दण्डनीयौ । व्यासोऽपि । न्यायस्थाने गृहीत्वार्थमधर्मेण विनिर्णयं करोत्युत्तरकार्येऽपि राजद्रव्यविनाशकः । उत्कोचजीविनो द्रव्यहीनान् कृत्वा विवासयेदिति । तत्कर्मकरणे दण्डमाह । याज्ञवल्क्यः । राजयानासनारोढुर्दण्डो मध्यमसाहस इति । कात्यायनोऽपि । राजक्रीडासु ये सक्ता राजवृत्त्युपजीविनः । अप्रियस्यास्य वक्तारो वधं तेषां प्रकल्पयेदिति ॥ राज्ञः कोशोपहरणादौ दण्डमाह मनुः । राज्ञः कोशापहर्तॄंश्च प्रतिकूलेषु चास्थितान् विविधैरेव दण्डैर्वै हरेत् सर्व्वस्वमेव चेति ॥ सर्व्वस्वापहारेऽपि यद्यस्य जीवनोपकरणं नापहर्त्तव्यमित्याह नारदः । आयुधान्यायुधीयानां बीजानि कृषिजीविनां । वेश्यास्त्रीणामलङ्कारान् वाद्यानां यच्च तद्विदं । यच्च यस्योपकरणं येन जीवन्ति कारवः । सर्व्वस्वहरणेऽप्येतन्न राजा हर्त्तुमर्हतीति ॥ ब्राह्मणस्य वधस्थाने मौण्ड्यमाह मनुः ॥ ब्राह्मणस्य वधे मौण्ड्यं पुरान्निर्वासनाङ्कने । ललाटे चाभिशस्ताङ्कः प्रयाणं गर्दभेन त्विति कोपात् परस्परभेदनादौ दण्डमाह याज्ञवल्क्यः । द्विनेत्रभेदिनो राजा द्विष्टादेशकृतस्तथा । विप्रत्वेन शूद्रस्य जीवतोऽष्टशतोदम इति ॥ यत्तु स्मृत्यन्तरेऽभिहितं । द्विजातिलिङ्गिनः शूद्रान् चित्रदण्डेन घातयेदिति ॥ तद्दुष्टत्वार्थं ब्राह्मणलिङ्गधारणे वेदितव्य ॥ ब्राह्मणपीडाकारिणो दण्डमाह मनुः । ब्राह्मणान् बाधमानन्तु कामदं चर्म्मवर्णजं । हन्याच्चित्रैर्वधोपायैरुद्वेजकरैर्नृप इति ॥ शूद्राणां प्रव्रज्यादौ दण्डमाह कात्यायनः ॥ प्रव्रज्यावासितं शूद्रं जपहोमपरं तथा । वधेन शमयेत् पापं दण्ड्यो वा द्विगुणं दममिति ॥ दण्डं शास्त्रोक्तमाह यमः ॥ एवं धर्म्मप्रवृत्तस्य राज्ञो दण्डधरस्य च । यशोऽस्मिन् प्रथमे लोके स्वर्गे वासस्तथाक्षय इति ॥ मनुरपि । एवं सर्व्वानिमान् राजा व्यवहारान् समापयन् । व्यपोह्य किल्विषं सर्व्वं प्राप्नोति परमां गतिं ॥

Colophon. इति श्रीमहाराजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरस्य माधवामात्यस्य कृतौ पराशरस्मृतिव्याख्यायां व्यवहारमाधवः समाप्तः ॥ ० ॥ करकृतमपराधं क्षन्तुमर्हन्तु सन्तः ॥ ० ॥ ग्रन्थमेतच्छ्रीकृष्णायार्पणमस्तु ॥ शुभमस्तु शकाब्दाः १०३५ ॥ ० ॥

विवरणम् । पराशरमाधवस्य व्यवहारप्रकरणम् ।

**No. 141.** स्मृतिसंग्रहः । Smṛiti-saṅgrahaḥ. Substance, country-made coloured paper, 10×6 inches, bound in book form. Folia, 30 (of which foll. 5, 19, 20, 21 and 25, are wholly blank, while fol. 2 and some other pages are partially so); the pages having separate marks. Lines, 2-23 in a page. Character, Bengali. Date, .? Appearance, very old and worn out. Verse. Generally correct. Incomplete.

A collection of verses gleaned from different original works on Hindu law. Anonymous.

**Beginning.** राजाऽभिषेकसंयुक्तो ब्राह्मणोवा बहुश्रुतः । धर्म्मासनगतः पश्येद्व्यवहारानुनुल्वणान् ॥ यावदावेदितं किञ्चित्तन्मन्यस्मिद्दार्थिना । तावत्सर्व्वमसम्भूतमिति मिथ्योत्तरं स्मृतम् ॥ यस्यैव देयमेवैतत् नामभ्भावितमर्थिनां । दत्तमेवमिदानेन किन्त्वस्यापि मया पुनः । प्रतिदत्तमितीदृक् च प्रत्यवस्कन्दनं स्मृतम् ॥ अस्मिन्नर्थान्तरे पूर्व्वं प्रारब्धोऽस्यद्दमर्थिना । जितस्थायं मया तत्र प्राङ्न्यायोविधिरुच्यते ॥

**End** धर्य्यवद्धर्म्मसंयुक्तं परिपूर्णमनाकुलं । साध्यसद्वाचकपदं प्रकृतार्थानुबन्धि च ॥ स्थावरे विक्रयाधाने विभागे दान एव च । प्रतिग्रहे च क्रीते च नालेष्यात्मिध्यति क्रिया ॥ प्रसिद्धमप्रसिद्धश्च निश्चितं साधनक्षमं । संचिप्तं लिखितार्थञ्च देशकालाविरोधि च ॥ वर्षर्त्तुमासपक्षाहोवेलादेशप्रदेशवत् । स्थानावसदसाध्याख्यां जात्याकारवयोयुतम् । साधुप्रमाणधनश्चावदात्मप्रत्यर्थिनामवत् । परार्थपूर्व्वजानेकराजनामभिरङ्कितम् । क्षमालिङ्गात्मपीड़ावत्कथिताद्वर्दायकं ॥ यदावेदयेते राज्ञे तद्भापेत्यभिधीयते । धनं वाञ्छालङ्करणं याचितं प्रीतिकर्म्मणा चतु.पञ्चादिकं देयमन्यथा हानिमाप्नुयात् ॥ वणिग्वीथिपरिगतं विज्ञातं राजपुरुषैः । दिवाग्टहीतं यत्क्रेता मप्युद्दोलभते धनम् ॥ अविज्ञातनिवासत्वात् यत्रमूल्यं न विद्यते हानिस्तत्र समाकल्प्या + + + + + + धनर्पितन्तु योभुङ्क्ते भुक्तभोगं प्रदापयेत् अनिर्दिष्टन्तु यद्द्रव्यं धामच्चेत्रग्टहादिकं । स्ववित्तेनैव भुञ्जानयोरवद्दण्डमर्हति ॥ धनङ्काहं तथा धेनूं नावं दासं तथैव च ।

**Colophon.** इति मरीचिः ।

विवरणम् । स्मृतिसंग्रहोनाम केषाञ्चित् प्राचीनस्मृतिनिबन्धीयव्यवहारविषयकवचनानां संग्रहग्रंथोयम् ।

---

**No. 142.** व्यवहारसिद्धान्तपीयूषः । Vyavahára-siddhánta-píyúshaḥ. Substance, foolscap paper, 18 × 5½ inches. Folia, 203. Lines, 3-10 in a page. Character, Bengali. Date, 1825.* Appearance, old, worn out, torn and worm-eaten throughout. Prose. Not correct. Complete.

A digest of Hindu law compiled by Chitrapati, a Maithila Pandit, at the request of Colebrooke. It has a long introduction occupying ten folia, which contains a short review of the religious works of the Hindus, their authors, the caste system, and other cognate matters.

**Beginning** श्रीगणेशाय नमः । श्रीगुरवे नमः । भुजङ्गमुखवायुना ज्वलितभालनेत्राग्निना द्रवद्रजतवर्द्धसं यदुदरेऽस्ति गङ्गाजलं । जटावलयमूर्च्छितं तदिदं धूर्ज्जटेः सर्व्वतः सदास्तु जनतामुदे कनकभाण्डपिङ्गाकृतिः ॥ १ ॥ यत्कान्ता गिरिजा गणेशजननी गङ्गा जटायां विधुर्भाले चक्षुषि मीनकेतुदहनप्रौढं (ढः) प्रचण्डानलः । राजत्कुञ्जरसारकृत्तिवसनो वत्सले नागराट् देवाराधितपादपद्मयुगलो देवोमुदे वोऽस्तु सः ॥ २ ॥ देवमेकाक्षरं वन्दे परमात्मा (त्मा?) स्वयंभुवं । नित्यं सत्यं चि सर्व्वज्ञं सर्व्वं सर्व्वसंस्रष्टं ॥ ३ ॥ न्याये धर्म्मतुरन्धरस्य (धुरन्धरस्य?) संप्रतिमहादारुजंगम्नमण्डले गुणाधारभुव. स्वयंसुविदुषः श्रीश्रीपदश्रीमतः । कोलब्रूकवरस्य भव्यवचसाभूयोऽभ्यर्थं प्रार्थितः श्रीमच्चित्रपतिः सुधीर्यं वहुदैवं विधत्ते मुदा ॥ ४ ॥ मन्वादिस्मृतिमाकलय्य जगति प्रख्यातसन्दर्भितः कोलब्रूक इति त्वरन् वितनुते सिद्धान्तपीयूषकं ॥ ५ ॥ अथ ग्रन्थारम्भ. ॥

**End.** अस्वतन्त्रः पितृमातृभ्रातृभ्राज्य एव वा कनिष्ठो वा विभक्तो वा दासकर्म्मकरस्तथा इति । पितृमात्रपितापि अस्वतन्त्र इत्यर्थः । अविभक्त अविभक्तधन इति ॥ कल्पतरुवीरमित्रोदयाभ्याञ्च इति । हारीतः । दानार्थेधमनार्थे (अधमर्णार्थे ?) वा धर्म्मार्थे वा विशेषतः । आदाने वा विसर्गे वा न स्त्री स्वदन्त्र्य (स्वातन्त्र्य?) मर्हति । नारदः । स्वतन्त्राः सर्व्व एवैते परतन्त्रेषु नित्यशः । अनुशिष्टा विसर्गे च विक्रये चेश्वराः समाः (मताः?) इति ॥ इति पूर्व्वोक्तराजादय इति ॥ कल्पतरुवीरमित्रोदययोरित्युक्तं । वीरमित्रोदये स्वतन्त्रस्य पित्रादेरपि विषयविशेषास्वातन्त्र्यमित्याह । सुतस्य सुतदाराणां वशित्वमनुशासने । विक्रये चैवदाने च

* The date is evidently of the Christian era.

स्वमित्वं न सुते पितुः। एतदप्यनापदीति वक्ष्यते॥ दत्ताद्यप्रकरणे इति।
इति स्वतन्त्रास्वतन्त्रलक्षणं। लक्ष्मीर्यस्य गृहे मुखे च ललिता वाणी-
स्वयं मारः + + श्रीचण्डी भुजयोर्वसत् परिसणे गच्छत् प्रतापावली कीर्त्तिः
कुन्दनिभानिशं प्रतिदिशं दानं सदा पाणिके सोऽयन्नसमद्देलकः कुलूक-
श्रीमांश्चिरं जीवतु। तदाज्ञया ख्यातनाख्यातनिबन्धकारसम्भाषितानेक-
मतानुबन्धः बाणाब्धिशैलेन्दुयुते समाप्तो विद्यावतामेष मुदे निबन्धः॥ १।
बाणाब्धि शैलेन्दुयुते समाप्तेति॥ देशे धर्म्मपुरे स्वधर्म्मनिरते वंशे वरे
वैदिकः कश्चित् श्रीमधुसूदनोऽजनि गुणोत्कर्षैधमानोन्नतिः। तस्य द्वौ
सुसुतौ बभूवतुरथ प्रख्याततन्दीपतिः श्रेष्ठः कृष्णपतिर्यदीयपुरतोऽमूकापि-
तोऽगोष्पतिः॥ २॥ श्रेष्ठात् श्रेष्ठसुतो महापदयुतोपाध्यायलक्ष्मीपतिर्न्याय
व्याकरणादिकाव्यकोषनियमप्रख्यातसत्पण्डितः। तस्मात् सर्व्वमधीत्य
तत्समगुणाः श्रीचित्रपत्यादयश्चैवं भूतगुणसंघोगुणपतिः तेषां पितृव्या-
त्मजः॥ ४॥

नन्दीपतितनूजन्मा श्रीमच्चित्रपतिः कृती व्यवहारस्य सिद्धान्तपीयूषं सम-
पूरयत्॥ ५॥ मान्यान् प्रणम्य शिरसांजलिसंनिधाय विज्ञापयामि बहु-
शोविनयं + + धीराः सदा मम लिपिं परिशोधयेयुः परगुणे रसिका-
भवेयुश्च॥ ६॥ शास्त्राम्भोधिसमुद्धृतं न च स्वंभूदेवमेवाहितं॥ विश्वक्-
सारविचारचारुचरितं सत्कारि + + + + वादव्याधिनिवारकम्बर-
मद्‌सिद्धान्तपीयूषकं काम्यं यत्र पुरःसरेण सततं भोभो बुधाः पीयतां।
० । ८ । * ॥

Colophon. इति सदाससाहतानेकविद्वज्जनसकलविद्योतितान्तःकरणश्रीमत्समद्देलक-
सकोलूकमाञ्चिवाज्ञया महामहोपाध्यायश्रीचित्रपतिशर्म्मविरचिते व्यव-
हारसिद्धान्तपीयूषे चतुर्थः परिच्छेदः समाप्तः। समाप्तश्चायं ग्रन्थः।
• ॥ • ॥ • ।

विवरणम्। व्यवहारसिद्धान्तपीयूषाख्यो व्यवहारविषयकोऽयं निबन्धः श्रीकोलूकमाञ्चे-
धानुज्ञया श्रीचित्रपतिशर्म्मविरचितः चतुर्थाध्याये सम्पूर्णः।

---

No. 143. व्यवहारालोकः। Vyavahárálokaḥ. Substance, country-made white paper, 14×4 inches. Folia, 37. Lines, 8-9 in a page. Character, Nágara. Date, Samvat 1884 (?) Appearance, old and worm-eaten throughout. Prose. Generally correct. Complete.

A digest of Hindu civil law by Gopála Siddhánta-vágíśa.

Beginning. श्रीगणेशाय नमः विश्ववीचिविलासोयं तदंगतिथयः स्रुतः तदानंदाद्वयं मंदे नंदगोपाद्वयं (?) महः श्रीमद्गोपालसिद्धान्तवागीशेन सुधीमता विवादे व्यवहाराणां तत्त्वालोकः प्रतन्यते १ व्यवहारोजयभंगव्यवस्थापनं इदं च वादकथातत्त्वनिर्णिनीषु कथात्वात् इति नियः तत्त्वनिग्रहस्थानस्य तद्भावत्वात् जयभंगव्यवस्थाफलकत्वात् तदाशङ्कितवितंडाशङ्कानुदयात् । प्रतिस्थापनादीनो वितंडेति गौतमीयादिति दिक् ।

End. अनेनेत्यादिना अन्वयस्यापि ज्ञानपूर्व्वकं भावादिविक्रये बध्यते इति भावः चौरवद्दंड्य इत्यर्थः यथाधर्मार्थे येन दत्तं स्यात् तस्मैचिद् याचते धनम् पश्चात्तेन तथा ततुस्यात् न देयं तस्य तद्भवेत् यदि संशोधयेत्तत्तु दर्पाल्लोभेन वा पुनः + + दंडः सुव + + + तस्य × + + निष्कृतिः ॥

Colophon इति श्रीमहामहोपाध्यायश्रीमद्गोपालसिद्धांतवागीशभट्टाचार्यकृतो व्यवहारालोकः समाप्तः श्री संवत् १८+१? मितीसावनवदी १० वारबुधवासरेके समाप्तलीमध्येमेश्वर महादेव ६७ सीवगुलामः ॥ ॥

विवरणम् । व्यवहारालोको नाम व्यवहारविषयकोऽयं निबन्धः महामहोपाध्यायश्रीगोपालसिद्धान्तवागीशविरचितः ॥

---

**No. 144.** दायक्रमसंग्रहः । Dáyakramasañgrabaḥ. Substance, country-made yellow paper, 18×2 inches Folia, 7 Lines, 5 in a page. Character, Bengali Date, ? Appearance, new. Prose. Generally correct Incomplete.

A compendium of the law of inheritance entitled Dáyakrama-sañgraha by Srikrishna Tarkálankára, the well-known commentator of Jímútrabana's Dáyabhága. This work has been published and translated into English.

Beginning. श्रीकृष्णाय नमः ॥ जगद्व्यापदद्वन्द्वमापदां चयसाधनं । विश्वकोटिविनिर्म्माणस्थितिसंहारकारणं ॥ निधाय हृदये दायाधिकारक्रमसंग्रहः क्रियते पण्डितामोदी श्रीमच्छ्रीकृष्णशर्म्मणा ॥ अथ दायाधिकारक्रमः । तत्रादौ स्वनधने औरसपुत्रस्याधिकारः । ऊर्द्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समं । भजेरन् पैतृकं ऋकथमनीशास्तेहि जीवतोरित्यादिवचनैः

पितृमरणानन्तरं पुत्रस्य स्वत्वज्ञापनात्। तदभावे पौत्रस्य तदभावे प्रपौत्रस्याधिकारः ।

End. ( नास्ति ) ।

Colophon. ( नास्ति ) ।

विवरणम् । श्रीकृष्णतर्कालङ्कारविरचितो दायभागविषयको निबन्धविशेषः सुप्रसिद्धश्चायम् ।

---

**No. 145.** दायक्रमसंग्रहः । Dáyakramasañgrahah. Substance, foolscap paper, 18×4 inches. Folia, 20. Lines, 2–8 in a page. Character, Bengali. Date, ? Appearance, not old, but worm-eaten in most parts. Prose. Generally correct. Complete.

A complete copy of the same work. But in the colophon the author is misnamed Rámakṛishna Tarkálaṅkára, instead of Śrikṛishna Tarkálaṅkára.

End. कात्यायनः दासेनोढ़ा त्वदासी या सापि दासीत्वमाप्नुयात् । यस्मात् भर्त्ता प्रभुस्तस्याः स्वाम्यधीनः प्रभुर्यतः । अत्र दासीपदस्य सम्बन्धिकतया तदुपस्थापितस्वामिन एव दासी। सा च द्विविधा कस्यापि न दासी अन्य दासी च । तत्र पूर्व्वदासोढ़त्वमात्रेणैव दासेश्वरस्य दासीपरा च तत्प्रभोरनुमतिसहकारेणानुमता च न दासी । एवं तुल्यन्यायेन कस्याप्यदासे । यदिदानीं परिणयति तदा परिणेता दासीश्वरस्य दासो भवति । अन्यदासयैतत्परिणेता दासेश्वरस्यानुमत्या दासीश्वरस्य दासः । एवञ्च यदनुमत्या दासेन दासीपरिणेता तदा तस्य स्वामिनोरेव दासदास्यौ तयोरपत्यन्तु ताभ्यामेव स्वामिभ्यां विभजनीयं । न च यद्दाताभूतं बीजं यत्र क्षेत्रे प्ररोहति क्षेत्रिकस्यैव तद्बीजं न वप्ता फलमर्हति । एष धर्म्मो गवाश्वस्य दास्युष्ट्राजाविकस्य च । विहङ्गमहिषीणाञ्च विज्ञेयः प्रसवं प्रति । ० । इति मनुवचनात् दासीश्वरस्यैव तदपत्यमिति वाच्यम् । तत्र दासीपदस्य परोढ़ा दासीपरत्वात् स्वयमूढ़ायान्तु दास्यां तथाविधापत्यस्य विभाज्यत्वमेवेति स्वार्थमतमप्येतदिति ।

Colophon. इति श्रीरामकृष्णतर्कालङ्कार(?)भट्टाचार्य्यविरचितः क्रमसंग्रहः समाप्तः । ० । श्रीगुरवे नमः ।

विवरणम् । दायक्रमसंग्रहस्य सम्पूर्णं पुस्तकमिदम् ।

---

**No. 146.** दायक्रमसंग्रहः । Dáyakramasañgrahaḥ Substance, country-made coloured paper, 18×3 inches. Folia, 32 Lines, 7 in a page. Character, Nágara. Date, ? Appearance, old. Prose. Correct. Complete.

Another complete copy of the same work.

**Colophon.** इति श्रीकृष्णतर्कालङ्कारभट्टाचार्य्यविरचितोदायक्रमसंग्रहः समाप्तः ॥ ० ॥ * । ० । ० । ० । ॐ दुर्गा । ॐ काली । श्रीयुक्तशिवनमस्त् पुस्तकञ्च ।

विवरणमनुक्तपूर्व्वम् ।

---

**No. 147.** दायतत्त्वम् । Dáyatattwam. Substance, country-made coloured paper, 18×3 inches. Folia, 44. Lines, 3–7 in a page, having a blank space of about an inch square in the middle. Character, Bengali. Date, ? Appearance, very old and worn out. Prose. Correct. Complete.

A summary of the Hindu law of inheritance under the name of *Dáyatattwa by Raghunandana of the Bengal School.* It belongs to his series of Smrititattwa.

**Beginning.** ॐ नमोगुरवे ॥ प्रणम्य सच्चिदानन्दं वासुदेवं जगत्पतिं । दायभागविधेस्तत्त्वं वक्ति श्रीरघुनन्दनः । दायभागविनिर्णयः । पितृकृतविभागश्च भ्रातृभागक्रिया तथा । अनधिकारिणोभागेष्वविभाज्यविभाज्यते । विभक्तसंसृष्टोच्छेदोविभागोनिकृतस्य च । स्त्रीधनं तद्विभागार्होऽपुत्रधनाधिकारिणः ॥ अथ दायभागः ॥

**End.** यथाक्रमं आत्मपितृमातृबान्धवाधनाधिकारिणः ते च आत्ममातुः स्वसुः पुत्रा आत्मपितुः स्वसुः सुताः आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः ॥ पितुः पितुः स्वसुः पुत्राः पितुर्मातुः स्वसुः सुताः पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः । मातुः पितुः स्वसुः पुत्रा मातुर्मातुः स्वसुः सुताः मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः । आपस्तम्बः अन्तेवासीवार्थां स्तदर्थेषु धर्मकृत्येषु योजयेद्दुहिता चेति तदर्थेषु मासिकादिना तद्भोगार्थं धर्मकृत्येष्विति अदृष्टार्थमिति एवञ्च यस्य मृतस्य धनं देशान्तरस्थितं तद्धनाधिकारित्वेपि तद्धनविनाशसम्भावनायां तदौर्द्ध्वदेहिककर्म्मार्थं तद्गुप्त्यर्थञ्च येन केनापि दातुं युक्तं यदृच्छयापि यः कुर्य्याद्दा-

स्त्रियं प्रीतिपूर्व्वकमिति नारदवचने तथापि प्रतिनिषिद्धत्वात् एतत्प्रपञ्चितं शुद्धितत्त्वे। दायभागकृतापि सर्व्वेषोक्तरीत्या मृतधनस्य मृतार्थत्व मनुसन्धेयमिति वदताप्येतत् सन्दर्शितमिति ॥ ० ॥

Colophon. इति वन्द्यघटीयहरिहरभट्टाचार्य्यात्मजश्रीरघुनन्दनभट्टाचार्य्यविरचितं स्मृतितत्त्वे दायतत्त्वं समाप्तं ॥ ० ॥ श्रीदुर्गापदपङ्कजं भजमनोमायाव्यपाधारणं ॥

विवरणम्। आर्त्तश्रीरघुनन्दनभट्टाचार्य्यविरचिताष्टाविंशतिस्मृतितत्त्वान्तर्गतं दायतत्त्वम्। सुप्रसिद्धमेतत्।

---

No. 148. दायतत्त्वम्। *Dáyatattwam.* *Substance, country-made* white paper, 16×3½ inches. Folia, 18 Lines, 6–9 in a page. Character, Bengali. Date, S'aka 1724. Appearance, old, having explanatory notes on difficult words in the margin. Prose, Generally correct. Complete.

Another complete copy of the same work.

Colophon. इति वन्द्यघटीयहरिहरभट्टाचार्य्यात्मजश्रीरघुनन्दनभट्टाचार्य्यविरचितं दायतत्त्वं समाप्तं ॥ ० ॥ * ॥ ॐ विश्वेश्वराय नमः ॥ ० ॥ ० ॥ यत्नेन लिखितं ग्रन्थं यश्चोरयति मानवः। शूकरी तस्य माता च पिता तस्य च गर्द्दभः ॥ ० ॥ ० ॥ ० ॥ वेदवन्हर्षिचन्द्रैर्मितशककारदि श्वेतपक्षे सिताख्ये ऋक्षे मागे कुलीरागतदिवसमणेरंशके षोड़शे च॥ सारं सारं स्मरारेः सुगरणचरणौ श्रीलकाव्यादिनाथः काशीवासीसलेखीत् कविवरचितं दायतत्त्वं सुतत्त्वं ॥ ० ॥ ० ॥

विवरणमुक्तपूर्व्वम्।

---

No. 149. दायतत्त्वम्। Dáyatattwam. Substance, country-made coloured paper, 18×3 inches. Folia, 35. Lines, 6 in a page. Character, Bengali. Date, ? Appearance, *fresh.* *Prose.* *Not* correct. Incomplete.

Another incomplete copy of the same work.

विवरणमुक्तपूर्व्वम्।

---

**No. 150.** दायतत्त्वम् । Dáyatattwam. Substance, foolscap paper, 14×3 inches. Folia, 32. Lines, 6 in a page. Character, Bengali. Date, ? Appearance, fresh. Prose. Generally correct. Complete.

Another complete copy of the same work.

विवरणन्तूक्तपूर्व्वम् ।

---

**No. 151.** दायतत्त्वव्याख्या । Dáyatattwa-vyákhyá. Substance, country-made yellow paper, 20×4 inches Folia, 26. Lines, 8–10 in a page. Character, Bengali. Date, ? Appearance, old and decayed. Prose. Generally correct. Complete.

A commentary on the Dáyatattwa by Kásíráma.

**Beginning.** ॐ नमोगणेशाय नमः ॥ नत्वा गुरोश्चरणपद्मरजांसि मूर्द्ध्ना श्रीकान्तकान्तचरणञ्च निधाय चित्ते । श्रीकाशिरामसुकृती कृतिनां हिताय दायस्य तत्त्वविवृतिं वितनोति यत्नात् ॥ स्मृतिशास्त्राम्बुधौ सेतुर्लोकानां सेतुं जगद्गुरु । विदितं त्रिषु लोकेषु नमामि रघुनन्दनम् । स्वकर्त्तव्यग्रन्थसमाप्तिप्रतिबन्धकविघ्नसम्भावनाऽस्ति अतः सम्भावितताहृशविघ्नविनाशार्थं ग्रन्थकारः परमेश्वरप्रणामरूपमङ्गलं कृतवान् तच्च शिष्यशिक्षार्थमादौ निबध्नाति । प्रणम्येति ।

**End** तेषां भ्रात्रादीनां दौहित्रान्ताः पितुःसन्तान इति पितृदौहित्रपर्य्यन्त इति यावत् । तदभावे पितृदौहित्रान्तसन्तानाभावे तदभावे पितामहाभावे । तदभावे मातुलाद्यभावे अतएव स्वतधने पिण्डदानतारतम्येनाधिकारादेव । एवञ्च अपुत्रधनाधिकारे च इदमस्तूक्तबान्धवाः बहवोऽज्ञातयो यत्र इत्यादिवचनस्थबान्धवा इति यावत् ते च आत्ममातृबान्धवाय ॥

**Colophon.** इति दायतत्त्वव्याख्या समाप्ता ॥ • ॥ • ॥ * ॥ ॥ * ॥

विवरणम् । काशीरामविरचिता दायतत्त्वव्याख्या प्रसिद्धेयम् ।

---

**No 152.** दायतत्त्वव्याख्या । Dáyatattwa-vyákhyá. Substance, country-made yellow paper, 12×6 inches, bound in book form. Folia, 50. Lines, 14–20 in a page. Character, Bengali. Date, ? Appearance, fresh. Prose Generally correct. Complete

Another complete copy of the same work.

विवरणन्तूक्तपूर्व्वम् ।

---

No. 153. दायभागः । Dáyabhágah. Substance, foolscap paper, 18×3 inches. Folia, 54. Lines, 5-7 in a page. Character, Bengali. Date, ? Appearance, old. Prose. Correct. Complete.

The well-known treatise on the Hindu law of inheritance and partition entitled Dáyabhágah by *Jímútaváhana, forming a part of* his series called Dharmaratna. It is the chief authority in Bengal, and *has undergone several* editions in both Bengali and Nágara characters. Of these editions that of the late Rájá Prasanna-kumár Tágore with several commentaries is by far the best. It is a splendid edition, but is now out of print. There are several translations of the Dáyabhagá in both Bengali and English.

Beginning. ॐ गणेशाय नमः ॥ मन्वादिवाक्यान्यविबुध्य येषां यस्मिन् विवादोवऽबुधा बुधानां । तेषां प्रबोधाय स दायभागोनिरूपणीयः सुधियः शृणुध्वम् ॥ अथ दायभागोनिरूप्यते । तत्र नारदः । विभागोऽर्थस्य पित्र्यस्य पुत्रैर्यत्र प्रकल्प्यते । दायभाग इति प्रोक्तस्तद्विवादपदं बुधैः । पितृत आगतं पित्र्यं तत्र पितृमरणोपजातस्वत्वमुच्यते । पित्र्यस्येति पुत्रैरिति च द्वयमपि सम्बन्धिमात्रोपलक्षणं ।

End. एकोयत्किञ्चिद्द्रव्यमन्यत्र क्रीत्वा वाणिज्यार्थं भ्रातरि विक्रीणीते एव मादृिका एकैकापि क्रिया परस्परविभक्तानामेव सम्भवति तथा विभागानुमान विद्वद्भिरनुसन्धेयं । न तु येषामेताः क्रिया इत्येतत् शब्देन बक्रीनामुपादानान्मिलितानामेव गमकत्वं भाव्यं । न्यायमूलत्वाद्वचनानां एकैकत्रापि च न्यायस्याविशेषात् । न स्यातां यत्र साक्षिणावित्यनेन यत्र साक्षिणोरभावेऽनुमानमादरणीयमित्युक्तं । नाचार्य्यगौरवपराद्धतदायभागतत्त्वप्रबोधजनरञ्जनमत्र शक्यं । किन्तु प्रमाणपरतन्त्रधियाममीषां सम्बन्धमात्रकृतये कृतिनः प्रयत्नः । बहुविधपूर्व्वनिबन्धव्याख्यासञ्जातसंशयस्यैतत् । जीमूतवाहनकृतं प्रकरणमपनुत्तये ध्येयम् ॥

Colophon. इति जीमूतवाहनकृतं दायभागप्रकरणं समाप्तम् ॥ • ॥

विवरणम् । जीमूतवाहनकृतोदायभागाख्यनिबन्धः सुप्रसिद्धोऽयं वङ्गेषु ।

---

**No 154** दायभागः । Dáyabhágah Substance, country-made yellow paper, 18×4 inches Folia, 76. Lines, 3-7 in a page. Character, Bengali. Date, ? Appearance, not old. Prose. Generally correct. Complete.

Another complete copy of the same work.

**Colophon** इति पारिभद्रमहामहोपाध्यायश्रीजीमूतवाहनकृते धर्मरत्ने दायभागः समाप्तः ॥ ० ॥ ० ॥ ० ॥ समाप्तोऽयं ग्रन्थः ॥ ० ॥ श्रीश्रीदुर्गा ॥

विवरणन्तूक्तपूर्व्वम् ।

---

**No 155** दायभागः । Dáyabhágah. Substance, country-made colourless paper, 24×3½ inches Folia, 8 Lines, 6–7 in a page Character, Bengali Date, ? Appearance, very old, writing slightly effaced in parts. Prose. Correct. Incomplete.

Another incomplete copy of the same work.

विवरणन्तूक्तपूर्व्वम् ।

---

**No 156** दायभागटीका । Dáyabhágaṭiká. Substance, country-made white paper, 18×2½ inches Folia, 58 Lines, 7-9 in a page. Character, Bengali. Date, 1725 S'aka Appearance, very old. Prose. Correct. Incomplete (Up to Aputra-dhana-vibhága).

A commentary on the Dáyabhága by Mahámahopádhyáya Srikṛishna Tarkálaṅkára. This is the most famous of the commentaries, and is held in the highest respect in Bengal. It is generally read along with the text. It has been published in both Bengali and Devanágari characters.

**Beginning.** ॐ नमो गणेशाय ॥ पादाम्बुजे द्वे जगदम्बिकायाः श्रीकृष्णविप्रो हृदये निधाय । करोति टीकामिह दायभागग्रन्थावबोधाय सदेकरम्यां ॥ ग्रन्थारम्भे विघ्नविघाताय देवतानामोच्चारणरूपमङ्गलमाचरन् शिष्यप्रवृत्त्यर्थमभिधेयप्रयोजनसम्बन्धांश्च प्रदर्शयन् दायभागमुद्दिशति मन्वादीनि तथाचोक्तं ज्ञातार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते । शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः । अत्राभिधेयो दायभागः प्रयोजनं दायभागनिर्णयः स च संशयोपनोदनद्वारा दुःखनिवृत्तिहेतुतया गौणः सम्बन्धश्च ग्रन्थस्य दायभागेन सह ज्ञाप्यज्ञापकताभावः ।

End. उक्तपर्य्यन्तानां सर्व्वेषां सम्बन्धिनामभावे ब्राह्मणधनवर्ज्जं राजा गृह्णीयात् । ब्राह्मणधनन्तु त्रैवेद्यादियुक्ता ब्राह्मणा गृह्णीयुः । एवं वानप्रस्थधनं भ्रातृत्वेनाभिमतोऽपरो वानप्रस्थ एकतीर्थ्येवो गृह्णीयात् । तथा यतिधनं सत् शिष्यः । नैष्ठिकब्रह्मचारिणोधनमाचार्य्यः । उपकुर्व्वाणस्य तु ब्रह्मचारिणो धनं पित्रादिर्गृह्णीयादिति संक्षेपः ॥ ० ॥

Colophon. इति महामहोपाध्यायश्रीयुक्तश्रीकृष्णतर्कालङ्कारभट्टाचार्य्यविरचिता दायभागटीका समाप्ता ॥ ० ॥ बाणद्वन्द्वर्षिचन्द्रैर्मितशकशरदि ग्रासपक्षेऽच्युतर्क्षे मीनस्थादित्यवारद्वितयपरिमिते चांशके जीवपक्षे । श्रीकाशीनाथशर्म्मा बुधवरसरयूतीरमैत्र्यामयोध्यामध्यास्याभूत्य रामं व्यलिखदविरतं दायभागस्य टीकां ॥ ० ॥

विवरणम् । श्रीकृष्णतर्कालङ्कारविरचिता दायभागस्य टीका सुप्रसिद्धेयं श्रेष्ठा च दायभागपरटीकानिबन्धानाम् ।

---

No. 157. दायभागटीका । Dáyabhágaṭíká. Substance, country-made red and yellow papers, 18 x 3 inches. Folia, 98. Lines, 8-9 in a page. Character, Bengali. Date, ? Appearance, old. Prose. Generally correct. Complete.

A complete copy of the same work, having an extract from Yájñavalkya at the end in which sons of different kinds are mentioned.

End. नाचार्य्येति आचार्य्याणां श्रीकरमिश्रादीनां गौरवेणादरेण परावृतो दूरीभूतो दायभागतत्त्वस्य प्रबोधो यथार्थज्ञानं येषां तादृग्जनानां रञ्जनमनुरञ्जनं अधुनानेन ग्रन्थेन न शक्यं तर्हि प्रयासो विफलोऽत्र प्रयत्न इत्यत आह किन्त्विति प्रमाणं वेदादि तत्परतन्त्रा तदधीनैव धीर्येषां तेषां मुनीनां मन्वादेः परस्परवचनाविरोधसम्पादकत्वाय तत्तात्पर्य्यार्थं कृतिनो मम प्रयत्न इत्यर्थः । सर्व्वेषामेव मुनीनां वेदार्थवक्तृत्वेन वेदानाञ्च परस्परविरोधाभावात् तद्वचनानामपि विरोधोनास्त्येव अत आपाततस्तद्विरोधो न्यायरचितानुमानेन तेषां तात्पर्य्यार्थविशेषमवधार्य्य परिहृतो यदि तदानेनैवास्माकं प्रयत्नमार्थक्यमविवेचका ननु रञ्जनस्याकिञ्चित्करत्वमिति भावः । मनीषामस्मादिति पाठे प्रमाणदर्शिनां बुद्धिसम्पादकत्वाय तैः स्वयं पर्य्यालोचनया यद्दर्शितं अस्माभिरपि तदेवोपनिबद्धमिति तेषामेतत्प्रदर्शनार्थमेव प्रयत्न इत्यर्थः ॥ ० ॥ सेतु भवाम्भोगर्द्देकहेतू कृत्वा हृदयं परदेवताङ्घ्री । श्रीमद्गुरुदेवे अस्तु दायभागे

श्रीकृष्णविप्रोविवृतिं वितेने । टीप्पनी विशदार्थेयं निगूढार्थप्रकाशिनी ।
श्रीरामोदकरी नाम्ना दायभागप्रबोधिनी ॥ ० ॥

Colophon. समाप्तेयं टिप्पनी । याज्ञवल्क्यः औरसो धर्म्मपत्नीजस्तत्समः पुत्रिकासुतः । क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा । गृहे प्रच्छन्न उत्पन्नो गूढ़जस्तु सुतः स्मृतः । कानीनः कन्यकाजातो मातामहसुतोमतः । अक्षतायां क्षतायां वा जातः पौनर्भवः स्मृतः । दद्यान्माता पिता वा यं स पुत्रोदत्तकोभवेत् । क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात् स्वयंकृतः । दत्तात्मा त्वयं दत्तो गर्भेविन्नः सहोढ़जः । उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत् सुतः । पिण्डदोऽंशहरश्चैषां पूर्व्वाभावे परःपरः । सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः ॥ ० ॥

विवरणम् । श्रीकृष्णतर्कालङ्कारविरचिता दायभागस्य सम्पूर्णा टीका । पुस्तकस्यास्यावसाने औरसादिभेदेन पुत्रभेदाश्च प्रदर्शिताः ।

---

No. 158. दायभागटीका (दीपिका) । Dáyabhágatiká (Dípiká.) Substance, country-made yellow paper, 21 × 4 inches. Folia, 27. Lines, 6 in a page. Character, Bengali Date, ? Appearance, not old Prose. Generally correct. Incomplete.

Another commentary on the Dáyabhága by Ácháryáchárya under the name of Dípiká. It is written in a more easy style than S'rikrishna's

Beginning. ॐ नमोगणेशाय । आलोच्य मन्निर्म्मितनिबन्धमाराध्य विश्वेश्वरं आचार्य्याचार्य्यस्तनुते विवृतिमिमां दायभागस्य ॥ ग्रन्थारम्भे विघ्नविघातार्थ इष्टदेवताकीर्त्तनरूपं मङ्गलमाचरन् शिष्यप्रवृत्तये प्रयोजनाभिधेयसम्बन्धाभावाद सम्बादिति ।

End. नास्ति ।

Colophon. नास्ति ।

विवरणम् । श्रीमदाचार्य्याचार्य्यविरचिता दायभागस्य दीपिकाख्या टीका असम्पूर्णा ।

---

No. 159 दायभागविवेकः । Dáyabhágavivekah. Substance, foolscap paper, 18 × 6 inches. Folia, 52. Lines, 8 in a page. Character,

Bengali. Date, ? Appearance, old. Prose. Generally correct. Complete.

A digest of the law of inheritance under the name of Dáyabhágaviveka by Rámanátha Vidyávàchaspati. It forms a part of his series called Smriti-ratnávali, following chiefly the opinions of Váchaspati Miśra.

Beginning. श्रीगणेशाय नमः । सज्जगिरिसुतेन्दवयस्यं सततमुपास्यं विरिञ्च्याद्यैः । वेदाविदितरहस्यं गिरिशनमस्यं नमस्यामः ॥ मन्वादिशास्त्रमवलोक्य मिथोविरुद्धं यत् सर्व्वदेशिविदुषां मतमाकलय्य दायभागमधिकृत्य समाह किञ्चित् श्रीरामनाथ इह तत्र रमन्तु सन्तः । प्राचीनगौरवनिवारितधर्म्मशास्त्रतत्त्वावबोधजनरञ्जनमत्यशक्यं । किन्तु प्रमाणपरतन्त्रधियां बुधानां सन्तोषमात्रकृतये कृत एष यत्नः । तत्र दायभागपदार्थमाह नारदः । विभागोऽर्थस्य पित्र्यस्य पुत्रैर्यत्र प्रकल्प्यते । दायभाग इति प्रोक्तं तद्विवादपदं बुधैः । अत्र यस्य इति पाठः सुगमः यत्तु इति पाठे विभजन-क्रियाविशेषणं स्तोकं पाक इति वत् । यत्रेति पाठेऽपि चार्थः य इत्यर्थे प्रयोगः । यत्रेति अव्ययान्तरं वा इति ऋजवः । यस्येत्यर्थे इत्यच्युतः । चूडामणिस्तु पुत्रैः पित्र्यस्य विभागो दायभागः स यत्र धने प्रकल्प्यते मिथो वैमत्यनिरासेन निर्णीयते तदिदं विवादपदं विचारस्थानमनेन उक्तमित्यन्वयः ।

End. स्त्रीकृतान्यप्रमाणानि कार्य्याण्याङ्करनापदि । विशेषतो गृहक्षेत्रदानाधमनविक्रयाः । एतान्येव प्रमाणानि कार्य्याण्याङ्करनापदि । विशेषतो गृहक्षेत्रदानाधमनविक्रयाः । एतान्येवेति प्रमाणनिरूपणं अस्वतन्त्रकृतनिवर्त्तनार्थमिति प्रतिपादयितुं । ननु इत्थार्थकृतनिवृत्तिप्रकरण एव । नारदेनोक्तेरिति हरिनाथवाचस्पतिमिश्रादयः । अधिकं लीलावतीरहस्ये द्वादशविधपुत्राणां असवर्णजातानाञ्च विभागोऽत्र नोक्तः प्रकृतानुपयोगित्वादेवमसवर्णानां स्त्रीणामपि । स च मत्कृतकौमुदीतवाचनकृत-दायभागटीकायामनुसन्धेयः ॥ * । क्वचित् संक्षेपेण क्वचिदपि च काठिन्यकथनतः क्वचिद्विस्तारैर्वा भवतु सुधियोनात्र विमुखाः । इदं सर्व्वं पूर्व्वापरमवकलय्यैव नितरामपेक्षां नो यत्नो विदधतु भवन्तः सुचिन्त्यं (?) एषा सुवर्णतन्त्री स तर्कतन्त्रनदीपितावङ्गधा । तन्त्रिकरवाल-लम्बान्मुरधुरीणं ध्वनिं तनुतात् । निरवद्या सदा सर्व्वविद्या यस्य पुरःसरी श्रीवाचस्पतिना तेन तेनेदं तन्त्रमुत्तमम् ।

Colophon इति श्रीरामनाथविद्यावाचस्पतिभट्टाचार्य्यविरचितस्मृतिरत्नावल्यां दायभागविवेकः समाप्तः ॥ * ॥ शुभमस्तु शकाब्दा ॐ नमोभगवते वासुदेवाय ॥ ॐ ॥ * ॥ ० ॥

विवरणम् । दायभागविवेकोनामश्रीरामनाथवाचस्पतिविरचितो दायभागविषयकोऽयं निबन्धस्तत्कृतस्मृतिरत्नावल्यन्तर्भूतः ।

**No 160.** दायभागविवेकः । Dáyabhágavivekaḥ. Substance, country-made yellow paper, 18×6 inches. Folia, 116. Lines, 2-6 in a page. Character, Bengali. Date, ? Appearance, old, and spoiled. Prose. Correct Complete.

Another complete copy of the same work.

विवरणमुक्तपूर्व्वम् ।

---

**No 161.** दायभागविनिर्णयः । Dáyabhágavinirnayaḥ. Substance, foolscap paper, $18 \times 4\frac{1}{2}$ inches. Folia, 14. Lines, 5-8 in page Character, Bengali. Date, ? Appearance, old, and spoiled. Prose. Correct. Complete.

A brief exposition of the law of inheritance under the name of Dáyabhágavinirnaya by Kámadeva Paṇḍita.

Beginning ॐ नमोगणेशाय ॥ नत्वा शिवपदद्वन्द्वं बुधानां हितकाम्यया । क्रियते कामदेवेन दायभागविनिर्णयः । तत्र नारदः । विभागोऽर्थस्य पित्र्यस्य पुत्रैर्यत्र प्रकल्प्यते । दायभाग इति प्रोक्तस्तद्विवादपदं बुधैः । पित्र्यस्येति पैतामहादेरुपलक्षणं । तदिति विधेयविशेषणं । चत्वारः काला विभागस्य जीवत्येव पितरि पितुर्यदा विभागेच्छा स तावदेकः ॥ कालः । निवृत्तरजस्कायां मातरि स्त्रीसुखाभिलाषिणि द्रव्यनिस्पृहे पितरि भिवनिच्छायामपि पुत्रेच्छातोऽन्यः । सरजस्कायामपि पितरि तस्मिन् वृद्धे अधर्म्मवर्त्तिनि अचिकित्स्यरोगग्रस्ते सति यदि पुत्रेच्छा सोऽन्यतरः पितृमरणानन्तरं अपर इति ।

End नारदः ॥ विभागधर्म्मसन्देहे दायादानां विनिर्णयः ॥ ज्ञातिभिर्भागलेख्येन पृथक्कार्य्यप्रवर्त्तनात् ॥ भ्रातृणामविभक्तानामेकोधर्म्मः प्रवर्त्तते विभागे सति धर्म्मोऽपि भवेत्तेषां पृथक् पृथक् चाहितं प्रतिभाव्यं दानं

प्रत्यमेव च। विभक्ता भ्रातरः कुर्य्युर्नाविभक्ताः कथञ्चन। तथा यद्येकजाता बहवः पृथक्धर्म्माः पृथक्क्रियाः। पृथक्धर्म्मगुणो येषां भवेयुस्तेपि माविचः ॥ ० ॥

Colophon. इति दायभागविनिर्णयः समाप्तः ॥ * ॥

विवरणम्। दायभागविनिर्णयो नाम कश्चिद्दायभागीयनिबन्धः श्रीकामदेवपण्डितविरचितः।

---

No. 162. दायसंक्षेपः। Dáyasaṅkshepaḥ. Substance, country-made yellow paper, 18×4 inches. Folia, 3. Lines, 9–10 in a page. Character, Bengali. Date, ? Appearance, old, worn out, torn, and writing destroyed in most parts. Prose. Correct. Complete.

An abstract of the Hindu law of inheritance by Gaṇeśa Bhaṭṭa.

Beginning. श्रीगणेशाय ॥ अथ मृतधनाधिकारिणां व्यवस्थासंक्षेपः। यः श्राद्धकर्त्ता स एव न सर्व्वत्र धनाधिकारी प्राधिकत्वात् यथा मातापितरौ दायाधिकारिणौ श्राद्धादिकारि + + + + + यः तत्रादौ औरसपुत्राः धनाधिकारिणः ततः पौत्राः तथा औरसपुत्रेण सह मृतपितृकपौत्रमृतपितृपितामहयोरेकदैवाधिकारः तथाविधपुत्रप्रपौत्रयोरेकदैवाधिकारः एतयोरभावे क्षेत्रजातानामधिकारः औरसे जाते पुनस्तेन सह तृतीयांशाधिकारिण एषां पुत्रादीनामभावे पत्न्या अधिकारः पत्न्या अभावे अदत्ता कन्या तदभावे दत्ता कन्या उभयोःकन्ययोः सपुत्रासम्भावितपुत्रयोस्तुल्याधिकारः अन्ययोरेकतराभावे अन्या अधिकारिणी। एतयोरभावे वन्ध्याविधवयोस्तुल्याधिकारः। दुहितुरभावे दौहित्रः दौहित्राभावे माता पिता च। तयोरभावे भ्रातरः तत्रादौ सहोदराः ततो वैमात्रेयाः। संसर्गिअसंसर्गिसहोदरेषु संसर्गिसहोदरस्यैवाधिकारः। एवं वैमात्रेयेषु संसर्गिवैमात्रेयाः। यदा तु संसर्गी वैमात्रेयोऽसंसर्गिसहोदर स्तदा उभयोस्तुल्याधिकारः। यदा तु सोदरासोदरौ संसर्गिणौ तदा सोदराः भ्रात्रभावे भ्रातृपुत्राः भ्रातृपुत्रेष्वादौ सहोदरसुताः। अत्रापि पूर्व्ववत् संसर्ग्यसंसर्गिव्यवस्था। ततः सोदरपौत्राः ततो वैमात्रेयपौत्राः ततो भागिनेयः ततः पितामहपितामह्यौ ततः पितृ + + + (दौहित्रः?) ततस्तत्सुतः ततः पितामहदौहित्रस्ततः पितामहभ्रातृसुतः ततस्तत्पौत्रः ततः प्रपितामहदौहित्रः ततो मातामह-

मातुलो ततो निकटक्रमेण सपिण्डास्ततः समानोदकाः ततो गोत्रजाः क्रमशोऽधिकारिणः ततः शिष्यः ततः सहाध्यायी ततः श्रोत्रियः ततो ब्राह्मणधनवर्ज्जं राजाधिकारी । ब्राह्मणधनस्य सर्व्वाभावे ब्राह्मण एवाधिकारी । वानप्रस्थयतिब्रह्मचारिणां क्रमेणाचार्य्यसच्छिष्यधर्म्मभ्रातैकतीर्थिनः ॥

End अप्राप्तस्त्रीधनायै मात्रे पुत्रतुल्यांशोदातव्यः । प्राप्तस्त्रीधनायै तु अर्द्धांशोदातव्यः । अपुत्रायै + + + (विधवायै?) भोजनाच्छादनमिति दायभागः । मिश्रमते तु मात्रेऽपुत्रायै विमात्रे च पुत्रतुल्यांशोदातव्यः । मात्रे वैमात्रे वा प्रतिश्रुतं स्त्रीधनमद + + + पितरि पुत्रैस्तद्दातव्यं । भर्त्तुरनुज्ञया धृतालङ्कारो भर्त्तर्य्यपि भार्य्याया एव इति मिश्राः मृतपितृकाणां अविभक्तभ्रातॄणां मध्ये एकस्य मरणेऽपुत्रायै तत्पत्न्यै तद्भ्रातृभागो न दातव्यः स्त्रीधनं ग्रासाच्छादनञ्च देवरैर्दातव्यं । पितृद्रव्यसाधारणद्रव्यव्ययेन विना यदर्ज्जितं तदर्ज्जकस्यैव अनिच्छया तत्र विभजनीयं पित्रादिद्रव्यव्ययेन अर्ज्जितभूमिभिन्नधने अर्ज्जकस्य द्व्यंशः भूमौ तु तुरीयांशः + + + एकांशिनः । एवञ्च पुत्रैः पितृऋणं अवश्यं शोधनीयं । पूर्व्वसंस्कृतैर्भ्रातृभिः असंस्कृतभ्रातृभगिनीनां पितृद्रव्येण तदभावे स्वीयद्रव्येण वा संस्काराः कर्त्तव्याः । देवगृहपुष्करिण्यादिकरणार्थं स्थापितं धनं देव ब्राह्मणादिप्रतिश्रुतं वा मृते पितरि तद्धनस्वामिना तद्देयं । ०।

Colophon. इति गणेशभट्टकृतदायभागव्यवस्थासंक्षेपः सम्पूर्णः । * । अत्र किञ्चिद् दुष्टस्थले सुधीभिरनुपदादिना तद्दुष्टं परिहरणीयं । ० ॥ श्रीरामाय नमः ॥ श्रीसीतायै नमः ॥ श्रीकृष्णाय नमः ॥ श्रीराधाकृष्णाभ्यां नमः ।

विवरणम् । गणेशभट्टकृतसंक्षिप्तदायभागव्यवस्थाविषयकोऽयं निबन्धः ।

---

No. 163 दिव्यतत्त्वम् । Divyatattwam. Substance, foolscap paper, 18 × 4 inches. Fol a, 23 Lines, 8–9 in a page. Character, Bengali. Date, ? Appe rance, not old. Prose. Generally correct. Complete.

A short treatise on ordeals by means of sacred things such as sanctified fire, water, &c., by Raghunandana of the Bengal School. It forms a section of his Smṛititattwa series. At the end, there is a discussion on the difference between such trials and those decided by taking oaths.

**Beginning.** ॐ नमो गणेशाय । प्रणम्य सच्चिदानन्दं गोविन्दमजमव्ययं। दिव्यतत्त्वानि तत्प्रीत्यै वक्ति श्रीरघुनन्दनः । अथ दिव्यानि । तत्र बृहस्पतिः । घटोऽग्निरुदकञ्चैव विषं कोषश्च पञ्चमं । षष्ठञ्च तण्डुलाः प्रोक्तं सप्तमं तप्तमाषकः । अष्टमं फालमित्युक्तं नवमं धर्म्मजं स्मृतं । दिव्यान्येतानि सर्व्वाणि निर्द्दिष्टानि स्वयम्भुवा । तच्च मानुषप्रमाणानिर्णेयस्यापि निर्णायकं यत्तद्दिव्यमिति लोकप्रसिद्धं । एतद्द्वयमपि शपथानामप्यस्ति तथापि कालान्तरनिर्णायकत्वेन तेषां भेदात् ।

**End.** ततो मयैतत्कृतं न कृतमिति प्रतिज्ञामुच्चारयन्तं पुत्रस्य दाराणाम्बा शिरः स्पर्शयेत् । एवं ब्राह्मणस्पर्शेऽपि कन्या स्पर्शनन्तु दक्षिणकरेण यथोपदिश्यते कर्म्म कर्त्तुरङ्गेनतूच्यते ॥ दक्षिणस्तत्र विज्ञेयः कर्म्मणां पारगः करः इति कात्यायनोक्तेः । अतएव विष्णुना दूर्व्वाकराद्यभिहितं । सर्व्वेष्वर्थजातेषु मूल्यं कनकं प्रकल्पयेत् । तत्र कृष्णलोने शूद्रं दूर्व्वाकरं ग्राहयेत् । द्विकृष्णलोने तिलकरं त्रिकृष्णलोने जलकरं चतुःकृष्णलोने सुवर्णकरं पञ्चकृष्णलोने शीतोद्धृतसीताकरं सुवर्णार्द्धोने कोषोदेयः शूद्रस्य तथाविधे द्विगुणेऽर्थे यथा विहितसमयक्रिया वैश्यस्य त्रिगुणेऽर्थे राजन्यस्य चतुर्गुणेऽर्थे ब्राह्मणस्येति कृष्णलोने ब्राह्मणरजतकाञ्चनख्यादूने एवमन्यत्र बृहस्पतिः । सत्यवाहनशस्त्राणि गोबीजकाञ्चनानि च । देवब्राह्मणपादांश्च पुत्रदारशिरांसि च । एते च शपथाः प्रोक्ताः स्वल्पेऽर्थे सुकराः सदा । साहसेष्वभिशापेषु दिव्यान्याहुर्विशोधनं, स्वल्पेऽर्थे धर्म्मजविषयान्यविषय इत्यर्थः । अत्र शपथानां दिव्यान्तरेणोपन्यासात् घटादिमध्येऽपरिगणनाच न दिव्यत्वं । अतोऽत्रादिव्यधर्म्माणां उपवासार्द्रवाससादीनां नातिदेशः । शौचार्थन्तु स्नानाचमनादीनां आदरः कर्त्तव्यः । यमः कृत्वा चापात्तु शपथं कीटस्य वधसंयुतं । अनृतेन युक्तेन वधेन च तथा नरः तस्मान्न शपथं कुर्य्याद्विरोधिभिर्यावधेधितं । कीटस्येति प्राणिमात्रोपलक्षणं । तेन प्राणिनोऽन्यस्यानुपयुक्तस्यापि वधसंयुक्तः शपथोऽमार्येचेतुः । तद्वधपापेन मिथ्याशपथकर्त्ता युज्यत इत्यर्थः । ० ।

**Colophon.** इति श्रीरघुनन्दनभट्टाचार्य्यविरचितं दिव्यतत्त्वं समाप्तं ।

विवरणम् । दिव्यतत्त्वं अत्र पापिनां पापनिर्णयार्थं पुरा यानि दिव्यान्यनुष्ठितान्यभवन्, तान्येव समालोचितानि । अपि च दिव्यशपथानां भेदोदर्शितः । रघुनन्दनभट्टाचार्य्यकृतिस्मृतितत्त्वान्तर्गतोऽयं निबन्धः ।

---

No. 164. दत्तकदर्पणः । Dattakadarpanah. Substance, foolscap paper, 10×5 inches. Folia, 13. Lines, 8-11. Character, Nágara. Date, ? Appearance, almost new. Prose. Generally correct. Complete.

A digest of the Hindu law of adoption under the name of Dattakadarpana by Dvaipáyana.*

Beginning. श्रीकृष्णाय नमः ॥ श्रीगणेशाय नमः । अथ दत्तके प्राह्यनिर्णयः ॥ तत्रात्रिः ॥ अपुत्रेणैव कर्त्तव्यः पुत्रप्रतिनिधिः सदा ॥ पिण्डोदकक्रियाहेतोर्यस्मात् तस्मात् प्रयत्नतः ॥ इति अपुत्रेणैवेत्येवकारेण पुत्रवतोनाधिकारः । माता पिता वा दद्यातां यमद्भिः पुत्रमापदि इति मानवीयं तथा व्याख्यातमपरार्केण आपदि प्रतिग्रहितुरपुत्रत्व इति । यद्वा आपदि दुर्भिक्षादौ अनापदि तु दातुरयं प्रतिषेध इति मिताक्षरायां ।

End. जनकस्य पुत्रपत्न्याद्यभावे दत्तकोद्वयोर्दद्यात् ॥ अन्यथा पालकस्यैव तत्र द्वयोः पित्राद्योः पृथक् पिंडदानं । द्वयोरप्येकेनैको वेति ॥ इदं च दत्तकोमहालयादौ(?)प्रतिसांवत्सरिकं तयोर्भिन्नमेव । संध्याभिवादन श्राद्धादौ गोत्रं पालकस्यैव विवाहे तु उभयोर्गोत्रम् ॥ दत्तकग्रहणानंतरं औरसेतूत्पन्ने पृथक्पुत्रयोर्विभागः । औरसस्य दत्तकश्चतुर्थभागभाक् तं(?) इत्यलं प्रपंचितेन । द्वैपायनेन विदुषा संख्याद्दत्तकदर्पणः ॥ निर्म्मितो नरहरिप्रीत्यै सद्भिरालोक्यतां मुहुः ॥

Colophon. इति दत्तकनिर्णय.(?) समाप्त ॥

विवरणम् । दत्तकदर्पणोनाम दत्तकविषयकोनिबन्धविशेष श्रीद्वैपायनविरचितः ।

---

No. 165. दत्तकनिर्णयः । Dattakanirnayah Substance, country-made yellow paper, 16×2 inches Folia, 6. Lines, 4-5 in a page Character, Bengali. Date, ? Appearance, new Prose Correct. Complete.

A digest of the law of adoption entitled Dattakanirnaya by Srínátha Bhatta

---

* It cannot be ascertained whether Dvaipáyana is the family-name or the real name of the author.

**Beginning.** ॐ नमो गणेशाय ॥ वाक्यं मुनीनां परिदृश्य यत्नात् मतं तु शास्त्रां निखिलं विविच्य। श्रीनाथभट्टाभिधकोविदेन निरूप्यते दत्तकनिर्णयोऽयं ॥ तत्रादौ मुख्यगौणनिरूपणं । यथा नारदः ॥ मातापितृणां सुतो मुख्यस्तदभावेपि गोत्रजः । तदभावेऽन्यगोत्रोऽपि दत्तकः परिदृश्यते । तत्र सपिण्डमध्ये भ्रातृसुतोमुख्यः । यथा वृद्धमनुः ॥ यद्येकजाता बहवोभ्रातर सहोदराः । एकस्यैव सुते जाते सर्व्वे ते पुत्रिणोमताः ॥ तत्र भ्रातृसुतस्य पुत्रत्वाभिधानात् तस्यैव दत्तकत्वे सुतरां मुख्यता । दत्तकप्रकरणे भागिनेयं निषेधयति । नारदः । दौहित्रो भागिनेयश्च शूद्राणां विहितः सुतः । ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचित् ॥

**End.** दत्तकस्य जनकवंशनिवृत्तेः प्रतिग्रहीतृवंशीयत्वेन ततृ पित्रादिश्राद्धकर्तृत्वं प्रतीतं तत्र कस्य मातामहपक्षोभविष्यतीति महान् संशयः । ननु प्रतिग्रहीतृपक्षीपितर एव तन्मातामहा इति वाच्यं न तथात्वे प्रमाणाभावात् । गोत्र रिक्थे जनयितुर्न हरेद्दत्त्रिमः सुतः । गोत्र रिक्थानुगः पिण्डोव्यपैति ददतः स्वधेति मनूक्तात् । भिन्नगोत्राः पृथक्पिण्डाः पृथक् वंशकराः स्मृताः। ब्राह्मपुराणोक्ताच जनकपित्रादिश्राद्धनिवृत्तिः प्रतीयते न तु जननीपितृश्राद्धनिवृत्तिः । अतः प्रकृतिपितर एव दत्तकमातामहाः । तेषां श्राद्धं दत्तकेन करणीयमिति वीरेश्वरमतं साधीयः यत्तु जनक गोत्रोपनीतबालकस्यापि दत्तकत्वविधायकं शौनकादिवचनं तद्गुरूकत्वदेशादौ व्यवस्थापनीयमिति । * । * ।

**Colophon.** इति श्रीनाथभट्टकृतदत्तकनिर्णयः समाप्तः । * । * । * । * । * । * । * । * । * । * ।

विवरणम् । श्रीश्रीनाथभट्टविरचितोदत्तकनिर्णयो नाम दत्तकविषयकोऽयं निबन्धः ।

---

**No. 166.** दत्तकनिर्णयः। Dattakanirṇayah. Substance, country-made yellow paper, 13×3½ inches. *Folia*, 5. *Lines*, 7–8 *in a page*. *Character*, Bengali. *Date*, ? *Appearance*, old. *Prose*. *Correct*. *Complete*.

Another complete copy of the same work.

विवरणमुक्तपूर्व्वम् ।

---

**No. 167.** दत्तकमीमांसा । Dattaka Mimáñsá. Substance, country-made white and red papers, 8×4½ inches. Folia, 43. Lines, 9 in a page. Character, Nágara. Date, Samvat 18 (?). Appearance, very old. Prose. Correct. Complete.

A digest of the law of adoption under the name of Dattaka Mimáñsá by Nanda Paṇḍita. It is held as the chief authority on the subject throughout the country, and has been published with commentaries in this part of the country by the late Bharata Chandra S'iromaní of the Calcutta Sanskrit College, and recently by Mahámahopádhyáya Madhusúdana Smṛitiratna.

Beginning. ॥ श्रीगणेशाय नमः ॥ अभिवंद्य जगद्वंद्यपदद्वंद्वविनायकं पुत्रीकरणमीमांसां कुरुते नंदपंडितः ॥ १ ॥ केन कीदृक् कदा कस्मै कस्मात् कः क्रियतां सुतः । विविच्य श्रौतं यत्पूर्व्वैस्तद्गेषमिहोच्यते ॥ २ ॥ तत्रादावत्रिः । अपुत्रेणैव कर्त्तव्यः पुत्रप्रतिनिधिः सदा । पिंडोदकक्रियाहेतोर्यस्मात् तस्मात् प्रयत्नतः । इति । अपुत्रोऽजातपुत्रो मृतपुत्रो वा ।

End. अथ दत्तकविभागः । तत्र वशिष्ठः । तस्मिंश्चेत् प्रतिगृहीत औरस उत्पद्येत चतुर्थभागभागी स्यात् दत्तक इति । तदभावे तु सर्व्वहरः ॥

Colophon. इति श्रीधर्म्माधिकारिरामपंडितात्मजश्रीनंदपंडितविरचिता दत्तकमीमांसा समाप्ता ॥ यादृशं पुस्तकं दृष्टं तादृशं लिखितं मया । यदि शुद्धमशुद्धं वा मम दोषो न दीयते ॥ १ ॥ भग्नपृष्ठकटिग्रीवस्तब्धदृष्टिरधोमुखं । कष्टेन लिखितं ग्रन्थं यत्नेन परिपालयेत् ॥ २ ॥ तैलाद्रक्षेज्जलाद्रक्षेद्रक्षेच्छिथिलबंधनात् । मूर्खहस्ते न दातव्यमेतद्वदति पुस्तकम् ॥ ३ ॥ संवत् १८ ।

विवरणम् । नन्दपण्डितकृता दत्तकमीमांसा नाम सुप्रसिद्धैव । मुद्रिता प्रकाशिताचेयम् ।

---

**No. 168.** दत्तसिद्धान्तमञ्जरी । *Dattasiddhánta-manjarí.* Substance, country-made white paper, 10×3½ inches. Folia, 38. Lines, 7 in a page. Character, Nágara Date, ? Appearance, old, and slightly worm-eaten. Prose Generally correct. Complete.

A work on the same subject under the name of Dattasiddhánta Manjarí by Bálakṛishṇa Sarman, son of Bhadra Díkshita.

**Beginning.** श्रीगणेशाय नमः ॥ प्रणम्य परमात्मानमद्वैतानंदविग्रहं । क्रियते युक्तियुक्ताभिर्दत्तसिद्धांतमंजरी ॥ १ ॥ मान्यान् प्रणम्य विहितांजलिरेष भूयो भूयो विधाय विनयं विनिवेदयामि ॥ दूष्यं वचोमम परं निपुणं विभाव्य भावाववोधविहितोमु दुनोति दोषः ॥ १ ॥ अथ पितुरौरसपुत्रैर्वेकपुत्रत्वमिव तदतिरिक्तदत्तादिभिरपि तस्य तत्त्वं स प्रमाणमस्ति न वेति विचारे सप्रमाणमेवैतदिति सिद्धांतप्रतिपादकं दत्तसिद्धान्तमंजरीनामकं प्रकरणमारभते । दत्तादयश्च ॥ औरसोधर्म्मपत्नीजस्तत्समः पुत्रिका सुत इत्यादि याज्ञवल्क्याबोधिताः प्रसिद्धा एव ।

**End.** यद्येवं स्त्वौरस उत्पद्यते तुरीयभागे प्रभवतीति ह बौधायन इति ॥ 'मंतासंतो (?) प्रसिद्ध्यै दत्तसिद्धांतमंजरी । अकारि बालकृष्णेन नेम वेषां मुदेस्तु 'सा ॥

**Colophon.** ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्य्य सर्व्वतंत्रस्वतंत्रश्रीमदद्वैतानंदभगवत्पादारविंदध्यानप्रवणमाणांतःकरणेन श्रीमत्पलनीटकरकुलोत्तंसश्रीमद्देवभट्टदीचितपंडितात्मजेन बालकृष्णशर्म्मणा विरचिता दत्तसिद्धांतमंजरी समाप्ता ॥

विवरणम् । दत्तसिद्धान्तमञ्जरी नाम कश्चिद्दत्तकविषयकोनिबन्धः बालकृष्णदीचितविरचितः ।

---

No. 169. दत्तकविधिः । Dattakavidhih Substance, country-made white paper, 9×4 inches. Folia, 6. Lines, 8 in a page Character, Nágara. Date, ? Appearance, not old. Prose. Correct. Incomplete.

A section of the Vyavahára Mayúkha, treating of the law of adoption, entitled Dattakavidhi.

**Beginning.** ॥ श्रीः ॥ अथ व्यवहारमयूखोक्तदत्तकविधिः ॥ मनुः ॥ मातापिता वा दद्यातां यमद्भिः पुत्रमापदि । सदृशं प्रीतिसंयुक्तं स ज्ञेयोदत्त्रिमः सुतः । वा अन्यतराभावे पितैव दद्यात् पित्रभावे मातैवोभयसत्त्वे तूभावपीति मदनः । आपदुपदयादनापदि न देयः अयं निषेधो दातुरेव पुत्रपापौ न कर्त्तव्यं इति विज्ञानेश्वरः ।

**End.** ( नास्ति ) ।

**Colophon.** ( नास्ति ) ।

विवरणम् । व्यवहारमयूखनिबन्धस्य दत्तविषयकोऽंशविशेषः ।

---

**No. 170.** स्मृतिचन्द्रिका (व्यवहारकाण्डः) । Smritichandriká (Vyávahárakándah) Substance, country-made yellow paper, 22 × 5 inches. Folia, 207. Lines 7-10 in a page. Character, Bengali. *Date*, ? Appearance, very old, worn out, and torn. Prose. Generally correct. Complete

The Vyávahára portion of the Smritichandriká, a serial work on Hindu law by Deváraja Paṇḍita son of Keśava Paṇḍita, held as an authority in the Deccan.

Beginning. श्रीगणेशाय नमः ॥ सरस्वतीपतिं वन्दे श्रियःपतिमुमापतिं । त्वियां पतिं गणपतिं बृहस्पतिमुखान्मुनीन् ॥ पदे पदे प्रस्खलितं प्रतिवादिशिरोवधि लक्षणादृष्टिविषये चन्द्रिका प्रवितन्यते ॥ १ ॥ अथेदानीं व्यवहारकाण्डमारभ्यते ॥ तत्रादौ व्यवहारस्वरूपं निरूप्यते ॥ अत्र बृहस्पतिः ॥ धर्म्मप्रधानाः पुरुषाः पूर्व्वमासन्नहिंसकाः । लोभद्वेषाभिभूतानां व्यवहारः प्रकीर्त्तित इति ॥ अस्यार्थो नारदेनविवृतः । धर्म्मैकतानाः पुरुषा यदासन् सत्यवादिनः । तदा न व्यवहारोऽभून्न द्वेषो नापि मत्सरः । नष्टे धर्म्मे मनुष्याणां व्यवहारः प्रकीर्त्तित इति ॥

End. याज्ञवल्क्यः । राजयानासनारोहे दण्डोमध्यम साहस इति ॥ कात्यायनोपि राजक्रीडासु ये सक्ता राजवृत्त्युपजीविनः । अप्रियस्य च वक्तारोवधस्तेषां प्रवर्त्तयेत् ॥ पुरः प्रमाणप्रकृतिसंभेदादौ राज्ञा यत् कार्य्यं तदस्माभि· प्रागेव प्रसङ्गादेवास्मिन् काण्डे सदाचारकाण्डे वाभिहितमित्युपरम्यते येन प्रकीर्णकाख्यपदप्रतिपाद्यं किञ्चिदेवेन प्रतिपादितं अवशिष्ट मिह तत्र प्रसङ्गादुक्तमनुसन्धेयं ॥

Colophon. इति स्मृतिचन्द्रिकायां प्रकीर्णकाख्यस्य पदस्य विधिवितानं ॥ समाप्तो व्यवहारकाण्डः श्रीकेशवादित्यसमुद्भवस्य देवस्य शास्त्रदिव्यराजमूर्त्तेः चन्द्रिकां प्राप्य सुखेन लोकाः कुर्व्वन्तु सर्व्वे व्यवहारशुद्धिं ॥ * ॥ * ॥ * ॥

विवरणम् । स्मृतिचन्द्रिकाख्यनिबन्धस्य व्यवहारकाण्डमात्रात्मकमिदं पुस्तकम् ।

---

**No 171.** स्मृत्यर्थनिर्णयः । Smrityartha-nirnayah. Substance, country-made yellow and white papers, 9 × 5 inches. Folia, 68 Lines, 11 in a page. Character, Nágara. Date, ? Appearance, fresh. Prose. Correct Incomplete.

A digest of the civil law of the Hindus under the name of Smṛityarthachandriká. Anonymous.

Beginning. ॥ श्रीगणेशाय नमः ॥ लोके धर्म्ममनुष्याणां विवादे तुल्यधर्म्मके ॥ निर्णयः क्रियतेऽस्माभिर्युक्तं स्मृत्यनुरोधतः ॥ सकलव्यवहारपदनिर्णयार्थं स्मृत्यर्थनिर्णयः क्रियते ॥ तत्र नारदः ॥ मनुः प्रजापतिर्यस्मिन् काले राज्यमबुभुजत् ॥ धर्म्मैकतानाः पुरुषास्तदासन् सत्यवादिनः ॥ तदा न व्यवहारो भून्न द्वेषो नापि मत्सरः । नष्टे धर्म्मे मनुष्येषु व्यवहारः प्रवर्त्तितः । द्रष्टा च तस्य न्यायस्य राजा धारयिता कृतः ॥

End. ( नास्ति ) ।

Colophon ( नास्ति ) ।

विवरणम् । स्मृत्यर्थनिर्णयो नाम व्यवहारविषयकोऽयं निबन्धः ।

---

No. 172. शूद्रधर्म्मतत्त्वम् । Súdradharmatattwam. Substance, foolscap paper, $18 \times 5\frac{1}{2}$ inches. Folia, 99. Lines, 7–8 in a page. Character, Bengali. Date, ? Appearance, rather old Prose. Generally correct. Complete.

A work treating of religious observances enjoined on the Súdras under the name of Súdradharmatattwa by Kamalákara Bhaṭṭa, son of Rámakṛishṇa Bhaṭṭa, and grandson of Náráyana Bhaṭṭa. It is a voluminous work, called otherwise Súdra Kamalákara, the codex under notice forming a part of the whole. Only *saṅkara* castes and their occupations are treated of in this.

Beginning. श्रीगणेशाय नमः ॥ प्रणम्य रामं पितरौ कमलाकरशर्म्मणा । रामकृष्णात्मजेन शूद्रधर्म्मो निरूप्यते । तत्र शूद्रत्वमुत्पत्तिप्रयुक्तजातत्वं विप्रत्वादिवत् । यद्यपि मर्य्यादाकालीने विश्वामित्रादौ च भेतत् तथापि तत्रादृष्टविशेषारब्धशरीरत्वमेव ब्राह्मण्यमन्यत्र पूर्व्वोक्तमेवं शूद्रेऽपीति दिक् तत्र पद्भ्यां शूद्रोऽजायत शूद्रो मनुष्याणामश्वः पशूनामिति बह्वृचश्रुतिरीत्यादिश्रुतिभिः मुखबाहूरुपज्जानामस्य वर्णो यथाक्रमं लोकानान्तु विवृद्ध्यर्थं मुखबाहूरुपादतः ब्राह्मणं क्षत्रियं वैश्यं शूद्रञ्च निरवर्त्तयदिति मन्वादिस्मृतिभिश्च शूद्रस्य वर्णत्वेऽपि कर्म्मणां निषेधोऽवगम्यते । तथा च ब्रह्मपद्धतिः पञ्चाशाणाञ्चत्वारो व... शूद्र इति तथाच्छूद्रोपपत्ते न ब्रह्मयो

न हि देवता श्वबद्धमन्तेति च तैत्तिरीयश्रुतिः । पञ्चां पूज्यते इति पशुजङ्गमानित्यर्थः ।

End — पुक्कसानां नगरीवीथीसंरचणमयानायस्वतनिर्हरणशोधनच्छेदनानि मधुपातनं शाचिकोदरर्थं विकर्त्तनं कूपादीखननं च चण्डालानां श्मशानसंरक्षण शूद्रपरिवपनवध्यघातानि कर्म्माणि स्वपचानां चैतत् श्वकस्य नाना कर्म्मणा विकल्पः ससुचयो वा अन्ये जातिविवेके ज्ञेया इति संक्षेपः घोषाद्वर्ण(?)गहनार्णव कर्णधारः शास्त्रान्तरेषु निखिलेष्वपि मर्म्मभेत्ता योन समः किल ततः कमलाकरेण । प्रीतोऽस्तुनाद्य सङ्गतीषु मराधकृष्णः ॥ ० ॥ * ॥ ० ॥ * ॥

Colophon — इति श्रीमज्जगद्गुरुमीमांसकनारायणभट्टसूरिसूनुरामकृष्णभट्टात्मजकमलाकरभट्टकृते शूद्रधर्म्मतत्त्वे शूद्रसमसङ्करजातस्वरूपतद्वृत्तिनिरूपणं समाप्तमयं निबन्धः ॥ ० ॥ * ॥ श्रीश्रीईश्वर. ॥ लिपिरियं श्रीगङ्गानारायणमल्लिकेन ॥ ० ॥ ० ॥ ० ॥ ० ॥

विवरणम् । श्रीकमलाकरभट्टविरचितो शूद्रधर्म्मतत्त्वं नामायं शूद्रकमलाकरापरपर्य्यायो निबन्धः । पुस्तकमिदमंशमात्रमय शूद्रसमसङ्करजातस्वरूपतद्वृत्तीनाञ्च निरूपणमस्ति ।

---

No. 173. शूद्रधर्म्मतत्त्वम् । Súdradharmatattwam. Substance, country-made yellow paper, 14×6 inches Folia, 164 (of which the first two are wanting). Lines, 9 in a page. Character, Nágara. Date, ? Appearance, very old, worn out, some of the papers spoiled, and the writing slightly effaced in many places. Prose. Generally correct. Complete (except the first two folia).

Another copy of the same work having the following additional matter at the end.

ननु कलौ क्षत्रियवैश्याभाव उक्तोभागवते नवमस्कन्धे इक्ष्वाकूनामयं वंशः सुमित्रांतोभविष्यति यतस्तं प्राप्य राजानं संस्था प्राप्स्यन्ति वै कलौ देवापियोगमास्थाय कलापग्राममाश्रितः सोमवंशं कलौ नष्टं कृतादौ स्थापयिष्यतीति द्वादशेपि एतेषां नाम लिङ्गानां पुरुषाणां महात्मनां कथामात्रावशिष्टा कीर्त्तिरेव स्थिता भुवि देवापिः शंतनोर्भ्राता मरुश्चेक्ष्वाकुवंशजः कुलापग्राम आसाते महायोगबलान्वितौ ताविहैत्य कलावंते वासुदेवानुशिक्षितौ वर्णाश्रमयुतं धर्म्मं पूर्व्ववत् प्रथयिष्यतः । विष्णुपुराणेपि देवापि पौरवोराजा मरुश्चेक्ष्वाकुवंशजः कृते युगे इहागत्य क्षत्र-

आवर्मकौ हि तौ तथा + + + + तच विनाशकृत् नंदच कलेरादौ परीचितानंतरं जातः आरभ्य भवतोजन्म + + + तदाभिषेचनं एतद्वर्ष-मदमंतु मतं पंचदशोत्तरेपि ब्राह्मणः चत्रविट्शूद्रा वर्णास्तयो द्विजाः युगेयुगे स्थिताः सर्व्वे कलावाद्यंतयोः स्थितिः अतः कथं द्विजवंशांकुरजा अताः मैवं कलौ तु बीजभूतास्तु केचित्तिष्ठंति भूतले तथैव देवापिपरुषौ सांप्रतं ममवस्थितौ इति विष्णुपुराणम् । अब्धहवविशः शूद्रा बीजार्थं च इह स्थिताः कृते युगे हि तैः सार्द्धं निर्विशेषास्तदाभवन्निति मात्स्यो-क्तेश्च प्रच्छन्नरूपाः स्वकर्मभ्रष्टाः चत्रियाः वैश्याश्च सन्त्येव क्वचिदित्यस्मात् पितृचरणाः । यो + स्ततंत्र(?)मदार्णवकर्णधारः शास्त्रांतरेषु निखिलेष्वपि मर्म्मभेत्ता योत्र यमः किल हव· कमलाकरेण श्रीमोऽमुनास्तु सुकृतो-बुधरामकृष्णः ।

Colophon. इति श्रीमद्दित्यादि ।

विवरणमन्नपूर्व्वम् ।

---

**No. 174.** शूद्रकमलाकरः । *Śúdrakamalákarah.* Substance, country-made white paper, 11 × 4 inches. Folia, 80 (of which fol. 1 is wanting). Lines, 12-13 in a page. Character, Nágara. Date, ? Appearance, very old, and worm-eaten throughout. Prose. Generally correct. Complete (except the first folium and without any colophon).

Another copy of the same work.

विवरणमन्नपूर्व्वम् ।

---

**No 175** प्रायश्चित्तमनाहिताग्निः । *Práyaśchita-manáhitágnih.* Substance, country-made white paper, 8 × 3 inches Folia, 3. Lines, 8-11 in a page. Character, Nágara. Date, ? Appearance, very old. Prose. Generally correct. Incomplete.

A work treating of the penance to be performed by one failing to keep the sacred fire at the proper time. This is rather a Vedic work and should have been placed among Vedic MSS. Anonymous.

Beginning. श्री । अथ प्रयोगः । तत्र ज्येष्ठ्याद्दिताग्नित्वमित्येवमादिना आधाने अधिकारः । सत्यधिकारे अग्न्याधाने अनाहिताग्निः प्रायश्चित्तं कुर्य्यात् ।

तद्यथा प्रायश्चित्तं कर्त्तुं गणपतिपूजनं कृत्वा चैनैकं वाध्यात्मविदं पर्षत्स्वेनोपविश्य कृतस्नानः शक्तौ सत्यां क्लिन्नवासाः अभुंजानः पर्षदं प्रदक्षिणीकृत्य साष्टांगं प्रणमेत्। ततः किं ते कार्य्यमित्या सावादीः मध्य मेव वदे. इति पृष्टे पर्षद्ये गोष्टपयोः प्रत्येकप्रत्याम्नायत्वेन पापघ्ना महाविष्णुप्रीत्यर्थं गोमिथुननिष्क्रयीभूतं पर्षदे संप्रददे इति यथाशक्ति द्रव्यं निधायामुकस्य मे अनाहिताग्निताजनितप्रत्यवायपरिहारार्थं अनुग्रहं कृत्वा प्रायश्चित्तमुपदिशन्तु भवन्त. । सर्व्वे धर्म्मविवेक्तारो गोप्तारः सकला-द्विजाः । मम देहस्य सशुद्धिं कुर्व्वंतु द्विजसत्तमाः॥ मया कृतं महाघोरं ज्ञातमज्ञातकिल्बिषं प्रसादः क्रियतां मह्यं शुभानुज्ञां प्रयच्छथ ॥

End तत. पंचगव्यं कार्य्यं सुवर्णादिपात्रे पद्मादिपात्रे वा ताम्राया गोमूत्रं त्रिपलं गायत्र्या प्रणवेण वादाय ततोऽङ्गुष्ठार्द्धपरिमितं श्वेताया गोमय गंधद्वारेत्यादाय तत. कपिलायाः पयः सप्तपलान्यादायाप्यायस्वेति मंत्रेण ततोनीलायाः सप्तपलमेव दधि दधिक्राव्ण. इत्यादाय ततः घृतमेकपलं घृतमिमिक्षु इत्यादाय तत एकपलं कुशोदकं आपो-हिष्ठेत्यादाय प्रणवेनालोड्य प्रणवेन यज्ञीयकाष्ठेन निर्मथ्य प्रणवेनाभिमंत्र्य सप्तपत्रैर्हरितैः कुशैर्दर्भाग्रैर्जुहुयात् एभिर्मंत्रैः इरावती धेनुमती मयूखैः स्वाहा पृथिव्या इदं इदं विष्णु सुरे स्वाहा विष्णवे इदं । मानस्तोके स्वाहा रुद्रायेदं । ब्रह्मजज्ञानं ब्रह्मण इदं । अग्नये स्वाहा । सोमाय स्वाहा । गायत्र्या । सूर्य्याय स्वाहा प्रणवेन प्रजापतये स्वाहा॥ ॐ भूर्भुवः स्वः स्वाहा॥ प्रजापतये अग्नये स्विष्टकृते स्वाहा । व्रतग्रहणं करिष्ये इति द्विजान् पृष्ट्वा तैः कुरुष्व इत्यनुज्ञातः प्रणवेन सर्व्वं पिबेत्। एतच्च ग्रामाद्बहिर्नद्यास्तीरे सच्चदर्शने कार्य्यं । अशक्तौ गोमूत्रादि स्वल्पं प्राश्यं सर्व्वस्य पेयत्वात् । अस्मिन् दिने उपवासः अशक्तस्यान्यस्य हविष्याशनं । इति पंचगव्यं प्राश्य गृहे आगत्य विष्णुं स्मरन् मौनेन निशामतिवाह्य प्रक्रांतं प्रायश्चित्त सकल्पानुसारेण प्रत्याम्नायद्वारा कृत्वा उत्तरांगानि कुर्य्यात् । व्याहृतिभिराज्य पूर्ववद्धुत्वा पूर्ववत् पुनः प्रायश्चित्तांगं विष्णुश्राद्ध कृत्वा अंते गोदान पूर्ववत् कुर्य्यात् । एतत् सर्वप्राजापत्याधिकप्रायश्चित्तविषये न त्रिरात्रे तत्र तूपोषणत्रयमेवानुष्ठेयमित्याहु. । शक्तं प्रतिचांद्रायणाद्युपदेष्टव्यं । चांद्रायणे त्रय. प्रजापत्याः। इत्यनाहिताग्निना प्रायश्चित्ते कृते स्मार्तकृच्छ्रादिप्रायश्चित्तोऽमावास्यायां पौर्णमास्यां वा कृतप्रातरौपासनः ।

Colophon. ( नास्ति )।

विवरणम् । मासिकेन यथासमयमकृतानुष्ठानेन कर्त्तव्यप्रायश्चित्तविषयकोऽयं निबन्धः । सकस्यास्य वैदिकपुस्तकेष्वनाभाविषयोचितः ।

---

No. 176. प्रायश्चित्ततत्त्वम् । Práyaśchittatattwam Substance, country-made yellow paper, 17×3 inches. Folia, 92. Lines, 5–6 in page. Character, Bengali. Date, ? Appearance, fresh. Prose. Correct. Complete.

A work treating of penances under the name of Práyaśchittatattwa by Raghunandana of Bengal. It forms a section of his Smritittattwa series, and is held as the chief authority on the subject in Bengal. It has been published at Calcutta in the Bengali character, and has passed through two or three editions under different editors.

Beginning. ॐ नमः शिवाय ॥ प्रणम्य सच्चिदानन्दं सृष्टिस्थित्यन्तकारिणं । प्रायश्चित्तस्य तत्त्वानि वक्ति श्रीरघुनन्दनः । प्रायश्चित्तस्य लक्षणे तथा तस्य प्रमद्रको । कर्त्तसंस्कारकाङ्गानां प्रतिकर्म्म निवर्त्तनं । गोग्रासभक्षणाच्छुद्धिः तदभावादशुद्धिता । प्रायश्चित्तं भवेन्नित्यं काम्यं नैमित्तिकन्तथा । काम्यादप्यद्रवानो स्यात्क्रियास्तत्र फलोदयः । तदया लक्षणं पुण्यमज्ञानादपि सम्भवेत् । प्रायश्चित्तादिज्ञानीयात् तादृक् पापविनाशनं । गोधूमावयवेयथावयवस्तत्र साधकं । लाघवं गौरवं चैव्य मक्षदाहनिनस्तथा । दानव्रतादिभावेण पापमाषस्य नाश्यता । चान्द्रायणादौ मासानां परिसंख्याव्यवस्थितिः । प्रायश्चित्ते गुरौ भूते लघुपापस्य च चयः । मद्यमाद्यादप्रविस्तारो रात्रावपि च तत्क्रिया । यात्रादिना कृते पापे प्रायश्चित्तस्य हीनता । प्रायश्चित्ते च वक्तव्येऽनुभयद्वयमेव हि । प्रायश्चित्तोपदेशादिचीराभावविनिर्णयः । अयस्य निर्णयश्चैव तद्दाने कालनिर्णयः । प्रायश्चित्तस्य पूर्व्वाङ्गत्वं वाम्यभिद्यथा ॥ धेनुमूल्यव्यवस्था च ज्ञानकृतनिरूपणम् । विप्रादिस्वामिभेदेन गोवधव्रतनिर्णयः । एकवर्षादिभेदेन रोगादेय निमित्ततः । अपालनतिमित्तेन गोवधव्रतनिर्णयः । अपवादो गोवधस्य नरस्य च वधे तथा । चण्डालवनितादीनामीदृशादेय भक्षणे । प्रायश्चित्तविधिस्तत्र कृतघ्नस्य निरूपणम् । अवमादेशाशौन्यत्तिसदासादौ व्रतस्तथा । अन्त्यजादेः प्रियासङ्गे भोजने च प्रतिग्रहे । चाण्डालस्पृष्टतोयादौ गोमांसादौ च भक्षिते । भार्य्याणां गामनभार्त्त्य च धौतस्य छेदने । प्रायश्चित्तविवेकादावन्यशुद्धेयं निरूपणा ।

**End.** एतेन रजस्वलाया ब्राह्मण्याः सवर्णरजस्वलास्पर्शे एकरात्रोपवासः। पञ्चगव्यपानं कामतः। अकामतस्त्वर्द्धं नक्तव्रतं। असवर्णरजस्वलास्पर्शे त्रिरात्रपञ्चरात्रषड्रात्रोपवासाः। अकामतस्त्वर्द्धं एतच्च चतुर्थाभ्यन्तरं कर्त्तव्यं। चाण्डालेन श्वपाकेन संस्पृष्टा चेद्रजस्वला। अतिक्रम्य तान्यहानि प्रायश्चित्तं समाचरेत्। त्रिरात्रमुपवासः स्यात् पञ्चगव्येन शुद्ध्यति। तां निशान्तु अतिक्रम्य अजाघ्रामान्तु कारयेत्॥ इति वचनान्तरदर्शनात् एतत् कामतः अत्र भेदोनास्ति। अज्ञाने बृहस्पतिः। पतितान्त्यश्वपाकैश्च संस्पृष्टा स्त्रीरजस्वला। तान्यहानि अतिक्रम्य प्रायश्चित्तं समाचरेत्। अहोरात्रं तृतीयेऽह्नि चतुर्थे नक्तमाचरेत्। चतुर्थेऽह्नीति शुद्धिस्नानात् पूर्वं व्यासः रजस्वला यदिस्पृष्टा श्वजम्बुकखरैः क्वचित् निराहारा भवेत्तावद् यावत् स्नानेन शुद्ध्यति। अत्रापि बृहस्पत्युक्तदिनक्रमे दिनभेदव्यवस्था। तद्वत् शातातपः। रजस्वलातु द्वे नार्य्यौ अन्योऽन्यं स्पृशेते यदि सवर्णे पञ्चगव्यन्तु ब्रह्मकूर्च्चमनन्तरं। पञ्चगव्यपानं ब्रतरूपं तेन उपवासः। ब्रह्मकूर्च्चमाह जावालः। अहोरात्रोषितोभूत्वा पौर्णमास्यां विशेषतः। पञ्चगव्यं पिबेत् प्रातर्ब्रह्मकूर्च्चविधिः स्मृतः। एतदशक्तौ पुराणैकं दातव्यं अतः परमुच्छिष्टशूद्रादिस्पर्शे बृहस्पतिः। शुना चोच्छिष्टया शूद्रा संस्पृष्टा त्र्यहमाचरेत्। अहोरात्रं तृतीयेऽह्नि परतो नक्तमाचरेत्। परतश्चतुर्थे दिने स्नानात् पूर्वमिति शेषं ॥ ० ॥

**Colophon.** इति श्रीमहामहोपाध्यायहरिभट्टाचार्य्यात्मजश्रीरघुनन्दनभट्टाचार्य्यविरचितं प्रायश्चित्ततत्त्वं समाप्तं॥ ० ॥ समाप्तश्चायं ग्रन्थः ॥ ० ॥

विवरणम्। प्रायश्चित्ततत्त्वं स्मार्त्तश्रीरघुनन्दनभट्टाचार्य्यविरचितमष्टादशस्मृतितत्त्वान्तर्गतं, सुप्रसिद्धोऽयं निबन्धः। एतद्वर्णितविषयाः प्रारम्भ एव ग्रन्थकृता स्वयमुल्लिखिताः।

---

**No. 177** प्रायश्चित्ततत्त्वम्। Práyaśchittatattwam. Substance, country-made colourless paper, 8×2 inches Folia, 53. Lines, 6–7 in a page, with a blank space of about half an inch square in the middle. Character, Bengali. Date, Śaka 1666. Appearance, very old, and worn out. Prose. Correct. Complete.

Another copy of the same work with an index of subjects treated of in it.

**Colophon** इति वन्द्यघटीयश्रीहरिहरभट्टाचार्य्यात्मजरघुनन्दनभट्टाचार्य्यविरचितं स्मृतितत्त्वे प्रायश्चित्त समाप्तं॥ ० ॥ शुभमस्तु॥ श्रीहरिहराभ्यां नमः॥

॰ ॥ आषाढ़स्य सितपक्षे द्वादश्यां कुजवासरे लिखितं पुस्तकमिदं श्रीग-
ङ्गोपालशर्म्मणा । स्वार्थञ्च । शुभमस्तु शकाब्दाः १६६२ ॥ ॰ ॥ ॰ ॥ ॰ ॥

विवरणमुक्तपूर्व्वम् ।

---

**No. 178.** प्रायश्चित्ततत्त्वम् । Práyaśchittatattwam. Substance, country-made yellow, white, and ash-coloured paper, 18 × 2½ inches. Folia, 74. Lines, 6–7 in a page. Character, Bengali. Date, S'aka 1747. Appearance, old, and worn out. Prose. Correct. Complete.

A third copy of the same work.

**Colophon.** इति वन्द्यघटीय श्रीहरिहरभट्टाचार्य्यात्मज श्रीरघुनन्दनभट्टाचार्य्यविर-
चितं प्रायश्चित्ततत्त्वं समाप्तं ॥ ॰ ॥ ॰ ॥ ॰ ॥ शाके भूधरवेदकाश्वगशब्द-
न्माने दिनेशे गते भौम्ये कर्कटके दिनेऽसुरकुलप्राच्यात्मजीये तिथौ ध्यात्वा
श्रीयुतराघवेन्द्रसुकृती पादं गुरोः सादरात् सुप्रायश्चित्ततत्त्वं स्वात्मार्थमलिखत्
सर्वं मुदा यत्नतः ॥ ॰ ॥ ॰ ॥ ॰ ॥ ॰ ॥ श्रीदुर्गा ॥ ॰ ॥ शकाब्दा १७ ।
४७ । श्रीराघवेन्द्रशर्म्मणः पुस्तकमिदम् ॥ ॰ ॥ ॰ ॥ ॰ ॥ यत्नेन लिखिता
पुस्ती येन चौरेण नीयते । शूकरस्य पुरीषन्तु पतेत् तस्य पितुर्मुखे ॥
॰ ॥ श्रीदुर्गा ।

विवरणमुक्तपूर्व्वम् ।

---

***No. 179.*** प्रायश्चित्ततत्त्वम् । *Práyaśchittatattwam. Substance,* country-made white and yellow paper, 18 × 2½ inches. Folia, 113. Lines, 7-8 in a page. Character, Bengali. Date, S'aka 1727. Appearance, not old. Prose. Generally correct. Complete.

This codex really contains two works of the same author, *viz.,* Malamásatattwa as noticed before and finished in fol. 63, and Práyaśchittatattwa finished in fol. 50. The folia of these two works are separately marked. They were copied by the same person, Kásínátha, in the same year.

**Colophon** (of the Práyaśchittatattwa).

इति वन्द्यघटीयश्रीहरिहरभट्टाचार्य्यात्मजश्रीरघुनन्दनभट्टाचार्य्यविरचितं
प्रायश्चित्ततत्त्वं समाप्तं ॥ ॰ ॥ * ॥ ॰ ॥ दुर्गायै नमः ॥ ॰ ॥ शाकेऽश्वौ-
षध्यश्रीन्दुभिरभिगणिते पचतौ कृष्णपक्षे कार्य्यां वारं प्रकुर्वन् दपगत-

मलमासेरंशके विंशके च । प्रायश्चित्तीयतत्त्वं भरद्वरचरथद्वन्द्वपद्मं मनोज्ञं
काशीनाथोव्यलेखीद्मरवरगणैर्वन्दनीयं विचिन्त्य ॥

In the colophon of the Malamásatattwa, the date is thus mentioned—

शाके सागरबाहुवाररजनीनाथैर्मिते पैष्यभे ।

विवरणम् । अत्र पुस्तकद्वयं वर्त्तते, मलमासतत्त्वं प्रायश्चित्ततत्त्वञ्च । उभयोर्विवरणं पूर्व-मुल्लिखितमेव ।

---

**No. 180.** प्रायश्चित्ततत्त्वम् । Práyaśchittatattwam. Substance, country-made white paper, 20×3 inches Folia, 23. Lines, 6–7 in a page Character, Bengali Date, ? Appearance, very old, worn out, and writing effaced Prose. Generally correct Incomplete.

An incomplete copy of the same work. The last two folia contain different matter, *viz.*, the Balidána and the Śántikarman, written by different hands. The page marks are not serial.

विवरणम् प्रायश्चित्ततत्त्वस्यासम्पूर्णपुस्तकमिदं । अत्रान्तिमपत्रद्वये बलिदानशान्तिकर्मणी स्तः। ततश्चानुमीयते पत्रद्वयमिदमन्यदीयमिति यतस्तत्र पत्राङ्कस्यापि क्रमभेदोवर्त्तते ।

---

**No. 181** प्रायश्चित्ततत्त्वम् । Práyaśchittatattwam Substance, country-made yellow paper, 18×4 inches. Folia, 56 Lines, 5–8 in a page. Character, Bengali. Date, ? Appearance, fresh Prose Generally correct. Complete

A fifth copy of the same work.

विवरणमुक्तपूर्वम् ।

---

**No. 182.** प्रायश्चित्तप्रयोगः । Práyaśchitta Prayogah Substance, country-made white paper, 12×4 inches. Folia, 240 (of which foll. 1–37, 63–68, 74–76, are wanting; foll. 38–62, 71, 72 and 73 have been replaced by fresh copies written by different hands ) Lines, 6–12 inches Character, Nágara Date, Samvat 1728, Śaka 1573 Appearance, very old, torn, worn out, and slightly worm-eaten throughout Prose. Generally correct Incomplete.

It is a copy of the *Prayogaratna* of *Anantadikshita, treating* of Grihya rites, and other religious observances, including different kinds of penances, and is not therefore a *work exclusively* treating of penances.

**Beginning.** नास्ति ।

**End.** पिंडपितृयज्ञलोपप्रायश्चित्तार्थं समन्वारब्धे समुद्रं चोप्यासः जुह्वां चतुर्गृहीतं गृहीत्वा सन्नाहविर्देवता समन्वारब्धयुः ॥ अच्युतयाजा अग्नीन् ॥ अच्युतमना उपवक्ता ॥ अनाधृष्याप्रतिधृष्य यज्ञस्याभिगरौ ॥ अयास्य उद्गाता वाचस्पते हृद्विधेनामन्विधे मतेनामविधेस्त्वमस्माकं नाम ॥ वाचस्पतिः सोममपात् ॥ मा मा दैव्यस्तन्तुश्छेदि मा मनुष्यः नमो दिवे नमः पृथिव्यै स्वाहा ॥ वाचस्पतये ब्रह्मण इदं नमम् । क ॥

**Colophon.** इति श्रीमद्यज्ञोपवीताभिधानश्रीविश्वनाथसूनुना दीक्षितानंतेन सर्वोपकाराय समंतकनिरचिते प्रयोगरत्ने प्रायश्चित्तप्रयोगांतः समाप्तः ॥ क ॥ शुभमस्तु संवत् १७२८ शके १५७२ दक्षिणसंवत्सरे विरोधकृत्संवत् उत्तर दिवसे रौद्रसंवत्सरे चैत्र शुक्लपक्षः पचमी रवीवासरे(?) कृत्तिकानक्षत्रे तत्दिने समाप्तः ॥

विवरणम् । अनन्तदीक्षितकृतप्रयोगरत्ननामधेयोऽयं निबन्धः, अत्र सर्वेषां गृह्यकर्मणामन्येषाञ्च धर्मकर्मणामनुष्ठाननियमाः प्रदर्शितास्तत्तत्कर्माकरणे प्रायश्चित्तानि चोक्तानि । अतोनिबन्धोऽयं न प्रायश्चित्तमात्रविषयकः किन्तु सामान्यधर्मकर्मप्रयोगविषयक इति दिक् ।

---

**No. 183.** प्रायश्चित्तनिर्णयः । Práyaśchitta-nirnayah Substance, country-made white paper, 8×4 inches. Folia, 71. Lines, 9-16 in a page. Character, Nágara Date, ? Appearance, very old, worn out, torn, worm-eaten, and writing effaced and destroyed in most parts; appearing to have been bound originally in the form of a book Prose. Generally correct. Complete.

A guide to the performance of penances under the name of Práyaśchita-nirnaya by Bhavadeva Bhatta, surnamed Bálabadabhí Bhújanga. The codex begins with a work by Abhinava Gupta entitled Paramártha Sára, complete in 105 verses, on Paramárthatattwa or the Supreme God. The codex has a stamp mark of Claude Martin in red ink at the end.

Beginning (of the Paramárthasára).

ॐ श्रीगुरुं नमामः ॐ श्रीगणेशाय नमः ॥ ॐ परं परस्थं गहनादनादिमेकं निविष्टं बहुधा गुहासु । सर्वालयं सर्वचराचरस्थं त्वमेव शंभुं शरणं प्रपद्ये ॥ १ ॥

End (of the Paramárthasára).

आर्य्याशतेन तदिदं संक्षिप्तशास्त्रसारमपि गूढं अभिनवगुप्तेन मया शिवाशिवचरणस्मरणदीप्तेन ॥ १०५ ॥

Colophon (of the Paramárthasára).

इति संपूर्णोऽयमभिनवगुप्तकृतः परमार्थसारः समाप्तः ॥ श्रीगणेशाय नमः श्रीगुरवे नमः श्रीरस्तु ।

Beginning (of the Práyaśchitta-nirnaya).

ॐ अनादिभवसंभूतपापप्रशमकारणं स्मरणं वासुदेवस्य यस्य तस्मै नमोनमः । मन्वादिस्मृतिमालोक्य संक्षिप्य यथाक्रमं क्रियते भवदेवेन प्रायश्चित्तनिरूपणम्॥ तत्र प्रायश्चित्ते निरूपणीये गुरुत्वात् पंचमहापातकप्रायश्चित्तनिरूपणपुरःसरमेवेतरप्रायश्चित्तनिरूपणे कर्तव्ये मन्वादिवचनक्रमानुरोधेन प्रथमं ब्रह्मवधप्रायश्चित्तमेव निरूप्यते तथाच मनुः ब्रह्महत्या सुरापान स्तेयं गुर्वंगनागमः महांति पातकान्याहुः संसर्गश्चापि तैः सह ॥

End मर्वकामप्रदं ह्येतत् सर्वकल्मषनाशनं अत्रापि पंचधेनव इति ब्रह्मपरिच्छेदः ॥ ॥ यादृशं पुस्तकं दृष्ट्वा (दृष्टं ?) तादृश्य (शं ?) लिख्यते-मया यदिशुद्धमशुद्धं वा मम दोषो न दीयते ॥

Colophon. इति बाल्हवड़भीभुजंगपरनाम्नोभट्टश्रीभवदेवस्य प्रायश्चित्तनिरूपणं प्रकरणं संपूर्णं समाप्तम् इति ज्येष्ठमासे कृष्णपक्षे तिथिदिनौ द्वादशां(श्यां?) भार्गववासरे श्रयोमगरेण पंडितवादिशिवरामेण लिख्य(खि?) तं शुभमस्तु भूयात् सदैव ॥ ॥ ॥ ॥ ॥ ॥ ॥

विवरणम् । वस्तुत. पुस्तकेऽस्मिन् निबन्धद्वयं वर्त्तते, अभिनवगुप्तकृतः परमार्थसारः, श्रीभवदेवभट्टकृत. प्रायश्चित्तनिर्णयश्च । तत्र परमार्थसारे परमतत्त्वविषयाः पञ्चाधिकशतश्लोका विद्यन्ते प्रायश्चित्तनिर्णये च नानाविधपापप्रायश्चित्तानीति दिक् ।

---

**No. 184** प्रायश्चित्तनिरूपणम् । Práyaśchitta Nirúpanam. Substance, *country-made yellow paper, 24×3 inches. Folia, 71. Lines,* 6 in a page Character, Bengali. Date, ? Appearance, not old, but the writing effaced in some parts on account of some of the folia having been damaged by water. Prose. Generally correct. Complete.

Another copy of the same work, though under a different name. विवरणमूलपूर्व्वम् ।

---

**No 185.** प्रायश्चित्तप्रदीपः । Práyaśchitta-pradípah. Substance, country-made white paper, 9×3½ inches. Folia, 148. Lines, 3–10 in a page. Character, Nágara. Date, ? Appearance, old, torn, and worm-eaten in parts. Prose. Generally correct. Complete

A guide to the performance of penances for failing to observe certain Vedic rites; according to the rules of Baudháyana. Complete in five chapters. Anonymous. This is rather a Vedic work, and should have been noticed among such works.

Beginning. श्रीगणेशाय नमः । श्रीबोधायनाचार्य्याय नमः । नत्वा बोधायनाचार्य्यं वेदोक्तश्रौतकर्म्मणां विधानिक्रमप्रायश्चित्तदीपः प्रकाश्यते ॥ १ ॥ श्रौते बोधायनोक्तानि प्रायश्चित्तानि यानि तु । उक्तानि सूत्रभाष्ये च वर्य्यगोपालसूरिणा ॥ व्यासोक्तानि प्रकीर्णानि नैरनुक्तानि यानि च ॥ भवस्वामिभवात्तेषां विस्तरान्निर्णयं ब्रुवे ॥ पञ्च प्रकरणान्यत्र तेष्वाधानाग्निहोत्रके ॥ दर्शाद्याग्रयणाद्यत्र सोमश्चेति यथाक्रमं ॥ ४ ॥ अथातोमंत्रगणाम्नातानीत्यादि । अथ शब्द आनंतर्य्ये कर्म्माण्यभिधायानंतरं प्रायश्चित्तमभिधीयते अतः शब्दोहेत्वर्थे यस्मात् कर्म्मणि वैगुण्ये सति प्रायश्चित्तेन तत् सगुणं भवति । अतः प्रायश्चित्तानि व्याख्यास्यामः विहितानामकरणेऽन्यथाकरणे वा प्रायश्चित्तं विधीयते ॥

End सर्वेषु क्रतुषु सोमापचारे कालातिक्रमे अंतरिते विपर्य्यासे व्यत्यासे यजमानादिष्वन्येषु च दोषेषु भूयाघ्याघनादनंतरं आभ्यस्याध्याः स्रवणोपहत्य एतानि सर्वप्रायश्चित्तानि जुहुयात् । सप्तप्रतिष्ठानुवाकेन सिंदाहुतिगणेन प्राजापत्येवत्यादिति षड्भि' त्रयस्त्रिंशत् संप्रदाचितिः युगादिसर्वेदोद्भिः दशात्मकेन पुरुषसूक्तेन सौरीभिः विष्णोर्नुकमित्यादिभिः षड्भिः प्राजापत्यादिभि' प्रजापते नत्वादिति षड्भिः उदुत्तमं वरुणेत्यादिभिः

षड्भिः वारुणीभिः मन्त्रजप्तानमिति षड्भिः रौद्रीभिः परिषेचनदाग्नेयीभिः अवस्यत्यादिभिः षड्भिः व्यापेनेतेत्यादिभिः महाव्याहृतिभिर्व्यस्ताभिः समस्ताभिः ॐ स्वाहेत्यादिप्रणवेनान्तः एतैः सर्वैः क्रमशःप्रायश्चित्तानि जुहुयात् ।

Colophon. इति प्रायश्चित्तदीपे सोमप्रायश्चित्तं नाम पंचमं प्रकरणं ग्रंथश्च संपूर्णः ॥ श्च ॥ प्रायश्चित्तकेशवीये । आहिताग्निः प्रमादाद्वा प्रेतानुगमनं यदि । अग्निनाशं विजानीयात् सपिंडेतु न दोषहृत् ॥ शालिनीपद्धतौ । अथ पिंडशवानुगमने शवस्पर्शे च पुनराधानमिति । शवं स्पृष्ट्वाग्निमान् विप्रोहोमं तु यदिवाकरोत् । लौकिकाग्निरितिख्यातः पुनराधानमर्हति ॥ आहिताग्निः शवं स्पृष्ट्वा पुनः (कर्म ?) करो यदि तस्मादेवं न कर्तव्यमिति सांख्यायनश्रुतिरिति ॥ श्च । श्च ।

विवरणम् । प्रायश्चित्तप्रदीपोनाम, केषाञ्चिद्वैदिककर्मविशेषाणामकरणेऽन्यथाकरणे वा दोषोपशमनप्रायश्चित्तविषयकोऽयं बौधायनसूत्रानुगतो निबन्धविशेषः । अत्र पञ्च प्रकरणानि सन्ति । तत्र प्रथमप्रकरणे आधानदोषशमनप्रायश्चित्तं, द्वितीये अग्निहोत्रदोषशमनप्रायश्चित्तं, तृतीये दर्शादिदोषशमनप्रायश्चित्तं, चतुर्थे आग्रयणादिदोषशमनप्रायश्चित्तं, पञ्चमे सोमदोषप्रशमनप्रायश्चित्तमिति । वस्तुतो वैदिकनिबन्ध एवाऽयमतस्तेष्वेवास्यान्तर्भाव उचित आसीत् ।

---

No. 186 प्रायश्चित्तप्रदीपः । Práyaśchitta-pradipaḥ. Substance, country-made white paper, 8×3 inches. Folia, 190. Lines, 7-9 in a page. Character, Nágara. Date, ? Appearance, very old, worn out, torn, and worm-eaten; some folia at the beginning as also some at the end have been so completely destroyed as to have become utterly useless Prose. Correct Incomplete.

Another incomplete copy of the same work.

विवरणन्तु पूर्ववत् पुस्तकमिदमतीव जीर्णं छिन्नं कीटकवलितमकर्मण्यञ्च वर्त्तते ।

---

No. 187. प्रायश्चित्तविवेकः । Práyaśhchitta-vivekah Substance, country-made reddish yellow paper, 18×5 inches. Folia, 133. Lines, 6-10 in a page. Character, Bengali. Date, Śaka 1756. Appearance, old, and slightly torn in the margin. Prose. Correct. Complete.

A guide to the performance of penances under the name of Práyaśchittaviveka by Súlapaṇi. It forms a section of his series

of works on Hindu law entitled Vivekas, and is held as a high authority throughout the country. It has been printed and published in the Bengali character with notes by Mahámahopádhyáya Madhusúdan Smritiratna of Nadia. Súlpani lived during the reign of Lakshmana Sena of Bengal, in the beginning of the 12th century.

**Beginning.** ॐ नमो गणेशाय। नित्यप्रत्युदितस्वधर्म्मचरणानुध्यानहीनात्मनां तत्तद्देहनिषिद्धकर्म्मणि च वानुष्ठाननिष्ठावतां। लोकानां कलिकालकल्मषकलुषध्वंसार्थमेषोऽधुना प्रायश्चित्तविवेकमत्र विदधे श्रीशूलपाणिः सुधीः। अथ प्रायश्चित्तनिरुक्तं। तत्राङ्गिराः प्रायोनामतपः प्रोक्तं चित्तं निश्चय उच्यते। तपोनिश्चयसंयुक्तं प्रायश्चित्तमिति स्मृतं। निश्चयसंयुक्तं पापक्षयसाधनत्वेन निश्चितमित्यर्थः। तथा हारीतः प्रयतत्वाद्वोपचितमशुभं नाशयतीति प्रायश्चित्तं। एतेन पापक्षयमात्रसाधनं कर्म्म प्रायश्चित्तमिति तल्लक्षणं। मात्रशब्दात् तुलापुरुषाश्वमेधादिव्यावृत्तिः। ननु किं पापलक्षणं उच्यते चोदनालक्षणोऽर्थो धर्म्म इत्यस्मिन् सूत्रे वैदिकप्रतिपाद्योऽर्थो धर्म्म इति धर्म्मलक्षणं कुर्व्वता सूत्रकारेण जैमिनिना वैदिकप्रतिपाद्योऽनर्थोऽधर्म्म इत्यधर्म्मलक्षणं सूचितं अनर्थत्वानिष्टसाधनं तदाधोक्तं भाष्यकृता कोऽर्थो योऽभ्युदयाय कोऽनर्थो योऽनभ्युदयाय इति।

**End.** मासोपवासव्रतं पञ्चदशधेनुदानसमानं सम्वत्सरेण मासाशी पूयते नात्र संशय इत्यङ्गिरोवचनात् मासाशीत्यभिधानात् मासाशीतिनानुवृत्त्यते यतः सम्वत्सरमेकं निरन्तरं मासोपवासस्याशक्यत्वात् अतः सम्वत्सरेणेति द्वादशमासोपलक्षणं ततश्च द्वादशमासोपवासानां षाण्मासिकानां शतप्राजापत्यसमानता तेन पञ्चदशप्राजापत्यैरेकस्य मासोपवासस्य संकलनं द्वादशभागत्वात् अतो मासोपवासे पञ्चदशधेनवो देयाः। अतएव पक्षोपवासे सार्द्धसप्तधेनवः। यतोऽर्द्धमासेन भुञ्जानो द्विवर्षाभ्यां विमुच्यते इति। आङ्गिरसाद्द्विवार्षिकव्रतिमासपक्षभोजनस्य मासीतिशतप्राजापत्यतुल्यं भोक्ता तेनैकपक्षाभोजनं सार्द्धसप्तप्राजापत्यतुल्यं अतः पक्षाभोजने सार्द्धसप्तधेनवो देयाः। ०। ०। इति धेनुसङ्कलनं समाप्तं। ०। ०।

**Colophon.** इति साङ्कृत्यायनमहामहोपाध्यायश्रीशूलपाणिविरचितः प्रायश्चित्तविवेकः समाप्तः। ०। ०। श्रीदुर्गा। ०। ०। ०। ०। शुभमस्तु शकाब्दाः। १७। ५८। ०। तारेक सपाक्षं। ०। ०। ॐ नमः दुर्गाय। दुर्गा।

विवरणम् । प्रायश्चित्तविवेकोनाम नानाविधप्रायश्चित्तीयनिबन्धोऽयं महामहोपाध्याय-श्रीशूलपाणिविरचितास्तदीयविवेकाख्यग्रन्थनिबन्धानामन्तर्भूतः । सुप्रसिद्धोऽयं सर्व्वत्र समादृतश्च । महामहोपाध्यायश्रीमधुसूदनस्मृतिरत्नेन सटीकं वङ्गाक्षरैर्मुद्रयित्वाप्रकाशितः ।

---

No. 188. प्रायश्चित्तविवेकः । Práyaśchitta-vivekah Substance, country-made white paper, 11×4 inches Folia, 142. Lines, 5–11 in a page. Character, Nágara. Date, 1872 Samvat. Appearance, old, bound in book form, and worm-eaten throughout. Prose. Not correct. Complete.

Another copy of the same work.

End प्रायश्चित्तविवेकोऽयं रचितः शूलपाणिना ॥ यथा यथामतातुरः स्थाने विराजतां सुभगतं ॥

Colophon इति श्रीमाङ्कश्रियं — — — —म— — — पाध्यायश्रीशूल पाणिविरचितः प्रायश्चित्तविवेकः सम्पूर्णः ॥ संवत् १८७१ मितीभाद्रदी १२ वारसनीचर ग्रंथसंख्या ४४०० ।

विवरणमुक्तपूर्व्वम् ।

---

No. 189. प्रायश्चित्तविवेकः । Práyaśhchitta-vivekah. Substance, foolscap paper, 20×4 inches Folia, 172 Lines, 3–7 in a page. Character, Bengali. Date, ? Appearance, fresh. Prose. Generally correct. Complete

A third copy of the same work.

विवरणमुक्तपूर्व्वम् ।

---

No 190 प्रायश्चित्तविवेकः । Práyaśchitta-vivekah. Substance, country-made white paper, 24×4 inches. Folia, 13 Lines, 3–9 in a page. Character, Bengali. Date, ? Appearance, very old, having some explanatory notes in the margin Prose. Correct. Incomplete.

An incomplete copy of the same work.

विवरणमुक्तपूर्व्वम् ।

---

No 191. प्रायश्चित्तविवेकः। Práyaśchitta-vivekah Substance, country-made coloured paper, 20×3 inches Folia, 72. Lines, 7 in a page, having a blank space of about half an inch square in the middle. Character, Bengali. Date, ? Appearance, very old, decayed, and writing slightly effaced in parts. Prose. Correct. Incomplete.

Another incomplete copy of the same work.

विवरणमूलपूर्वम्।

---

No. 192. प्रायश्चित्तविवेकः। Práyaśchitta-vivekah. Substance, country-made coloured paper, 24×3 inches. Folia, 113. Lines, 5-7 in a page, with a blank space of about half an inch square in the middle. Character, Bengali Date, ? Appearance, old, worn out, writing effaced in parts, and written by different hands. Prose. Generally correct. Incomplete.

A third incomplete copy of the same work.

विवरणमूलपूर्वम्।

---

No. 193. प्रायश्चित्तविवेकटीका। Práyaśchitta-vivekaṭiká. Substance, country-made red and yellow paper, 22×3½ inches. Folia, 149. Lines, 6 in a page. Character, Bengali. Date, 1815 A. D. Appearance, very old, worn out, and writing effaced in most parts. Prose. Generally correct. Complete.

A commentary on the Práyaśchitta-viveka under the name of Tattwártha Kaumudí by Govindánanda Kavikankanácbárya, son of Ganapati Bhaṭṭa. It is a famous commentary.

Beginning. ॐ नमो गणेशाय। श्रीगोविन्दपदद्वन्द्वमिन्दिरानन्दमन्दिरं। वन्दे वृन्दारकानन्दशिरोमन्दारसुन्दरं। येन ज्योतिषपङ्क्तेषु नितरां मार्गमविष्कारितं श्रीगोविन्दपदारविन्दयुगले श्रीरामरामादितं वेदाम्बुनिमज्जतिविषयलोकेषे विमाकोभिनं केषां गोपरितोषितोमदयतिभिः न मात्रम्विधः। गोविन्दानन्दकविना तनूजेन वितन्यते। प्रायश्चित्तविवेकस्य टीका तत्त्वार्थकौमुदी। + + + प्रारिप्सितस्य प्रथमं समस्तस्य प्रयोजनवत्त्वं निर्दिशति। यत्करणे प्रत्यवायप्रतिबन्धं तादृशोपि स्वधर्मोतिविप्रनिपाद्योऽर्थः गुरुर्दिशति यत्करणे प्रत्यवायप्रायश्चित्ते। तत्तत्स्त्र

तदनुष्ठान + + + ध्यानं आवश्यकत्वेन ज्ञानं तच्छून्यमनसां जातमोपि
आलस्यादिदोषादनावश्यकबुद्धौ विहितकर्माप्रवृत्तेः ॥ अथ वा विहित-
स्याकरणं शक्तौ विहितस्य तदनुध्यानस्य तासां हीनात्मनां यथा
छान्दोगपरिशिष्टं । मनसा लौकिकं कर्म प्रयत्नश्चाप्यतन्द्रितः । उपविश्य
शुचिः सर्व्वं यथाकालमुपाचरेत् । ते ते प्रसिद्धवेदनिषिद्धकर्मनिचया
अतिपातकादि नवविधपापहेतुभूतास्तेषामनुष्ठानस्य निष्ठा निष्पत्तिः
समाप्तिरिति यावत् तद्वतां न हि कर्मारम्भमात्रादहष्टं जायते किन्तु
कर्मनिष्पत्त्यैव । निष्ठानिष्पत्तिनाशान्ता इत्यमरः । ईदृशानां लोकानां
कलिकाले तादृशयज्ञाध्ययनाद्यभावात् रूढानां दृढीभूतानां कलुषाणां
ध्वंसार्थं प्रसिद्धः श्रीशूलपाणिः अधुनाश्राद्धविवेकादिग्रन्थकरणानन्तरं
अत्र ग्रन्थे प्रायश्चित्तस्य विवेकं विवेचनं विदांकर्त्तुं आरम्भः । ईदृशानां
लोकानां कलिकाले तादृशज्ञानाध्यायनवानित्यर्थः । अत एव प्राय-
श्चित्तस्य विवेकोऽत्रेति व्युत्पत्त्या प्रायश्चित्तविवेकेति ग्रन्थस्यापि नामेति ।
सुधीरित्यनेन विवेचने सामर्थ्यं दर्शितं । प्रायश्चित्तेन सह ग्रन्थस्य विवेच्य-
विवेचकसम्बन्धः प्रयोजनञ्च प्रायश्चित्तज्ञानात् तदनुष्ठानात् पापध्वंसः ।

End सम्वत्सरेणानुपपत्त्या सम्वत्सरपदस्य द्वादशमासोपलक्षकता तेनाय-
मर्थः धान्येन धनीतिवत् द्वादशभिर्मासैर्मासाशीत्यर्थात् द्वादशसु मासेषु
एकैकमासोपवासानन्तरं भोजनं प्रतीयते ततश्च वत्सरद्वये द्वादशमासो-
पवासानामेकान्तरकृतानां आशीतिशतप्राजापत्यसमानमेवेति । अन्तराान्त-
राकृतानामिति पाठे स एवार्थः ॥ तेनेति साशीतिशतप्राजापत्यानां
द्वादशभागैकभागत्वात् पञ्चदशप्रजापत्यैर्मासोपवासस्य समत्वमित्यर्थः ।
अत एवेति अत एव मासोपवासार्द्धत्वादित्यर्थः । यत इति अर्द्धमासेन
अर्द्धमासानन्तरं भुञ्जान इत्यनेन प्रतिमासं पक्षाभोजनविधानात् वत्सर-
द्वये चतुर्विंशतिः पक्षोपवासा भवन्ति साशीतिशतप्राजापत्यानां चतु-
र्विंशभागः सार्द्धं सप्तप्राजापत्यमिति धूलीधूसरवपुषक्षणुकरूर्णामानस्कि-
श्रस्य जयति श्रीमुरशत्रोः कोऽयं पित्रोः परिष्वङ्गः, सर्वान्तर्यामिने तस्मै
गोविन्दाय नमोनमः । अत्रानुरागं धास्यन्ति यत्कृपाभिर्विपश्चितः ।
गणपतितनूजो गोविन्दानन्दपण्डितः श्रीमान् । अतिनिर्व्वन्धादिदुषां
समकृत तत्त्वार्थकौमुदीं रम्यां । • ।

Colophon. इति श्रीगोविन्दानन्दकविकङ्कणाचार्य्यकृता प्रायश्चित्तविवेकटीका तत्त्वार्थ
कौमुदी समाप्ता । • । * । समाप्तश्चायं ग्रन्थः । • । • ॥ श्रीरामः ।
• । • । ए अब्द १८४६ । • । • ।

विवरणम् । तत्त्वार्थकौमुदी नाम पण्डितश्रीगोविन्दनन्दविरचिता प्रायश्चित्तविवेकटीका सुप्रसिद्धेयम् ।

---

No. 194. प्रायश्चित्तविवेकटीका । Práyaśchitta-vivekaṭíká. Substance, country-made coloured paper, 19×2½ inches. Folia, 43. Lines, 6 in a page. Character, Bengali. Date, ? Appearance, not old. Prose. Generally correct. Incomplete.

An incomplete copy of the same work.

विवरणमुक्तपूर्व्वम् ।

---

No. 195. प्रायश्चित्तव्यवस्था । Práyaśchitta-vyávasthá. Substance, country-made white paper, 12×3 inches. Folia, 4. Lines, 8–12 in a page. Character, Bengali. Date, ? Appearance, old, a corner of the last folium being torn. Prose. Generally correct. Incomplete.

A collection of Vyávasthás or rules on different kinds of penances. The codex being incomplete, the name of the compiler cannot be ascertained.

Beginning. श्रीहरिः ब्राह्मणक्षत्रियवैश्यैर्ज्ञानकृतब्राह्मणस्वामिकब्रह्मस्वावस्थगवीमा-
चातुर्वधजनितपापक्षयार्थिभिः षष्टद्वप्राजापत्यव्रताद्यशक्तौ षड्दश
कार्षापणदक्षिणैकधेनुपञ्चकार्षापणोदानं कार्य्यमिति मतां मतम् । एत-
द्विषये शूद्रेण सार्द्धविंशतिप्राजापत्यव्रताद्यशक्तौ सार्द्धैककार्षापण-
दक्षिणकसार्द्धपञ्चविंशतिकार्षापणो देयेति मतां मतम् । अथैकादश-
वर्षपञ्चवर्षाधिकवयस्कैर्ब्राह्मणक्षत्रियवैश्यशूद्रैर्ज्ञानकृतब्राह्मणस्वामिकब्रह्म-
स्वावस्थगवीवधजन्यपापक्षयार्थिभिः पादोनषणोदशप्राजापत्यव्रताद्यशक्तौ
पादोनचतुःकार्षापणोदक्षिणकद्वादशपणाधिकद्वादशकार्षापणोदानरूप-
प्रायश्चित्तं कार्य्यमिति । दशवर्षाधिकपञ्चदशवर्षानधिकवयस्कैर्ब्राह्मण-
क्षत्रियवैश्यैर्बुद्धिपूर्व्वकब्राह्मणस्वामिकगवीवधजन्यपापक्षयार्थिभिः । सार्द्ध-
पञ्चविंशतिप्राजापत्यव्रताद्यशक्तौ सार्द्धसप्तकार्षापणदक्षिणकसार्द्धपञ्चविं-
शतिकार्षापणो देयेति । शीरोगि अशीतिवर्षाधिकवयस्कानामप्येवं ।
एतद्विषये शूद्रस्य तु एतदर्द्धम् ।

End. ( नास्ति ) ।

Colophon. ( नास्ति ) ।

विवरणम् । नानाविधप्रायश्चित्तविषयकव्यवस्थापत्रसंग्रहमिदमेवेयम् । पुस्तकस्यास्यसमाप्तत्वा-
भावादेतत्संग्रहीतुर्नामादिकं न ज्ञायते ।

**No. 196.** प्रायश्चित्तमयूखः। Práyaśchitta-mayúkhah. Substance, country-made white paper, 9×6 inches. Folia, 138. Lines, 4–14 in a page. Character, Nágara Date, ? Appearance, very old, worn out, torn, and worm-eaten. Prose. Not correct. Complete.

A work on penances entitled Práyaśchitta Mayúkha by Nílakantha Bhatta, son of Śankara Bhatta, surnamed Mímáṅsaka. This work belongs to his Bháskara series, and is held as a chief authority in the Deccan. All the Mayúkhas have been printed or lithographed at Benares, Bombay, and other places.

**Beginning** श्रीगणेशाय नमः। श्रीरविर्जयति। नमामि भास्वत्पदकंज तत् ++ +++++र्थकं कुर्व्वे। स्मृत्योपदेशात्(न् ?) गुरुशंकरस्य विनिर्णयं पापविशुद्धिहेत्व तु (हेतवे)। ++++ रहतमत्र किंचिन्मयातु- निर्म्मलतया तदुक्तं। शृनोति तानोनहि येन काचित् स्वपुष्पदीयचि- तिर्नेद्याप्यते(?)॥१॥ पापविशुद्धिहेतुत्वं प्रायश्चित्तस्याह। याज्ञवल्क्यः। विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्॥ अनिग्रहाच्चेंद्रियाणां नरः पतनमृच्छति॥ तस्मात्तेनेह कर्त्तव्यं प्रायश्चित्तं विशुद्धय इति। अनिग्रहा- दिति पर्य्युदाससंग्रहार्थं। विहिताननुष्ठाननिषिद्धसेवननिमित्ते विशु- द्धिनं (विशुद्धिहेतु ?) कर्म्मप्रायश्चित्तं। प्रारब्धपापनाशनं कर्म्मप्राय- श्चित्तमिति। नच तुलापुरुषादावतिव्याप्तौ। कलंभक्षे(?) प्रायश्चित्तेऽव्या- प्तेश्च। एवं प्रायश्चित्तपदस्य रूढत्वे योगमप्याहांगिराः॥ प्राये (यो ?) नाम तपः (प.?) प्रोक्तं चित्तं निश्चयसंयुक्तं प्रायमिति स्मृतमिति (नि- श्चय उच्यते। तपोनिश्चयसंयुक्तं प्रायश्चित्तमिति स्मृतमिति ?)। यत्तु पद्मधरमिश्रभक्तूपाध्यायदोउरानंदहतः (प्रभृतय.?) प्रायः पापं विजा- नीयाच्चित्तं तस्य विरोधनमिति पदुः (श्चाङः?)॥

**End.** सर्व्वपापेषु रहस्यप्रायश्चित्तं तत् प्रकारमाह प्रायश्चित्तविषये तु विश्वा- मित्रः। प्रकाशं उक्तं यत्किंचित्त्रिंशद्भागोरहस्यकं त्रिंशद्भागः षष्टिभाग- कल्पो(कल्प्यो?)जातावपेच्चया। आदिशब्देन शक्तिगुणकामाकामाभ्यासा- नभ्यासादिग्रहीने इति शूलपाणिः। अत्र द्वादशाहब्दविशाखप्राजापत्याः त्रिशाशाः षब्दांशः (षट्ंशः?) चतुर्विंशत्यब्दे एतद्द्विगुणा अंशा षडब्दे तदर्धौ(?) यत्तु शूलपाणिः पत्र(यत्र?)प्रकाशेमरणान्तिकं प्रायश्चित्तं तत्र रहस्ये मरणांतिकमेव मरणे भागासंभवादित्याह तन्न्रा(न्न) यद्यपि मरणे भागो न सम्भवति तथापि तथैकस्मिके (तद्देकल्पिके?) चतुर्विं+ + + +

संभवत्यव तेन चतुर्विंशतिष्ट (त्यष्ट?) षड्विंशद्दिग्गा(?) द्वादशचतुर्दशेति चतुर्विंशतिषड्विंशन्मता.(?) प्रजापत्या (प्राजापत्याः?) आत्मापेक्षया (आत्माद्यपेक्षया?) कर्त्तव्याः मरणान्तिकस्य तु तद्विधिना प्रकाशे पापविपयत्वेनोक्तत्वाद्रहस्ये प्रापकप्रामाण्याभावप्राप्तिरेव दूराप+ + + ।

Colophon. इति श्रीमीमांसकशंकरभट्टात्मजभट्टनीलकंठकृते भास्करे प्रायश्चित्तमयूखः समाप्तः ॥ छ । छ ॥ छ । छ ॥ छ । छ ॥ छ ॥ छ । छ ॥ छ ॥ छ ॥ ॥ छ । छ । छ ॥ छ । छ ॥ छ

विवरणम् । प्रायश्चित्तमयूखो नाम भट्टनीलकण्ठविरचितः प्रायश्चित्तविषयकोऽयं निबन्धः तत्कृतभास्कराख्यधर्मनिबन्धस्यैवान्तर्गतः । निबन्धोऽयं दाक्षिणात्ये सम्यागादृतो भवति । प्रायः सर्व्वे मयूखनिबन्धा वाराणस्यादौ मुद्रिताः प्रकाशिताश्च ।



**No. 197. प्रायश्चित्तम् ।** *Práyaśchittam.* Substance, country-made white paper, 12×3 inches. Folia, 4. Lines, 15–16 in a page Character, Nágara. Date, ? Appearance, very old. Prose. Correct. Complete.

A work by Ananta Bhaṭṭa prescribing, according to the precepts of *Áśwaláyana*, how the sacred fires are to be treated, when one kind of fire might be substituted for another, and what should be done in the case of their being polluted. This also is a Vedic work.

Beginning. श्रीगणेशाय नमः । अथाश्वलायनप्रायश्चित्तानि । आहवनीये विद्यमाने यदि गार्हपत्योनुगच्छेत् अवतारेभ्योमंथनं कृत्वाऽऽहवनीयोनुगमयितव्यः समानयोनित्वे दक्षिणाग्निं तस्याभावे भस्मनारणी संस्पृश्य मंथयेत् ।

End. केवलगार्हपत्यसमारोपणे तु आहवनीयमेव प्रणीतोत्पूर्वाङ्गनि । अनन्वाहिताग्नेर्भार्य्यासमीपेऽग्नीनिधाय धनार्द्धदशयावगतौ प्रवासेत्यासनं कृत्वा गच्छेत् । तद्विधिरष्टकालपरर्वेर्निरूक्तः । पश्चिम् पारे+ + विधिः । यदि प्रोषिते औषत्येव मलश्चस्तो भवति नम धाकते नाग्निम् अग्नये सुरभिस्वन्तपावमेर्हिः काम्पौं म सुरभिमम इति तुष गुष्यं नरेणः भोक्ताम्यं इति इतिश्रम् । अथ्या इतेः व्याने म पूर्वाङ्गनिति देवतानः । अग्निर्वैमान्यपीदय औषाग्र्याश्चीनंदेवौनिं मो चदेति पान्दाग्नुमाचे । इति पातेः प्रयाचविधिः । वैमानाग्निमाज.दर्शप्रमेत-

मायेष्टिः वैतानिकाग्नेः शवाग्निसंसर्गेऽग्नये शुचये इष्टिः गार्हपत्याहवनी-
ययोर्मिथः संसर्गेऽग्नये वीतये इष्टिः तदुभयसंसर्गभिन्ने वैतानिकाग्नेरपि
मिथः संसर्गेऽग्नये विविचय इष्टिः वैतानिकाग्नेः पवमानाग्निसंसर्गेऽग्नये
संवर्गायेष्टिः । वैद्युतेन संसर्गेऽग्नयेऽप्सुमते इष्टिः । अत्र याज्यानुवाकाः
सूत्रे द्रष्टव्याः । इष्टिस्थाने पूर्णाहुतयो वा आश्वलायनसून्नृतमग्निमोच-
रमीरितं । प्रायश्चित्तमनंतेन तेन तुष्यतु यज्ञभुक् ॥

Colophon. ( नास्ति ) ।

विवरणम् । अनन्तभट्टकृतं यज्ञीयाग्निदोषोपशमप्रायश्चित्तविषयकं पुस्तकं ।

---

**No. 198.** प्रायश्चित्त अजस्रप्रयोगः । Práyaśchitta Ajasra Prayogaḥ. Substance, Káśmíri paper, 10 x 3 inches. Folia, 15. Lines, 9–11 in a page. Character, Nágara. Date, ? Appearance, very old, and worn out. Prose Generally correct. Complete.

A guide to the performance of penances to be performed every day in order to purify the sacrificial fires, under the name of Práyaśchitta Ajasra Prayóga by Mallári Súri. This also is a Vedic work.

Beginning. श्रीगणेशाय नमः ॥ श्रीगुरुर्जयति । भुजगा भुजगा यस्य वामगा वाम-
लोचना । सर्वदः सर्वदाद्दिश्यात् स शिवः अशिवः शिवं ॥ १ ॥ वक्र-
तुण्डमथानम्य यज्ञविध्वंसकाम्यया । नित्यधारित्वपक्षेतु समासात्किंचन
ब्रुवे ॥ १ ॥ तत्र तावन्नित्यधारित्वं नर्य(?) शंस्याध्वर्ययोर्यावज्जीवमजस्रं
धारणव्रतं । गार्हपत्य स गच्छति ।

End. शेषमुभयपक्षे समानं । एवं शाकमेधेष्वपि । पित्र्यं समानं । कंयकेषु च
चाध्वर्यवहोममंत्रेण न तूष्णीभुव इति चाध्वर्योत्वत्र इति चतुष्पथे ।
ततः प्रागप्रदक्षिणप्रावेव । चतुष्पथेग्निमानैः चतुर्दक्षिणाग्नेरुल्मूकादाना-
दि । स्वर्येणेनिरूपः । सामिधेनीप्रैषः । सामिधेन्यनुवाचनंच । इध्मा-
धानम् ॥ १ ॥ निरूढे वरुणप्रघासवत् ॥

Colophon. इति श्रीमल्लारिसूरिविरचिते अजस्रप्रयोगे प्रायश्चित्तानि ॥ ८ ॥

विवरणम् । चाग्निकाग्निदोषोपशमनप्रायश्चित्तविषयकोऽयं निबन्धविशेषः ।

---

No. 199. स्मार्त्तप्रायश्चित्तम् । Smárta Práyaśchittam. Substance, country-made white paper, 7×3½ inches. Folia, 55 (of which fol. 1 is wanting). Lines, 7 in a page. Character, Nágara. Date, ? Appearance, very old, and worn out. Prose. Correct. Incomplete.

A guide to the performance of penances to be performed in default of the performance of certain Grihya rites. As the codex has neither a beginning nor an end, nothing about the author can be ascertained.

Beginning. ( नास्ति ) ।

End. ( नास्ति ) ।

Colophon. ( नास्ति ) ।

विवरणम् । स्मार्त्तप्रायश्चित्तं नाम कश्चिन्निबन्धविशेषः । यथाम्नायाद्युपविष्टगृह्यस्मृतीनां केषाञ्चिद्गृह्यकर्म्मणां यथाकालमकरणे कर्त्तव्यानां प्रायश्चित्तानामनुष्ठानपद्धतिर्वर्ण्यते । पुस्तकमिदमाद्यन्ताभावादसम्पूर्णम् ।

---

No. 200. स्मृतितात्पर्य्यनिर्णयः । Smritităparyanirṇayaḥ. Substance, Káśmiri paper, 10×3 inches. Folia, 24. Lines, 10-12 in a page. Character, Nágara. Date, ? Appearance, very old, worn out, and slightly torn. Prose. Correct. Incomplete.

A work prescribing the penance to be observed when a man marries the sister of his step-mother by mistake. Anonymous.

Beginning. श्रीगणेशाय नमः । मातुः सपत्न्या भगिनी विवाह्या नैव सर्व्वथा । सर्व्व धर्म्मस्मृतीः सम्यग्विचार्य्य स्थिरचेतसां । ॥ ॥ अथ सपत्न्या मातुर्भगिनी नैव विवाहमर्हतीति यदि प्रमादाद्विवाहिता स्यात् तर्हि सा परित्याज्यैवेति मूलस्मृतीनां वचनान्याश्रित्य न्यायैरस्माभिः (अस्माभिः ?) विचार्य्यते ॥

End. ( नास्ति ) ।

Colophon. ( नास्ति ) ।

विवरणम् । सपत्नीमातुर्भगिन्या अज्ञानतः पाणिग्रहणे प्रायश्चित्तानुष्ठानविषयकोऽयं निबन्धविशेषः ।

---

No. 201. प्रयोगसारः । Prayógasárah. Substance, country-made white paper, 10×4 inches. Folia, 161. Lines, 6-11 in a page. Character, Nágara Date, Samvat 1803. Appearance, old, and slightly worm-eaten. Prose. Correct. Complete.

A guide to the performance of some religious observances of the Kanva branch of the Yajurveda school under the name of Prayógasára by Keśava Swámin. It is complete in six chapters.

Beginning. ॐ नमो गणपतये । श्रियः पतिं नमस्कृत्य कण्वञ्च मुनिसत्तमं । प्रयोगसारं वक्ष्यामि केशवोऽहं यथामति ॥ १ ॥ नारायणादिभिः प्रयोगकारैरेकं पक्षमाश्रित्य दर्शपूर्णमासादीनां प्रयोग उक्तः । आचार्य्यपादैर्द्वे पक्षान्तराण्युक्तानि भवस्वामिमतानुसारिणा मया तूभयमप्यंगीकृत्य प्रयोगसारः क्रियते । आमावस्येनेत्यादि ।

End. सोमान्तपक्षे अग्निष्टोम एव पश्वंतपक्षे ऐन्द्राग्नः पशुः इष्ट्यंतपक्षे आग्नेयमष्टाकपालं वैश्वदेवं द्वादशकपालमिति तंत्रेण भेदेन वा ।

Colophon. इति श्रीकेशवस्वामिकृतौ प्रयोगसारे षष्ठे सप्तमः समाप्तानि चातुर्मास्यानि । * । * । * । * । * ॥ * संवत् १८०३ श्रावणकृष्णद्वितीयायां परिपूरितोऽयं ग्रंथः श्रीभैरवदत्ताख्येन मैथिलेन काश्यां भूयाद्विश्वेशतुष्टये ॥ * । * । * ॥ * ॥ * ॥ * । * ।

विवरणम् । प्रयोगसारो नाम यजुर्व्वेदीयकण्वशाखिभिरनुष्ठेयगृह्यकर्म्मविशेषप्रयोगविषयकोऽयं निबन्धः ।

---

No. 202. स्मृतिमञ्जरी । Smṛitimanjarí. Substance, foolscap paper, 16×4 inches. Folia, 129. Lines, 3-8 in a page, having a blank space of about half an inch square in the middle. Character, Bengali. Date, ? Appearance, almost new Prose. Generally correct. Complete.

A treatise on Hindu law under the name of Smṛitimanjarí by Kálicharana Nyáyálankára, son of Rámadurgá Chakravarti Patitundi, a descendant of Mahámahopádhyáya Chakrapáṇi of Lakshmidiyá in the Dacca district.

Beginning. ॐ नमो गणेशाय ॥ कान्त्या समेतं गिरिशं प्रणम्य तत्त्वं समालोक्य शिशोः प्रबुद्ध्यै । संतन्यतेऽनु स्मृतिमञ्जरीयं श्रीपूर्व्वकालीचरणद्विजेन ॥ १ ॥ अज्ञानदोषेण यदत्र भूतं वर्णस्वरूपं यदि वा व्यवस्था । धीरा भवद्भिः परिशोध्यतां तत् सर्व्वं ममेदं प्रणिवेदनं भोः ॥ २ ॥ यदत्र भ्रमदोषेण पतितं

किञ्चिदुच्चरं । तत्सर्व्वं कृतिभिः शोध्यं मयेयं प्रणतिर्बुधाः ॥ ३ ॥ प्रजा-पतिर्वशिष्ठश्च याज्ञवल्क्यः पितामहः । कात्यायनयमव्यासा यमदग्नि-र्वृहस्पतिः ॥ आपस्तम्बोमनुर्विष्णुर्विश्वामित्रोपि वोशना । हारीतगौतमौ विज्ञौ मरिचिश्चावनोङ्गिराः । प्रचेतोलिखितः शङ्खः शातातपः पराशरः । काश्यपो लोमशो गर्गश्छागलेयाभिनारदाः । जावालो दक्षः सम्वर्त्तः पैठीनसिश्च देवलः । बौधायनोमुनिश्रेष्ठः षट्त्रिंशत् स्मृतिकारकाः ॥ एतेषान्तु मतं यत्तत् षट्त्रिंशन्मतमुच्यते ॥ एतन्मतानुसारेण व्यवस्था क्रियतेऽधुना ॥ ४ ॥

End. तथा लिङ्गस्थां पूजयेद्देवीं मण्डलस्थां तथैव च । पुस्तकस्थां महादेवीं पावके प्रतिमासु च । चित्रे च विशिखे खड्गे जलस्थाश्चापि पूजयेत् ॥ १३९ ॥ इति प्रसङ्गादुक्तं ॥ यत्कृते प्रत्यवायः स्यात्तत्कर्म्म नित्यमुच्यते । कर्म्मजन्यफलं यत् यत् तत्कर्म्म काम्यकं बुधैः ॥ १४० ॥ स्मृत्यर्थन्तु । वेदार्थानुभवेनैव जन्यवाक्यं स्मृतिं । बुधः । वृहस्पतिर्मनुर्विष्णुर्व्यासादिवाक्यमब्रवीत् ॥ १४१ ॥ वाणेपुमसभूशाके कालीचरणशर्म्मणा । गुरुपादयुगं नत्वा निर्म्मिता स्मृतिमञ्जरी ॥ ० ॥

Colophon. इति वङ्गदेशान्तर्गत सक्कीदियाग्रामनिवासि महामहोपाध्यायचक्रपाणि-सन्तानपतितुष्टिरामदुर्गाचक्रवर्त्तिसुतश्रीकालीचरणन्यायालङ्कारेण कृता स्मृतिमञ्जरी समाप्ता ॥ नवोदकश्राद्धं ॥ आषाढ़मासे शिवभस्मभानौ कुर्व्वीत कार्य्यं हि नवोदकं वै । तस्मिन् भवेद्वै यदि कृष्णपक्षस्तन्त्रेण तत्-कर्म्म तदा प्रवीणः ॥ १४२ ॥

विवरणम् । स्मृतिमञ्जरी नाम कश्चित् स्मृतिशास्त्रीयसारसंग्रहरूपोनिबन्धविशेष, श्रीकाली-चरणन्यायालङ्कारविरचितः ।

---

No. 203. स्मृतिसारसंग्रहः । *Smṛitisára Sangrahaḥ Substance,* country-made red paper, 18×3 inches. Folia, 119. Lines, 4-6 in a page, having a blank space of about *half an inch square in the middle. Character, Bengali Date, Saka 1730. Appearance, fresh. Correct. Complete.*

A work treating of the most important matters in Smṛiti by Chandraśekhara Váchaspati under the name of Smṛitisára Sangraha. The codex has an index of subjects at the end.

Beginning. ॐ नमः श्रीकृष्णाय । शिवं नत्वा स्मृतेर्युक्त्या क्रियते सारसंग्रहः । श्रीवाचस्पतिधीरेण स्मृत्याचारप्रदर्शने ॥ अथ कालस्य ॥ तत्र वत्सरः

चान्द्रः सौरः सावनो नाक्षत्रश्चेति चतुर्विधः । चान्द्रस्तु द्विविधः मुख्यो गौणश्च ॥ तत्र मुख्यो द्विविधः । शुक्लप्रतिपदादिदर्शान्तमासद्वादशात्मकः मलमासपाते तु तन्मासत्रयोदशात्मकः । तत्प्रयोजनमब्दादितो युगादिगणनायां ।

End. स्वतः पिपीतकादिव्रते चतुर्थ्यादिव्रतनिमित्ते प्रतिष्ठा तन्त्रोक्तपूजाकाङ्क्षानाद्यनन्तरं व्यापकत्वेन घटादानाद्यङ्कपुर्वतानुष्ठानं प्रतिष्ठा बोध्या । यदि चतुर्थ्यादिव्रतनिमित्तेऽन्यव्रतोऽर्द्धं प्रतिष्ठायोग्यता नास्ति तदा पञ्चम्यादौ व्रतादिनिमित्तसजातीयतिथ्यादावेव प्रतिष्ठा एवं प्रतिष्ठादिने ऽविघ्याव्रादिव्रताद्येषु अधिककष्टजनकमेव कार्य्यं विवेचितमिदं मयाद्वैतनिर्णये । * । * ।

Colophon. इति श्रीचन्द्रशेखरवाचस्पतिभट्टाचार्य्यकृतः स्मृतिसारसंग्रहः समाप्तः । । ० । ० । शकाब्दाः १७६० गत वत्सरचिविध तारिख १५ भाद्रस्य ।

---

**No. 204.** स्मृतिसारसंग्रहः । Smṛitisára Sangrahah. Substance, foolscap paper, 18×4 inches. Folia, 80 Lines, 9 in a page. Character, Bengali Date, ? Appearance, fresh. Prose. Generally correct. Complete.

Another complete copy of the same work.

विवरणमुक्तपूर्व्वम् ।

---

**No. 205.** स्मृतिसारसंग्रहः । Smṛitisára Sangrahah Substance, country-made colourless paper, $4\times3\frac{1}{2}$ inches. Folia, 132 (of which foll. 1 and 2 are wanting) Lines, 10–12 in a page. Character, Nágara. Date, ? Appearance, very old, worn out, torn, writing effaced in parts, especially in the last page, which is not legible at all, and bound in book form. Prose. Generally correct. Complete (except the first two pages).

A compilation of the most important matters from the Dharmaśástras entitled Smṛitiśára Sangraha. As the first folium is lost, and the writing in the last page entirely effaced, the name of the author cannot be ascertained. This work is different from the above though the name of both is the same.

Beginning. ( नास्ति ) ।

End. ( लुप्ताक्षरम् ) ।

विवरणम् । स्मृतिसारसंग्रहो नाम कश्चिद्धर्म्मशास्त्रीयनिबन्धविशेषः । नामत एव ग्रन्थस्य प्रतिपाद्यं सर्व्वस्फुटं भवति ।

---

No. 206. स्मृत्यर्थसारः । Smrityarthasárah. Substance, country-made white paper, 10×6 inches. Folia, 109. Lines, 11–13 in a page. Character, Nágara. Date, ? Appearance, very old, and worn out. Prose. Correct. Incomplete.

*Another compilation of the same kind by Srídharáchárya* under the name of Smritisára.

Beginning. ॥ ॐ ॥ श्रीरामचन्द्राय नमः ॥ कामधेनौ प्रदीपाब्दौ कल्पद्रुमलता-
दिषु । संगृह्यविद्वत्केदारस्तोमुद्धार्यैव भाषितम् ॥ १ ॥ मन्वाद्यनेकस्मृतिषु
व्याख्याह्यप्रतिपादितम् । स्मृत्यर्थसारं वक्ष्यामि सुखानुष्ठानसिद्धये ॥ २ ॥
प्राचीदिशां चानुक्तौ स्याद् उदीचीशानदिक् तथा । तिलत्वप्रकृतानुक्ता
वासीनत्वं च कर्मसु ॥ ३ ॥ कर्त्तॄणामनुक्तौ तु दक्षिणं संभवेत्तथा ।
कुञ्चिते वामहस्तः स्याद्दक्षिणः स्यादकुञ्चिते ॥ ४ ॥ यज्ञोपवीतिना कार्य्यं
सर्व्वं कर्म्म प्रदक्षिणम् । मनः प्रमादात् सम्बोध्या नवमा स्नानकर्म्मणा ॥ ५ ॥
आचान्त्याचान्तमनः शुद्धिं कृत्वा कर्म्म समाचरेत् । कर्म्माद्यदाहृतं ज्ञात्वा
तावदेव पुनश्चरेत् ॥ ६ ॥ प्रधानस्याक्रियायां तु सांगं तत् क्रियते पुनः ।
तदंगाकरणे कुर्य्यात् प्रायश्चित्तं न कर्म्म तत् ॥ ७ ॥ प्रभुः प्रथमकल्पस्य
योऽनुकल्पेन वर्त्तते । स नाप्नोति फलं तस्य परत्रेति श्रुतिस्मृतिः ॥ ८ ॥
कर्म्मणा मनसा वाचा यत्नाद्धर्म्मं समाचरेत् । अस्वर्ग्यं लोकविद्विष्टं
धर्म्ममप्याचरेन्न तु ॥ ९ ॥ यदल्पं वा स्वल्पोक्तं यस्य कर्म्म प्रकीर्त्तितम् ।
तस्य तावति शास्त्रार्थे कृते सर्व्वः कृतो भवेत् ॥ १० ॥ श्रौतेषु सर्व्व-
शाखोक्तं सर्व्वमेव यथोचितम् । स्मार्त्ते साधारणं तेषु चान्यं श्रौतेषु
कर्मसु ॥ ११ ॥ समयाचारिका धर्म्मा जातिदेशकुलोद्भवाः । सदा-
चाराः परिग्राह्या वेदधर्म्माविरोधिनः ॥ १२ ॥ युगधर्म्माः परिग्राह्याः
सर्व्वैरेव यथोचितम् । यत्कृते दशभिर्वर्षैस्त्रेतायां हायनेन तत् ।
द्वापरे तच्च मासेन अहोरात्रेण तत्कलौ ॥ १३ ॥

End. ( नास्ति ) ।

Colophon. ( नास्ति ) ।

विवरणम् । स्मृत्यर्थसारो नाम कश्चिद्धर्म्मशास्त्रीयनिबन्धः श्रीधराचार्य्यकृतः ।

---

No. 207. स्मृत्यर्थसारः। Smrityarthasárah. Substance, country-made white paper, 7×4 inches. Folia, 42 Lines, 10–12 in a page. Character, Nágara. Date, ? Appearance, not old. Prose. Correct. Incomplete (containing only the Práyaśchitta section).

A part of the same work containing the Práyaśchitta section.

**Beginning.** श्रीगणेशाय नमः ॥ कामधेनौ प्रदीपाब्दौ कल्पटचस्तादिषु। शंभुद्राविड़केदारालोल्लटाद्यैश्च भाषितम् ॥ मन्वियाज्ञवल्क्यादौ व्याख्याभिः प्रतिपादितम्। स्मृत्यर्थसारं वक्ष्यामि सुखानुष्ठानसिद्धये। अथ प्रायश्चित्तान्युच्यंते ॥

**End.** इति सर्व्वप्रायश्चित्तानि। इदं स्मृत्यर्थसारं तु मूलाक्षरपदेतुना। नावमन्यं मतां मूलं पश्यंत्येव बहुश्रुताः ॥ इदं स्मृत्यर्थसाराख्यं नागविश्वार्य्यसूनुना। यत्नना श्रीधरार्य्येण श्रुतिस्मृतिविदा कृतम्।

**Colophon.** इति स्मृत्यर्थसारः समाप्तोऽयं ग्रंथः ॥ ॥

विवरणम्। पूर्व्वोल्लिखितस्य निबन्धस्य प्रायश्चित्तभागमात्रम्।

---

No. 208. हरिभक्तिविलासः। Háribhaktivilásah Substance, country-made coloured paper, 18×5 inches. Folia, 383. Lines, 3–8 in a page Character, Nágara Date, S'aka 1749 Appearance, fresh. Prose. Generally correct. Complete

A work treating of the religious observances of the Hindus expounded according to the tenets of the Vaisnava sect under the name of Haribhaktivilása, by Gopála Bhatta, pupil of Prabhodhánanda. It is complete in twenty chapters, called Vilásas, and is regarded by the Gosvámins as the highest authority on the subject. The principles laid down in the book are, however, on most points, different from those followed by the other sections of the Hindu community. It has been printed with notes in the Bengali character. Portions of it have also been translated into the Bengali language. The codex under notice has notes in both the margins.

**Beginning.** श्रीचैतन्यचन्द्राय नमः । चैतन्यदेवं भगवन्तमाश्रये श्रीवैष्णवानां प्रमुदे- ऽञ्जसालिखम् । आवश्यकं कर्म्म विचार्य्य साधुभिः सार्द्धं समाहृत्य समस्त- शास्त्रतः ॥ १ ॥ भक्तेर्विलासांश्चिनुते प्रबोधानन्दस्य शिष्यो भगवत्- प्रियस्य । गोपालभट्टो रघुनाथदासं सन्तोषयन् रूपसनातनौ च ॥ २ ॥ मथुरानाथपादाब्जप्रेमभक्तिविभासन- । जातं भक्तिविलासाख्यं तद्भक्ताः शोधयन्त्विमम् ॥ ३ ॥ श्रीयामुनात्यन्तिकभक्तिनिष्ठाः श्रीवैष्णवा माथुर- मण्डलेऽत्र । काशीश्वरः कृष्ण वने चकास्तु श्रीकृष्णदासश्च स लोक- नाथः ॥ ४ ॥ ० ॥ तत्र लेख्यप्रतिज्ञा आदौ मङ्गलाचरणं लेख्यं श्रीगुर्व्वा- श्रयणं ततः । अन्वयव्यतिरेकाभ्यां लक्षणं गुरुशिष्ययोः ॥ गुरुशिष्य परीक्षादिर्भगवन्मन्त्रगोऽस्य च । मन्त्राधिकारी सिद्धादिशोधनं मन्त्र- संस्क्रियाः ॥ ५ ॥ दीक्षानित्यं ब्राह्मकाले शुभोत्थानं पवित्रता ॥ ६ ॥ प्रातः स्मृत्यादि कृष्णस्य वाद्यादैश्च प्रबोधनम् । निर्म्माल्योत्तारणाद्यादौ मङ्गलारात्रिकं ततः ॥ ७ ॥ मैत्र्यादिकृत्यं शौचं चाचमनं दन्तधावनम् । स्नानं तान्त्रिकसन्ध्यादिदेवसद्मादिसंस्क्रिया ॥ ८ ॥ तुलस्याद्याहृतिर्गेहे स्नानमुष्णोदकादिकम् । वस्त्रं पीठं चोर्द्ध्वपुण्ड्रं श्रीगोपीचन्दनादि- कम् ॥ ९ ॥ चक्रादिमुद्रा माला च गृहसन्ध्यार्चनं गुरोः । माहात्म्यं चाथ कृष्णस्य द्वारवेश्माम्तरार्च्चनम् ॥ १० ॥ पूजार्थासनमर्घ्यादिस्थापनं विघ्नवारणम् । श्रीगुर्व्वादिनतिर्भूतशुद्धिः प्राणविशोधनम् ॥ ११ ॥ न्यासा मुद्रापञ्चकञ्च कृष्णध्यानान्तरार्च्चने । पूजापदानि श्रीमूर्त्तिः शालग्राम- शिलास्तथा ॥ १२ ॥ ० ॥ १२ ॥ द्वारकोद्भवचक्राणि शुद्धयः पीठ- पूजनम् । आवाहनादिमुद्रा आसनादिसमर्पणम् ॥ १३ ॥ स्नपनं शङ्ख- घंटादिवाद्यं नाम सहस्रकम् । पुराणपाठो वसनमुपवीतं विभूषणम् ॥ १४ ॥ गन्धः श्रीतुलसीकाष्ठचन्दनं कुसुमानि च । पत्राणि तुलसी चाङ्गो- पाङ्गावरणपूजनम् ॥ १५ ॥ धूपो दीपश्च नैवेद्यं दानं होमबलिक्रिया । आचमनताम्बूलमुखवासो दिव्या गन्धादिकं पुनः ॥ १६ ॥ राज्योपचारगीता च महानीराजनं तथा ॥ १७ ॥ शङ्खादिवादनं साम्बुशङ्खनीराजनं स्तुतिः । नतिः प्रदक्षिणाकर्म्मार्पणं जपयाचने ॥ १८ ॥ आगस्क्षमा- पनं नामापराधा निर्म्माल्यधारणम् । शङ्खाम्बुतीर्थं तुलसी पूजा सन्मूर्त्ति- कादि च ॥ १९ ॥ धर्म्मायाननिवेदस्य साम्यादिनैवपार्शनम् । कथादे- वैमृदेवादिना च आमर्षसङ्गते । विसर्ज्जनैऽजने दोषाभावसवित- भोजने । भैक्ष्यभक्षणं मला माध्वीमहदो क्रनिः । चपुट्रितिपेल्यो- पहासविक्ष दिदुग्धम् ॥ २० ॥ २० ॥ २० ॥ २० ॥ २० ॥ २० ॥ २० ॥ २० ॥

मता भक्तिर्विष्णुशास्त्र श्रीमद्भागवतं तथा । लीलाकथा च भगवद्धर्माः सायं निजक्रियाः ॥ कर्मपातपरिहारस्त्रिकालार्घो विशेषतः । नक्तं कृत्वान्यथा पूजाफलसिद्ध्यादिदर्शनम् ॥११॥ विष्णुप्रदानं विविधोपचारान्यूनपूरणम् । शयनं भक्तिमार्गीयाः श्रीमन्नाम्नस्तथाद्भुतः ॥ नामापराधभक्तिश्च प्रेमाद्याश्रयणादयः । पक्षेष्वेकादशी साङ्गा श्रीद्वादश्यष्टकं महत् ॥ कृत्यानि मार्गशीर्षादिमासेषु द्वादशस्वपि । पुरश्चरणकृत्यादि मन्त्रसिद्धस्य लक्षणम् ॥ मूर्त्याविर्भावनं मूर्तेः प्रतिष्ठा कृष्णमन्दिरम् । जीर्णोद्धृतिः श्रीतुलसी विवाहोऽनन्यकर्म च ॥

End ये स्मरन्ति सदा विष्णुं विशुद्धेनान्तरात्मना । ते प्रयान्ति भयं त्यक्त्वा विष्णुलोकमनामयं ॥ प्रभाते चार्द्धरात्रे च मध्याह्ने दिवसक्षये । कीर्त्तयन्ति ये वै भक्त्या ते तरन्ति भवार्णवम् ॥ आनन्दितोऽथवा चार्त्तः क्रुद्धः शान्तोऽथवा हरिम् । योऽनुकीर्त्तयते भक्त्या स गच्छेद्वैष्णवीं पुरीम् ॥ गर्भजन्मजरारोगैः दुःख संसारबन्धनैः । न बाध्यते नरो नित्यं वासुदेवमनुस्मरन् ॥ एवमेकान्तिनां प्रायः कीर्त्तनं स्मरणं प्रभोः । कुर्व्वतां परमप्रीत्या कृत्यमन्यन्न रोचते ॥ भावेन केनचित् प्रेष्ठ श्रीमूर्त्तेरङ्घ्रिसेवने । स्यादिच्छैषां स्वमन्त्रेण स्वरसेनैव तद्विधिः ॥ विहितेष्वेव नित्येषु प्रवर्त्तन्ते स्वयं हि ते । इत्याद्येकान्तिनां भाति माहात्म्यं लिखितं हि तत् ॥ सदा सदाचार परास्तु ये नरा भवन्तु दामोदरभक्त्यपेक्षया । तदीयपादाम्बुजधूलिधूसरं कदा भवेदन्यशिरोधमस्य मे ॥ श्रीनन्दसुन्दरमुकुन्दपदारविन्दप्रेमाश्रुतास्मरसतुन्दिलमानसा ये । नानार्थद्वन्दमनुसन्दधते न च स्वं तेषां पदाब्जमकरन्दमधुव्रतः स्याम् ॥ ० ॥

Colophon. इति श्रीगोपालभट्टविलिखिते श्रीभगवद्भक्तिविलासे प्रासादिको नाम विंशोविलासः ॥ ० ॥ ० ॥ समाप्तश्चायं ग्रन्थः ॥ ॐ तत्सत् ॥ शकाब्दाः १७४९ ॥ श्रीकृष्णाय नमः ॥ श्रीरामचन्द्राय नमः ॥ श्रीहरिः ।

विवरणम् । हरिभक्तिविलासो नाम कश्चिद्वैष्णवसम्प्रदायधर्म्मनिबन्धविशेषः श्रीगोपालभट्टविरचितः विंशत्यध्यायैः सम्पूर्णः । सुप्रसिद्धोऽयं बङ्गेषु । अत्रालोचितविषया ग्रन्थकृतैव मुखबन्धे नामतोनिर्द्दिष्टा अस्माभिरपि तथैव समुद्धृताः ।

---

**No. 209.** हारलता । Háralatá. Substance, foolscap paper, 18×5 inches. Folia, 87. Lines, 8 in a page. Character, Bengali. Date, Saka 1749. Appearance, fresh. Prose. Not correct. Complete.

Another complete copy of the same work.

विवरणमूलपूर्ब्बम् ।

---

No. 211. हारलताटीका ।Háralatáṭíká. Substance, foolscap paper, 17 x 4½ inches. Folia, 45 Lines, 4-8 in a page. Character, Bengali. Date, Saka 1751. Appearance, fresh. Prose Generally correct Complete.

A commentary on the Háralatá, entitled Sandarbhasútiká, by Achyuta Chakravartin, son of Haridása Tarkáchárya.

Beginning. ॐ नमो गणेशाय ॥ यामुपास्ते प्रमादाय नरीष्टत्या महेश्वरीम् । भवभूतिकरीं देवीमन्नपूर्णां नमामि ताम् ॥ शिष्याणामनुरोधेन श्रीमदच्युतशर्म्मणा । अनिरुद्धहारलताशौचनिबन्धो विशदीकृतः ॥ नच तावत् पुरतः शिष्यविनीतप्रवृत्तिभ्यामनुष्ठितेष्टदेवतानतिमङ्गलश्चिकीर्षितग्रन्थाभिधेयप्रयोजने पद्याभ्यां निबध्नाति प्रणम्येति ।

End. अथास्थिसञ्चयनं ॥ भागीरथ्यां यचेति फलभूतमार्थमिदं वचनान्तरात् केवलगङ्गायामपि विसर्ज्जनादगमात् आमन्तमिति एतेन मध्याकृतस्यतमस्य स्वजात्युक्ताशौचकालमध्ये गङ्गायां विसर्ज्जने तु गङ्गामरणतुल्यफलम् । दशाहाभ्यन्तरे यस्य गङ्गायामस्थि मज्जति । गङ्गायां मरणे यादृक् तादृक् फलमवाप्नुयात् ॥

Colophon इति हरिदासतर्काचार्य्यात्मजश्रीमदच्युतचक्रवर्त्तिना रचितेयं टीका हारलतायाः सन्दर्भसूतिका समाप्ता ॥ * ॥ शकाब्दा १७।५१ श्रीश्रीराम श्रीदामोदराय नमः श्रीकृष्णाय नमः ॥ श्रीराधाकृष्णाभ्यां नमः ॥

विवरणम् । सन्दर्भसूतिका नाम हारलतायाः टीका श्रीमदच्युतचक्रवर्त्तिनेरचिता ।

---

No. 212. स्मृत्यर्थसारः । Smṛityartha Sáraḥ Substance, country-made white paper, 10 x 3½ inches. Folia, 42. Lines, 10-13 in a page. Character, Nágara Date, ? Appearance, old, slightly worm-eaten, and written by different hands. Prose. Correct Complete.

Another complete copy of the work noticed in No. 206.

विवरणमूलपूर्ब्बम् ।

---

**No. 213.** हेमाद्रिः । Hemádriḥ. *Substance, country-made white* paper, 10×4 inches. Folia, 766 (of which foll 1–12 are destroyed). Lines, 9 in a page. Character, Nágara. Date, ? Appearance, very old, torn, and partly worm-eaten. Prose Correct. Incomplete.

A digest of Hindu law and ritual in five parts. The first part treats of Vrata or fasts, the 2nd of Dána or Benefactions, the 3rd of Kála or time appropriate for the performance of ceremonial rites, the 4th of Sráddha, or offerings to the Manes, and the 5th of miscellaneous rites and observances. The whole work is called Chaturvarga Chintámaṇi. By Hemádri, Rája of Deogar, who flourished in the thirteenth century. It is generally believed that Vopadeva is the author of the work, and he was born in the Śaka year 1182. (See the Catalogue of Sanskrit Manuscripts, Asiatic Society, Bengal, Vols. III and IV p. 349).

The codex under notice is a mere fragment of the 1st part only. Nearly the whole work has been published by the Asiatic Society of Bengal. It is held as a chief authority throughout the country, and quoted frequently by modern writers like Raghunandana, in their works.

**Beginning.** ( नास्ति ) ।

**End.** ( नास्ति ) ।

***Colophon.*** ( नास्ति ) ।

विवरणम् । देवगिर्य्याधिपस्य हेमाद्रिनृपस्य कृतिश्चतुर्वर्गचिन्तामणिर्नाम धर्मशास्त्रीयो निबन्धविशेषः पञ्चभिः खण्डैर्विभक्तः तत्र प्रथमो व्रतखण्डः, द्वितीयो दानखण्डः, तृतीयः कालखण्डः, चतुर्थः श्राद्धखण्डः, पञ्चमः प्रकीर्णखण्डः । तेष्वग्रतमसमाप्तोऽयम्पुस्तकं दानखण्ड-मात्रमसम्पूर्णमाद्यन्तहीनत्वात् । हेमाद्रिकृतचतुर्वर्गचिन्तामणिर्हि सुप्रसिद्ध एव मुद्रितः प्रकाशितश्च खण्डशो वङ्गदेशीयासियाटिकसमित्या प्रायः सम्पूर्णो ग्रन्थः ।

---

**No. 214.** हेमाद्रिः (दानखण्डः) । Hemádriḥ (Dánakhandaḥ). Substance, country-made white paper, 10×4½ inches Folia, 504 Lines, 9 in a page. Character, Nágara. Date, ? Appearance, very old, worn out, and worm-eaten throughout, especially in the latter parts. Prose. Generally correct. Incomplete.

The Dánakhaṇḍa or the second part of the Chaturvarga Chintámaṇi of Hemádri, beginning with an index of contents in Sanskrit.

Beginning. ॥ ॐ नमो गणेशाय कल्याणानि ददातु वो गणपतिर्यस्मिन्नतुष्टे सति
क्षोदीयस्यपि कर्म्मणि प्रभवितुं ब्रह्मापि जिह्मायते जावे यच्चरणप्रणाम-
सुलभे सौभाग्यभाग्योदये रंकस्यांकमनंकुशाणि विशते देवेन्द्रलक्ष्मीपतिः।
१॥ प्रथयतु पुष्णद्धिरण्यगर्भरसनासिंहासनाध्यासिनी सेयं वागधिदेवता
वितरतु श्रेयांसि भूयांसि वः यत्पादाम्बुजकोमलाङ्गुलिनखज्योत्स्नाभिरुद्वे-
लितः शब्दब्रह्मसुधाम्बुधिर्बुधमनस्युच्चूलं खेलति ॥ २ ॥ रामः.लक्ष्मणव-
त्सवत्सृतिरियं चेतश्चमत्कारिणी मुग्धे वेत्थ यथा मया प्रभरते वैदग्ध्य-
माविष्कृतं जानीते दयितैव सा प्रभरते दद्युद्द् विधत्ते भवानित्युक्ते-
मधुजिन्निशम्यस्मुखः स्निग्धन् प्रियां पातु वः ॥ ३ ॥ संसक्तो धरणीधरे-
श्वरभुवि क्रीडन्मृगांकाननश्रेणीमाकलयन् गुणान्वयमिलत् पञ्चानन-
ख्यातिमान् कांताराग्रविनोदिनां निजपदं मुक्तामयं दर्शयन् भूयान्नित्य-
मनेकपापहतये श्रीकंठकंठीरवः ॥ ४ ॥ ते देवस्य गभस्तयो दिनपतेरापन्न-
खेदच्छिदो निष्कृन्तंतु कृतांतपत्तनपथप्रस्थानदौःस्थ्यानि वः यैः सौवर्ण-
मिवाखिलं करुणया निर्म्मातुमभ्युद्यतैः कौर्णस्वर्णपरागरागघटितं दिक्-
चक्रमालक्ष्यते ॥ ५ ॥ अस्ति प्रशस्तगुणस्तोमः सोमवंशविभूषणं महादेव इति
ख्यातो राजराजेव भूतले ॥ ६ ॥ संप्राप्तेष्वधमर्णतामुपगता वीरा. पराः
कोटयः सर्व्वस्वप्रतिपादनेन विविधानाधीन्निरस्य क्षणात् असादादवै
निरत्ययसुख लवैतदीयं यशो दिक्पालानिव साक्षितां गमयितुं दिङ्-
मण्डलीमुंचति ॥ ७ ॥ मैत्रीभजंय गुर्जर ब्रज परां नेपालपालक्षमामाश्रां
पालयमालवेश्वर भयं गौरंभ्रमांध्र स्मर सप्तद्वीपमहीपतीनिति दिता-
मध्यापयंती धिय यत्कीर्त्तिः सुखदायिनी रिपुकुले मानुष्यदे मान्यदे ॥ ८ ॥
हेलासादितलक्षमार्गणगणं शृत्वैतदीयं गुणं येषां श्रेणिरनुस्मरंत्यहरहस्तुष्टाव
दाताद्भुतं तेषामेव महाहवेषु मिलतां प्रत्यर्थिनामर्थिनामप्यस्य.यभुजं
प्रजांति विलयं सैन्यानि दैन्यानि च ॥ ९ ॥ अस्योच्चैर्भीमभूमीधरगहनगुहा
गर्भगर्जन्मृगेन्द्रत्रासव्यासप्रसंगाद्वलनकुलकुलं व्याकुलव्यालमालं वारं-
वारं स्मृतैतद्भुजगभुजयुगीस्फीतमन्तर्व्वरीधा मूर्च्छामृच्छंति हंत क्षिति-
धरभरणो लंघयंतो द्विषंतः ॥ १० ॥ षोडशक्रतवो येन चक्रिरे चक्रवर्त्तिना।
अपूर्वपञ्चयज्ञानां स्वपाणां तेन का तुला ॥ ११ ॥ अनेन चिंतामणि काम-
धेनु कल्पद्रुमानर्थिजनाय दत्तान् विलोक्य शक्रे किममुष्य सर्व्वगीर्व्वाण

नाथोऽपि करणदोऽभूत् ॥ १२ ॥ तस्यास्ति नाम हेमाद्रिः सर्व्वश्रीकरण
प्रभुः । निजोदारतया यश्च सर्व्वश्रीकरणप्रभुः ॥ १३ ॥ तस्य श्रीकरणेशस्य
कापि लेखनचातुरी । यशःप्रशस्तिभिः पूर्णा येन दिग्भित्तयो कृताः ॥
१४ ॥ लिपिं विधात्रा लिखितां जनस्य भाले विभूत्या परिहृत्य
दुष्टां । कल्याणिनीमेष लिखत्ययैनां चित्र प्रमाणीकुरुते विधिश्च ॥१५॥
संचिंत्य संचिंत्य तदेतदीयं धत्ते मनो विस्मयमप्यदीयं । प्रागुजन्मविद्या-
भ्यसनश्रमोऽयं क्षणेन यद्विस्मृतिमेति दत्वा ॥ १६ ॥ मन्ये तत्कृतदान
वारिलहरीपूर्णोऽयमर्णोनिधिः कल्पांतेऽपि न शोषदोषविषमां धत्ते
कदाचिद्दशां किं चित्ते जलधिस्थितिप्रतिभुवं निश्चित्य दैत्यारिणा
निर्द्विंवेन भुजंगपुंगवतनूतल्पे सुखं सुप्यतां ॥ १७ ॥ चित्रं तद्वनदान
दृष्टिपथमस्तस्य किं ब्रूमहे यस्मिनन्यवदान्यकीर्तिरतुला धत्ते दृष
देषिता यद्भुमौ पतितं प्रसिष्णुजनतापद्मानि यत्रार्थिनां न्यस्तं हस्ततलेषु
भालफलके पापां लिपिं लुंपति ॥ १८ ॥ तत्सर्पितो देवगण. समून-
मरोधकोचंद्रमसः सुधायां चयं तु चंद्रस्य तदीयकीर्तिस्फुटांशस्फुटानि
फलंत्यधानि ॥ १९ ॥ शूराणामवधिर्निधिश्च यशसामेकाश्रयः संपदां
दातॄणां प्रथमः कलाकुलगृहं वैदग्ध्यभाजां गुरुः धौरेयश्च विपश्चितां
सुकृतिनामद्वैतवादास्पदं नैवासीन्न च वर्त्तते न भविता हेमाद्रिसूरेः
परः ॥ २० ॥ बिभर्त्ति नूनं द्विजवेषमेष स एव हेमाद्रिरिति प्रतीमः
उदारसंतानवतो यदस्य कल्पद्रुमं दक्षिणवाङ्माङ. ॥ २१ ॥ अयानुना
धर्मकथादरिद्रं त्रैलोक्यमालोक्य कलेर्बलेन तस्योपकारे दधतानुचिंतां
चिंतामणि. प्रादुरकारि चायः ॥ २२ ॥ पंचखंडात्मके शास्त्रे व्रतखंडा-
दनंतरं दानखण्डमिदं तच द्वितीयमथ कथ्यते ॥ २३ ॥

End. ( नास्ति ) ।

Colophon. ( नास्ति ) ।

विवरणम् । हेमाद्रिकृतचतुर्व्वर्गचिन्तामणिनिबन्धस्य द्वितीयोभाग. दानखण्डं नाम ।
पुस्तकमिदमसम्पूर्णम् ।

---

No. 215. हेमाद्रिः (दानखण्डम्) । Hemádriḥ (Dánakhandam). Substance, country-made white and yellow paper, 18×14 inches (bound in book form). Folia, 117. Lines, 9 in a page. Character, Nágara. Date, ? Appearance, old, some folia being spoiled by water. Prose. Generally correct. Incomplete.

Another incomplete copy of the same part of the Chaturvarga Chintámani.

विवरणमुक्तपूर्व्वम् ।

---

**No. 216.** हेमाद्रिः (श्राद्धखण्डम्) । Hemádrih (S'ráddhakhandam). Substance, country-made white paper, 10×5 inches. Folia, 733. Lines, 11 in a page Extent, 24,000 S'lokas. Character, Nágara. Date, Samvat 1839. Appearance, very old, worn out, and written by different hands. Prose. Generally correct. Complete.

A complete copy of the third part or Sráddhakhanda of the Chaturvarga Chintámani.

**Beginning.** ॐ नमः श्रीगणेशाय क्षीरोदार्णवसारमंथचकलालीलासमालिंगितो भ्राम्यन्मंदरकूटकोटिघटनानिर्म्मरत्नांगदः । उन्मीलन्नवनीलनीरजदलश्रेणिप्रभामंडलस्माघालंघनजांघ्रिकर्कविरश्री पायादपायाद्धरिः ॥ १ ॥ गणेशं वंदेऽहं मदजलगलन्निर्झरसरित्परामोदे खेदप्रहतमनसां क्रीडनवनां द्विरेफद्वंद्वानां फलमरमकंकारसरणैः स्वरप्रायैर्गेयैः श्रवणपुटपेयैः प्रमुदितम् ॥ २ ॥

**End.** एवं कृते जीवच्छ्राद्धे स्वबान्धवे मृते नाशौचं प्रसूते वा न सूतकं । एतस्मादुत्पन्नः पुत्रोऽपि पित्रादिजातकर्म्मादिना संस्कार्य्यः स च ज्ञानी भवेत् । एवं दुहिता चेति । तथा चैतं संततौ योगिनो जायंत इति ।

**Colophon.** इति महाराजाधिराजश्रीमहादेवीय सकलश्रीकरणाधिपति पण्डित श्रीहेमाद्रिविरचिते चतुर्व्वर्गचिंतामणौ परिशेषखंडे श्राद्धकल्पे जीवश्राद्धप्रयोगः ॥ ॥ श्राद्धकल्पप्रशंसा मत्स्यपुराणेः । एतदुक्तं तव भूमिपाल श्राद्धस्य कल्प मुनिसंप्रदिष्टं । पापं हि पुण्यं विवर्द्धनं च लोके तु दुःखचकरं (?) तथैव ॥ १ ॥ सत्पुण्यां कुरु तेषु (?) यस्य हननारंभो द्दणेषु कचिन्नासीत् कोऽप्यवकेशितां स्मृति + + + + + + श्रीकरणे रचितो हेमाद्रिणायं महाग्रंथश्राद्धनिबंधशब्दविषयः पुष्णातु मोदं सत (मोद सताम् ?) ॥ इति श्रीश्राद्धकल्पः समाप्तः ॥ छ ॥ शुभं भवतु ॥ २४००० ॥ छ ॥ ॥ छ ॥ मीति आषाढ़सुदी ११ वाः सतवार संवत् १८३९ श्रीरामचन्द्राय नमः ॥ श्रीमहाजीय नमः (?) श्रीशिवजीय नमः (?)।

विवरणम् । चतुर्व्वर्गचिन्तामणिनिबन्धस्य श्राद्धखण्डं नाम तृतीयभागः ।

---

**No. 217.** हेमाद्रिः (श्राद्धकल्पः) । Hemádrih (S'ráddhakalpah). Substance, country-made white paper, 9 × 3½ inches. Folia, 71. Lines, 8–10 in a page. Character, Nágara. Date, Samvat 1731. Appearance, very old, written by different hands, and worm-eaten. Prose. Generally correct. Complete.

A guide to the performance of the Sráddha ceremony according to the rules of Kátyáyana, entitled Sráddha Kalpa, by Hemádri, the author of Chaturvarga Chintámani. This is a different work from the Sráddha-khanda of the Chaturvarga Chintámani.

**Beginning.** श्रीगणेशाय नमः ॥ यत्पादपङ्केरुहपांशुपूते दुर्गेंगयामूर्द्धनि सक्तुपिंडे. । मुक्तिं सदा पातकिनो लभन्ते गदाधरं तं शरणं प्रपद्ये ॥ १ ॥ प्रणेता शास्त्रार्थां सपदि सुहृदामुन्नमयिता क्रतूनामाहर्त्ता समरभुवि नेता क्षितिभृतां ॥ विनेता साधूनामभिलषितदाता गुणवतां मनीषी हेमाद्रिर्जयति जगतीभूषणमणिः ॥ २ ॥ स्वपनयापाकरणानिरिक्तैर्मुदां निदानैरपि यस्य दानैः । देवादयः प्रत्युत धारयंति चिंतामनंतामधमर्णतायाः ॥ ३ ॥ सृजतः सततं दिगंगनानां श्रवणाभोगविभूषणं यशः । चरितं कथमस्य कथ्यते जगति जंगमकल्पशाखिनः ॥ ४ ॥ निश्चित्य पिच्छाखिलस्मृतिभ्यः कृत्यानि कात्यायनसंयतानि । निबध्यते श्राद्धविधिः क्रमेण हेमाद्रिणा श्रीकरणाधिपेन ॥ ५ ॥ यश्चकार चतुर्व्वर्गचिन्तामणिंमनल्पधीः । हेमाद्रिस्सूरिणा तेन क्रियते श्राद्धपद्धतिः ॥ ६ ॥

**End.** कुर्व्वन्नरदः श्राद्धं वित्तशाठ्यविवर्ज्जितं । पितृणां चरणे भक्त्या गतिमिष्टां प्रपद्यते । इति नित्यश्राद्धविधिः ॥ श्रुतिस्मृतिपुराणेभ्यो मया हेमाद्रिणोद्धृतम् । श्राद्धकल्पमिदं सम्यक् पितृणां तुष्टिकारकम् ॥

**Colophon.** इति हेमाद्रिविरचितं श्राद्धकल्पं सम्पूर्णम् ॥ शुभमस्तु ॥ संवत् १७३१ समय मार्गसुदि चतुर्दश्या ॥ ॥

विवरणम् । हेमाद्रिविरचितः कात्यायनमतानुगतश्राद्धानुष्ठानपद्धतिरूपः श्राद्धकल्पो नाम कश्चिन्निबन्धः ।

---

**No. 218.** हेमाद्रिः (परिशेषखण्डं) । Hemádrih (Pariseshakhandam). Substance, country-made white paper, 10 × 4½ inches. Folia, 153 (of which foll 1 and 32 are wanting). Lines, 5–11 in a page. Extent, 25 s. c.

about 5,000 ślokas. Character, Nágara. Date, ? Appearance, very old, torn, worn out, and worm-eaten throughout Prose. Not correct. Complete (except the two folia mentioned above).

The Pariśishṭakhanda or the supplementary part of the Chaturvarga Chintámaṇi treating of miscellaneous matters by Hemádri, containing descriptions of horses, elephants, and other things. The codex contains also a fragment of the Káś Maheśá Vivaraṇa.

**Beginning.** ( नास्ति ) ।

**End.** चतुर्थी नात्र विज्ञेया न च द्विवचनं क्वचित् । तदादौ यो गुरुः सोऽत्र लघुरेव विधीयते ॥ दिङ्मात्रमेतदुद्दिष्टं मया प्राकृतलक्षणम् । प्रयोगा-दनुगन्तव्यो विस्तरादतिविस्तरः ॥ देशेषु पृथग्विभिन्नं न शक्यते लक्षण-मस्य वक्तुं । लोकेषु यत्स्यादपभ्रष्टमतं ज्ञातं हि तद्देशविधौ विकारैः ॥ इति प्राकृतलक्षणम् ॥ ७ ॥

**Colophon.** इति श्रीमहाराजाधिराजश्रीमहादेवीयसमस्तकरणाधीश्वरसकलविद्या-विशारदश्रीहेमाद्रिविरचिते चतुर्व्वर्गचिन्तामणौ परिशेषखंडे लक्षण-समुच्चयप्रकरणं समाप्तमिति ॥ ॥

विवरणम् । हेमाद्रिविरचितचतुर्व्वर्गचिन्तामण्यभिधप्रसिद्धनिबन्धस्य परिशेषखण्डः । अत्र अश्वगजरत्नादिविविधवस्तूनां छन्दोव्याकरणादीनाञ्च लक्षणानि सन्ति ।

---

No. 219. विधानपारिजातः । Vidhána-párijátaḥ. Substance, country-made white paper, 12 × 5 inches Folia, 329. Lines, 7-13 in a page. Character, Nágara Date, 1884 Appearance, not old, but torn, and worm-eaten in some parts, and written by different hands. Prose. Generally correct. Complete

Another complete copy of the work already noticed in No. 109, by Ananta Bhaṭṭa.

**Colophon.** इति श्रीमदनंतभट्टविरचिते विधानपारिजाते गणहोमविधानं ॥ समाप्तं श्रीरस्तु संवत् १८८४ माघकृष्णत्रयोदशी भौमवासरे लिखा पुस्तक ॥

विवरणमुक्तपूर्व्वम् ।

---

No 220. शम्भुभट्टकृतसंग्रहः । Sambhu-Bhaṭṭakṛita Saṅgrahaḥ. Substance, country-made white paper, 10×4 inches. Folia, 13. Lines, 11-12 in a page. Character, Nágara Date, Samvat 1819. Appearance, not old. Prose. Correct. Complete.

A guide to the performance of certain Vedic sacrifices as Aikáhika, &c., compiled by Sambhu Bhaṭṭa, son of Bála Kṛishṇa, from the original aphorisms, such as the Sánkhyáyana Sútra, &c. This is rather a Vedic work.

Beginning. श्री गणेशाय नमः ॥ अपास्यारंभार्थं समभि समुपानीय ग्रथितां विचारं कुर्वंतु प्रथितमहिमानो हि विबुधाः । रसानां संप्राप्तौ भवति मधुपो यत्नपरं पुरोभाग्यी कार्यं भवति भुवने न स्तुतिपदं ॥ १ ॥ नानानिबंधं आलोच्य संग्रहोऽयं निरूपितः । बालकृष्णतनूजेन शम्भु-भट्टेन धीमता ॥ २ ॥ ऐकाहिकानुष्ठाने शांख्यायनसूत्रं ॥ अथवाप्येकपर्व-ण्येकपशौ चेंद्राग्ने पराधि सर्वोपयुपकृतेरा पित्र्यादैवकादूर्ध्वमनुयाज्य-प्रभृतिमनोतादि पशुना वा । अथ मध्याद्देवं श्रायते यानि संवत्सर साध्यानि तान्येव यदि दैवान्मानुषाद्वाऽपराधात् संवत्सरसाध्यानि चातुर्मास्यानि कर्तुमशक्नुयात् तदा ऐकाह्न्यनुष्ठेयानि नित्यलोपो-माभूदिति । ++ पांचाहिकानि । अपि मध्याद् यदि कथंचिता-न्यपि कर्तुं न शक्नुयात् तदा एकस्मिन् पर्वणि एकेनापशुना सर्वं समापयेदिति ।

End. होता आवाहनोत्तमप्रयाजमिहहृदादिनिगदेषु मरुतो स्वधमेधिनो यक्षंयित्वोक्तदेवता अक्रमेण उपांशुधननूतमुच्चरेण वदेत् । नव प्रया-जानूयाजाः । येऽ३(?)स्वाहाग्निं स्वाहा सोमं स्वाहाग्निं स्वाहा सोमं स्वाहेत्युक्तैः सवितारमित्युपांशु स्वाहा सरस्वतीं स्वाहा पूषणं स्वाहा मरुतः स्वाहा विश्वान् देवान् स्वाहेत्युक्तैः द्यावापृथिवी इत्युपांशु स्वाहेंद्राग्नी स्वाहा मरुतः स्वाहा वरुणं स्वाहेत्युपांशुक्तैः कमित्युपांशु स्वाहाग्निमनी कवंतं स्वाहा मरुतः सांतपनान् स्वाहा मरुतः क्रीडिनं स्वाहेंद्रं स्वाहेत्युक्तैः विश्वकर्माणमित्युपांशु स्वाहादितिं स्वाहेंद्राग्नी स्वाहा विश्वान् देवान् स्वाहेंद्रं शुनासीरं स्वाहा वायुं स्वाहेत्युक्तैः सूर्यमित्युपांशु स्वाहा देवा आज्यपा इत्यादि । एवमन्यचोद्यं अन्यत् सर्वं चातुर्मास्यदौचवत् ॥ संवत् १८१९ मिती भाद्रपदविदयोदश्यां लिखितमिदं वैदिकशिरोमणि महादेवात्मजरामचंद्रदेवेन । ष । यस्मयोक्तमिदाम्नानात् सम्बद

स्वल्पमन्यथा । खतव्यं तत्सुधीभिर्ष्यं च धाज्ञिका व्ययमंजलिः । यदत्र सौष्ठवं किंचित् तद्गुरोरेव केवलं ॥ यदत्रासौष्ठवं किंचित् तन्ममैव गुरोर्न हि । मूर्खोस्य निंदापि विभूषणं मे ग्रंथान् समालोच्य विभाव्य शोध्यं स्तुवंतु निंदंतु स्तदाथवा माम् ॥ ॥ श्रीभवानीशंकरार्पणमस्तु ॥ ॥ ॥

विवरणम् । ऐकाहिकादिकतिपयवैदिकयज्ञानुष्ठानविषयकोऽयं निबन्धः । शम्भुभट्टसंगृहीतः । वैदिकग्रन्थेष्वेवास्यान्तर्भाव उचितः ।

---

No. 221. सदाचारक्रमः । Sadáchára-kramaḥ. Substance, foolscap paper, 18×4 inches. Folia, 47. Lines, 8–9 in a page. Character, Nágara. Date, 1885 Appearance, almost fresh Verse. Not correct. Complete.

A few observations on good conduct, under the name of Sadáchára-krama by Vaśishṭha, addressed to Ráma, the hero of the Rámáyana. It is a part of the Yogaváśishṭha Rámáyaṇa.

Beginning अथ योगः ॥ ॐ वसिष्ठः ॥ जन्मान्तरशताभ्यस्त (शताभ्यस्ता ?) रामसंसारसंस्थितिः । साचिराभ्यासयोगे विना क्षीयते क्वचित् (अभ्यासयोगेन विना न क्षीयते क्वचित्?) ॥ १ ॥ नि—संसारोत्तरणे युक्तिर्योगशब्देन कथ्यते । तौविद्धि द्विः प्रकारां त्वं चित्तोपशमवर्मिणौ ॥ २ ॥ आत्मज्ञानं प्रकारोऽस्या एकः प्रकटितो भुवि । द्वितीयं (द्वितीय.) प्राणसंरोध. (संरोधः?) शृणु योऽयं मयोच्यते ॥ ३ ॥ श्रीरामः ॥ सुलभत्वा (सुलभत्वा ?) दसुखत्वात् कतरः शोभनोऽनयोः । येनावगमभावेण भूयः क्षोभो न बाधते ॥ ४ ॥ वशिष्ठः प्रकारौ द्वावपि प्रोक्तौ योगशब्देन यद्यपि तथापि रूढिमायातः प्रकरणयुक्तावसौ श्रृव(?) ।

End. अर्कं कुर्वंश्चरोरात्रे दर्शयत्याकृतिं यथा । चितिः सदसतीकर्शयत्याकृतिं तथा ॥ १५ इदानीं द्रष्टृत्वमुपपाद्योपदिशति । चिदण्डाय (?) सिध्यर्थं (सिद्ध्यर्थं ?) सांसरिं चित्तमतुष्कृतं । बहिरूपतया धत्तेः (?) स्वात्मन्येव (स्वात्मन्येव?) परिस्थिता ॥ ११ ॥ एतद्वहिस्थमन्तस्थमपि शब्देन वस्तुनि । उपदेशमसत्त्वानां चिद्रुपत्वाद्ध सन्तयो ॥ २ ॥

Colophon इति श्रीवशिष्ठमुनिकृतं (तः ?) सदाचारक्रम. समाप्तः सम्पूर्णम् (?) * ॥ इति श्रीष्ठपदी द्वादश्यायां (?) मदवाघरे (?) मयुतायां सदाचार-

क्रमः लिखितं मया हरकुमारब्राह्मणो (?) काशीवास परस्थं (?) ॥ संवत् १८८५ । शुभम् ॥ शरीरस्तु । आरोग्यमस्तु ॥ श्रीकालिकादेव्यै नमो नमः ॥ श्रीकृष्णाय नमः ॥

विवरणम् । सदाचारक्रमो नाम वशिष्ठमुनिकृतः कश्चित् सन्दर्भविशेषः । अत्र योगस्यैव प्राधान्येन कथनात् योगवाशिष्ठरामायणस्य कश्चिदंशभूतोऽयमित्यनुमीयते ।

---

No. 222. समयमयूखः । Samaya-mayúkhaḥ. Substance, country-made white paper, 16×4½ inches. Folia, 172. Lines, 7-9 in a page. Extent, 3,200 ślokas. Character, Nágara. Date, ? Appearance, old, and slightly worm-eaten. Prose Not correct. Complete.

A work treating of the time suitable for religious observances, under the name of Samaya-mayúkha, by Nílakanṭhabhaṭṭa, surnamed Mímáṅsaka. It belongs to his series called Bháskara.

Beginning. ॥ श्रीगणेशाय नमः ॥ श्रीगोपीनाथाय नमः ॥ साम्बं श्री शंकरं नत्वा गणेशञ्च महाविभुम् । धर्म्मशास्त्रं मयुखाख्यं (मयूखाख्यं?) लिखामि ज्ञान हेतवे ॥ १ ॥ यो लीलया संतनुतेऽत्र विश्वं सतुपालयत्यात्मनि विश्वरूपः । लयं नयत्याशु च पूर्णरूपः शिवं तनोत्याशु रविर्नृसिंहो ॥ श्रुतीः स्मृतीर्वेद्मि (वीक्ष्य?) पुराणजातं तत्तन्निबंधानपि सन्निबंधान् । श्रीशंकरस्यात्मजनीलकण्ठस्तिथ्यादिकृत्यं विदधोति सर्व्वम् सा तिथिर्द्वेधा ॥ पूर्णा खण्डा च तत्राद्या (तत्राद्या?) स्कान्दे ॥ प्रतिपत्प्रभृतय. सर्व्वा उदयादुदयाद्रवेः । संपूर्णा इति विख्याता हरिवासरवर्ज्जिताः ॥ हरिवासर एकादशी ॥ तत्र वेधान्तरं वक्ष्यते । तद्भिन्नाः खण्डाः । तस्यावेधमाह पैठीनसिः । पक्षद्वयेऽपि तिथयस्तिथिं पूर्व्वां तथोत्तराम् ॥ त्रिभिर्मुहूर्त्तैर्विध्यन्ति सामान्योऽयं विधिं (धिः?) स्मृत इति ॥ अत्र पूर्व्वयातिथ्योदयोत्तरया पूर्व्वं त्रिमुहूर्त्तया वेधो विधीयते इति केचित् ॥ निबन्धृणान्तु सर्व्वेषां दिनमध्य एव पूर्व्वोत्तरतिथ्योस्त्रिमुहूर्त्तयोः प्रवेशो (त्रिमुहूर्त्तयाऽत्र वेधो?) भिमत. ॥ वक्ष्यमाणशिवरहस्यविष्णुधर्म्मोत्तरादिवाक्यात् ।

End. आदित्यपुराणे । शपथाः शकुनाः प्रश्नाः सामुद्रिकमुपश्रुतिः । उपयाचितमेतानि संति (?) कचित् कलौ तस्मात्तस्मात्तल्लाभेन कलौ कार्य्यं न कारयेत् ॥ विश्वपद्धतौ व्यासः । चत्वार्य्यब्दसहस्राणि चत्वार्य्यब्द-

शतानि च । कलेर्यदा गमिष्यन्ति तदा त्रेता परिग्रहः ॥ संन्यासश्च न कर्त्तव्यो ब्राह्मणेन विजानतेति । अथ त्रेतापरिग्रह इति वदता सर्व्वाधानमेव निषिध्यते अतएव लौगाक्षिः अर्द्धाधानं स्मृतं श्रौतस्मार्त्ताग्न्योस्तु पृथक्कृतिः . सर्व्वाधानं तयोरैक्यकृतिः पूर्व्वयुगाश्रितेति युगस्य पूर्व्वं पूर्व्वयुगं कलेः पूर्व्वभाग इति अर्थः अर्द्धाधानमपि यावद्वर्णवेदविभागं कार्य्यं अतएव देवलः ॥ यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्त्तते । संन्यासं चाग्निहोत्रं च तावत् कुर्य्यात् कलौ युग इति यद्यपि संन्यासस्य चतुश्चत्वारिंशच्छताद्ब्दावधिकत्वं व्यासेनोक्तं तथापि गौणकालोऽनेन समर्थित इति केचित् त्रिदण्डैकदण्डाभिप्रायेण व्यवस्थेत्यपरैः सामान्यतो निषिद्धस्य व्यासवाक्येनोपसंहार इत्यन्ये वस्तुतस्तु चत्वार्य्यपीत्यादीनि वचनानि महानिबंधेषु न दृश्यंते इति कलिवर्ज्जनानिर्णयः ।

Colophon. इति श्रीमीमांसकशंकरभट्टात्मजभट्टनीलकण्ठेन कृते भास्कराख्ये निबंधे समयमयूखः समाप्तिमगमत् ॥ * ॥ * ॥ रामचंद्राय (?) ॥ * ॥

विवरणम् । समयमयूखो नाम धर्म्मकृत्योपयोगिसमयनिरूपणविषयको निबन्धविशेषो नीलकण्ठभट्टविरचितः । निबन्धोऽयं तदीयभास्कराख्यधर्म्मनिबन्धस्यान्तर्गतः ।

---

No. 223. समयमयूखः । Samaya-mayúkhaḥ. Substance, country-made white paper, 8×6 inches. Folia, 132. Lines, 4–12 in a page. Extent, 3,200 ślokas. Character, Nágara. Date, Samvat 1772. Appearance, old Prose Correct Complete

Another complete copy of the same work.

विवरणन्तूक्तपूर्व्वम् ।

---

No. 224. सम्बन्धविवेकः । Sambandha-vivekaḥ. Substance, country-made foolscap paper, 18×4 inches. Folia, 6. Lines, 5–9 in a page. Character, Bengali. Date, ? Appearance, old. Prose. Generally correct Complete.

A work entitled Sambandha-viveka, treating of Sambandha or relation suitable for marriage, by Súlapáni.

Beginning. ॐ नमो गोपालाय । अथ सम्बन्धो विविच्यते ॥ तत्र मनु (?) । असपिण्डा च या मातुरसगोत्रा च या पितुः । सा प्रशस्ता द्विजातीनां

दारकर्मणि मैथुने । या मातुः सपिण्डा न भवति सा द्विजातीनां दारकर्मणि दारत्वसंपादके कर्मणि विवाहे । तथा मैथुने मिथुनसाध्येऽग्न्याधाने पुत्रोत्पत्त्यादौ च प्रशस्तेति सम्बन्धः । सपिण्डतादिलक्षणमाह मनुः । सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते । समानोदकभावस्तु जन्मनाम्नोरवेदने ॥ अस्यार्थः यं प्रतियोगिनं कृत्वा निरूप्यते तस्य पितृप्रभृतयः षट्पुरुषाः सपिण्डाः सप्तमोऽसपिण्डः न सपिण्ड असपिण्ड इति । अतएव लेपभागित्वेऽपि सापिण्ड्यमुक्तं कूर्म्मपुराणे । पिता पितामहश्चैव तथैव प्रपितामहः । लेपभाजश्चतुर्थाद्याः सापिण्ड्यं साप्तपौरुषम् । तथा मत्स्यपुराणे । लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः । पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषं ॥ तेषां दातृभोक्तृणामित्यर्थः । एतेनैतदुक्तं भवति एकसंप्रादानकपिण्डलेपभागेषु येषां दातृत्वेन भोक्तृत्वेन वा सम्बन्धः तेषां परस्परसापिण्ड्यं अर्थादुत्पत्तिवृद्धप्रपितामहस्य यो भ्राता तेन तत् सन्ततिभिश्च सह सापिण्ड्यं नास्त्येव ।

End. तथा मार्कण्डेयपुराणे । उद्वहेत् पितृमातृभ्यः सप्तमीं पञ्चमीं तथेति । परिहृत्येति शेषः तथा पैठीनसिः । असमानार्षेयीं कन्यां वरयेत् पञ्च मातृतः । परिहरेत् सप्त पितृतः त्रीन् मातृतः पञ्चपितृतो वेति त्रीन् पञ्चेति चासुरादिनिन्दितविवाहचतुष्टयविषयं क्षत्रियादिविवाहविषयञ्च एतेषु वचनेषु पितृमातृशब्दाभ्यां पितृसपिण्डपितृबन्धुमातृबन्धूनां तथा बीजिनाञ्च ग्रहणं तथा विष्णुपुराणे । सप्तमीं पितृपक्षाच्च मातृपक्षाच्च पञ्चमी । उद्वहेत द्विजो भार्य्यां न्यायेन विधिना नृप ॥ तथा गौतमः । असमानप्रवरैर्विवाह ऊर्द्धं सप्तमात् पितृबन्धुभ्यो बीजिनश्चैवं मातृबन्धुभ्यः पञ्चकादिति बीजिनः परं भार्य्याया नियोगतः बीजपक्षेऽप्यस्याप्येवमित्यर्थः तेन बीजिनः प्रभृति ऊर्द्धतमाद्धस्तनाद्वा सप्तमपुरुषादर्व्वाक् जातायाः कन्याया सप्तमीपर्य्यन्ताया विवाह इति प्रतिपादितम् यद्यपि असगोत्रा च या पितुरिति मनुवचनेन बीजिनः सप्तमादूर्द्धं समानोदकाया अपि विवाह इत्यनुज्ञायते एतच्चासुरादिविवाहविषयं क्षत्रियादिविवाहविषयञ्चेति न किञ्चिदप्यनुपपन्नं युक्तञ्चैतत् बीजिनो बीजप्रदानमात्रसम्बन्धेन क्षेत्रिणोऽपकृष्टत्वात् तथा सुमन्तुः पितृस्वसृसुतां मातुलसुतां मातृसगोत्रां समानार्षेयीं विवाह्य चान्द्रायणञ्चरेत् परित्यज्य चैनां बिभृयात् । तथा पैठीनसिः । कुलोत्पन्नां युक्ताचारां वरये मातृपितृस्वसृदुहितरौ मातरौ मातुलसुताश्च धर्म्मतस्ता भगिन्यो भवन्ति वर्ज्जयेत् तथा मातृसपत्नी भ्रातृसन्ततिरपि अविवाह्येत्याह सुमन्तुः ।

मातृपितृसम्बन्धा आगमप्रमादविवाह्याः कन्या भवन्ति आपदमादन्येषां सर्व्वाः पितृपत्न्यो भ्रातरस्तद्भ्रातरो मातुलास्तद्दुहितरो भगिन्यस्तद-पत्यानि भागीनेयानि एतेषां कन्यानां अविवाह्यत्वमित्यर्थः अन्यात्म-बोधमिति ॥ ० ॥

Colophon. इति श्रीगाण्डुभियामहूलपाणिविरचितः सम्बन्धविवेकः समाप्तः ॥ ० ॥ गुरुचरणे सदा मम भक्तिरास्ताम् ॥ ० ॥

विवरणम् । महामहोपाध्यायशूलपाणिविरचितः सम्बन्धविवेको नाम विवाहयोग्य-सम्बन्धनिर्णयविषयकोऽयं ग्रन्थः ॥

---

No. 225. मिताक्षरा । Mitákshará. Substance, country-made red paper, 18×2 inches. Folia, 4. Lines, 3–7 in a page. Character, Bengali. Date, ? Appearance, very old, and worn out. Prose. Correct. Incomplete

Only a part of the Mitákshará, the renowned commentary on Yájñavalkya, relating to the funeral ceremonies of persons committing suicide.

Beginning ॐ श्रीदुर्गा शरणं ॐ दुर्गायै नमः । आत्मनस्त्यागिनां नास्ति पतितानां तथा क्रिया । तेषामपि तथा गङ्गातोये संस्थापनं हितम् इति स्मरणात् तस्मादविशेषेण सर्व्वेषां दहनादिनिषेधः । अत्र स्नेहादिना निषेधातिक्रमे प्रायश्चित्तं कर्त्तव्यं । कृत्वाग्निमुदकं स्नानं स्पर्शनं वहनं कथां । रज्जुच्छेदाश्रुपातञ्च तप्तकृच्छ्रेण शुध्यति ॥ इति एतच्च प्रत्येकं बुद्धिपूर्व्वं वेदितव्यम् ।

End. सर्पदंशननिमित्तं सौवर्णनागदानप्रतिकृतिरूपेण भविष्यपुराणे सुमन्तुनाभिहितं । सुवर्णभारनिष्पन्नं नागं कृत्वा तथैव गां । व्यासाय दत्त्वा विधिवत् पितुरानृण्यमाप्नुयादिति । एवमुदकदानमपवादमभिधायानन्तरं किं कार्य्यमित्यत आह ॥ कृतोदकान् समुत्तीर्णान् मृदुशाद्वलसंस्थितान् । स्नातानवदेयुस्तानितिहासैः पुरातनैः ॥ कृतमुदकदानं यैस्तान् कृतोदकान् स्नातान् सम्यदुगकादुत्तीर्णान् मृदुशाद्वलेन मोक्षणपथयाश्रते भूभागे सम्यक्स्थितान् पुत्रादीन् कुलवृद्धाः पुरातनैरितिहासैर्वक्ष्यमाणैरपवदेयुः शोकनिरसनसमर्थैर्वचोभिर्बोधयेयुः ॥

Colophon. ( नास्ति ) ।

विवरणम् । धात्मघातिनामन्त्येष्टिक्रियाविषयको मिताक्षराया अंशविशेषः ।

---

No. 226. शूद्राह्निककृत्यम् । Sudráhnika-krityam. Substance, country-made coloured paper, 18×3 inches. Folia, 9. Lines, 6-7 in a page. Character, Bengali. Date, ? Appearance, old, and worn out. Prose. Correct. Complete.

A treatise on the religious duties of a Súdra, entitled Súdra-kritya, by Raghunandana, the famous author of the Smrititattwa.

Beginning. ॐ नमः शिवाय ॥ अथ शूद्राह्निककृत्यम् । प्रमाणमाह्निकतत्त्वेऽनुसन्धेयं ॥ तत्र प्रयोगः ॥

End. कृतमध्योगे तु रात्रावेकशय्यायां न शयीयातां । अस्त्रतावपि गर्भवत्यपि कामुकीमुपेयात् ॥

Colophon. इति वन्द्यघटीयहरिहरभट्टाचार्य्यात्मजश्रीरघुनन्दनभट्टाचार्य्यविरचितं शूद्राह्नःकृत्यप्रयोगतत्त्वं समाप्तं ॥ ० ॥ ॐ नमः शिवाय । श्रीकृष्णकान्तदेवशर्म्मणः स्वाचरं पुस्तकञ्च ॥ ० ॥ ० ॥ ० ॥ ० ॥

विवरणम् । स्मार्त्तश्रीरघुनन्दनभट्टाचार्य्यविरचितः शूद्राह्निककृत्यविषयकोऽयं निबन्धः ।

---

No. 227. पार्व्वणस्थालीपाकः । Párvana Sthálí-pákah. Substance, country-made colourless paper, 6×3 inches. Folia, 23. Lines, 10-12 in a page. Character, Nágara. Date, ? Appearance, very old, and worn out. Prose. Correct. Complete.

A work treating of the Sthálípáka ceremony, to be performed at new moon or at full moon by a married person. This work belongs to the Prayogaratna series.

Beginning. श्रीगणेशाय नमः ॥ अथ विवाहोत्तरकर्त्तव्योऽपि स्थालीपाकः प्रथम उच्यते । तत्रांगानामुक्तानामन्येष्वतिदेशेन प्राप्तेः ॥ स च विवाहानंतरं कर्त्तव्यः स्वप्रवेशनीयहोमोत्तरभाविन्यां पौर्णमास्यामारंभणीयः । न त्वमावास्यायां । चतुर्थीहोमात् प्रागपि पौर्णमासी चेत्तन्नारंभः । यदि चारंभकाले मलमासगुरुशुक्रास्तवाल्यवार्द्धकमहत्पौषमासादि भवति तदापि प्रारंभः कार्य्यः ।

End. ततः कर्त्ता परिस्तरणानि विसृज्याग्निं परिसमुह्य परिषिंच्य विष्णुमित्यर्चयित्वा नत्वा चापुष्पादिभिरलंकृत्य नैवेद्यं ताम्बूलं च निवेद्य ब्राह्मणे यथाशक्ति दक्षिणा दक्षिणाभावे कृतशेषहुतादि चरुरूपं दत्वा तदभावेऽन्यस्मै ब्राह्मणाय दत्वा पात्राणि प्रक्षाल्य पूर्वक्रमेण इंद्रपः उत्सृज्य यस्य स्मृत्येति विष्णुं नत्वाचम्य हुतपवित्रमंथिं विस्रस्य प्रणीतादेशे क्षिपेत् । दर्शे तु अग्नीषोमस्थाने इन्द्राग्नी इत्यत्र समानं सर्व दर्शितमेव । सद्यस्कालायां पौर्णमास्यामगत्योभयत्र वा यागादिनित्यमेव प्रातर्होमानंतरमेवान्वाधायेध्मावर्हिषी सन्नह्योऽपि प्रयोगं कुर्यात् ॥ ॥

Colophon. इति प्रयोगरत्ने पार्वणस्थालीपाकप्रयोगः शुभं भवतु ॥

विवरणम् । विवाहानन्तरकर्त्तव्यपार्वणस्थालीपाकाभिधकर्मविशेषानुष्ठानपद्धतिरूपो निबन्धविशेषः । प्रयोगरत्नान्तर्गतः ॥

---

No. 228. संग्रहदीपिका । Saṅgrahadipiká. Substance, country-made white paper, 10×3 inches. Folia, 66. Lines, 8-11 in a page. Character, Nágara. Date, Samvat 1832, S'aka 1697. Appearance, old. Prose Correct Complete.

A guide to the performance of certain Vedic rites, such as Pavamána, by Tipya Bhaṭṭa, surnamed Gahvara, son of Rámabhaṭṭa and grandson of Balambhaṭṭa. It is based chiefly on the aphorisms of A'svaláyana, and ought to have been placed among Vedic works on the same subject.

Beginning ॥ श्रीसरस्वत्यै नमः ॥ नत्वा गणपतिं देवं मातरं पितरं तथा । आश्वलायनमाचार्य्यं शौनकादिमुनीस्तथा ॥ १ ॥ बालंभट्टस्य पौत्रेण रामभट्टस्य सूनुना । गह्वरेत्युपनाम्ना वै तिप्याभट्टेन धीमता ॥ २ ॥ प्रयोगो दीपको नाम क्रियते शिष्टतुष्टये । विद्यंते विविधा ग्रंथा श्रौतस्मार्त्तप्रबोधकाः ॥ ३ ॥ सूत्रतद्वृत्तिभाष्यादितद्व्याख्याकारिकादयः । क्वचित् प्रयोग एवास्ति क्वचिन्निर्णय एव हि ॥ ४ ॥ प्रयोगकर्त्तॄणां च द्वाभ्यामेव हि शोभनम् । तदर्थं क्रियते यथा बुध्यनुसारतः ॥ ५ ॥ इतिभाष्यानुसारेण सर्व्वं संगृह्य लिख्यते । प्रथमेऽध्याये दर्शपूर्णमासौ आधानौ विध्यंतस्य विहितौ ॥ ॥ अथेदानीं द्वितीयाध्याये पवमानेष्ट्यादिचातुर्मास्यांता या इष्टयः ता उच्यंते ॥

**End.** चातुर्मास्येषु पशुकरणाशक्तौ सवनेष्टिर्बौधायनेन विहिता । तदाह स्मृतिः । समाप्य चातुर्मास्यानि सोमेन पशुनाथवा । यजेत कुर्य्यादेतानि चातुर्मास्यानि वा पुनः ॥ १ ॥ सवनेष्टिमशक्तश्चेत् कुर्य्याद्बौधायनोदिताम् । अग्निरिन्द्रस्तथाविश्वेदेवा इत्यत्र दैवताः ॥ १ ॥ आद्यं याज्यानुवाक्यास्तु प्रकृत्यामयणोदिताः । अवदानादिकं संस्थाजपान्तं पौर्णमासवत् ॥ २ ॥

**Colophon.** इत्याश्वलायनश्रौतसूत्रे श्रीमत् शङ्करोपनामक रामभट्टात्मज तिप्पूभट्टेन-विरचितायां संग्रहदीपिकायां द्वितीयोऽध्यायः समाप्तः (प्तः?) ॥ ॥ संवत् १८२१ ॥ शके १६८० मिति श्रावणकृष्ण ९ भृगुवासरे पराभव नाम संवत्सरे काश्यां विश्वेश्वरसंनिधौ शङ्करोपनामकरामभट्टसुततिप्पूभट्टेन लिखितमिदं पुस्तकं समाप्तमगमत् । छ । करकृतमपराधं चंतुमर्हंति संतः । छ । भग्नपृष्ठकटिग्रीवोबद्धमुष्टिरधोमुखः । कष्टेन लिखितं ग्रंथं यत्नेन प्रतिपालयेत् ॥ १ ॥ तैलाद्रक्षेज्जलाद्रक्षेद्रक्षेच्छिथिलबंधनात् । मूर्खहस्ते न दातव्यमेवं वदति पुस्तकम् ॥ २ ॥ अर्जितं भूरि कष्टेन लिखितं पुस्तकं मया । हर्त्तुमिच्छति यः पापी तस्य वंशक्षयो भवेत् ॥ ३ ॥ छ ॥ छ ॥ छ ॥ छ ॥ छ ॥ ॥ श्रीचंद्रलापरमेश्वरी सहाय ॥ छ ॥ श्रीवंकटेश ॥ ॥ छ ॥

विवरणम् । श्रीतिप्पूभट्टविरचितः पवमानादिकतिपयेष्ट्यनुष्ठानपद्धतिरूपो निबन्धविशेषः । पुस्तकस्यास्य वैदिकपुस्तकेष्वेवान्तर्भाव उचितः ।

---

No. 229. अधिकरणकौमुदी । Adhikarana Kaumudi. Substance, country-made yellow paper, 18×3 inches. Folia, 55 (of which fol. 1 is wanting). Lines, 6-7 in a page, having a blank space of about half an inch square in the middle. Character, Bengali. Date, ? Appearance, very old. Prose. Generally correct. Complete (except the 1st folium).

A work, entitled Adhikarana Kaumudí, treating of the Adhikaraṇas, or some especial topics of discussion on rules laid down in regard to the performance of religious observances. Anonymous.

**Beginning** ( नास्ति ) ।

**End.** किञ्च पवित्रपोस्थयं विष्णोर्मनसापूतेस्थ इति मन्त्रकर्त्तव्यं नच नादौ विहितं किन्त्वंधेनमम इवेति ननु पवित्रे कुरुते इति द्विवचनानुपपत्तिः पवित्रपदस्य दखद्वयसाधकत्वात् नानार्थत्वकल्पने मानाभावात् नैवं मन्त्र-

पाठकरणकच्छेदान्मन्त्रपाठकाले छेदाभावेन पवित्रत्वानिष्पत्तेरिति पवित्रपदं तदावश्यक(तदवश्यक?) इत्यपरं एवं पवित्रेस्थो वैष्णव्यौरिति मन्त्रेपि विष्णोर्मनसापुते(पूते?)स्थ इत्येतत्पाठकाले पवित्रपदवाच्यत्वेपि तत्र विशेषभावाभ्ययेन्यथार्थपूर्व्वमन्त्रस्य पवित्रे इति पदमनुषज्यते (षज्यते?) तस्य च दलपरत्वेनोक्तानाष्टकं तत्र दलमात्रपरं अत्र दलद्वयपरं भवितुमर्हति तदाष्टब्यापत्तेः ॥ नन्वनुषङ्ग अनुषङ्गि तत्पदस्यात्र पदान्तरसमभिव्याहारो(हारे?) तात्पर्य्यं अहत्तौ (आहत्तौ?) तु तादृशपदान्तरकल्पनं तथाच पवित्रौ कुरुते इत्यनेन दलद्वयविषयकछतिर्विहिता तत्र कि (किं?) क्रियानुकूलाछतिरित्यत्राह छिनत्तीति सर्व्वं समञ्जसं ॥

Colophon इत्यधिकरणकौमुदी समाप्ता ॥ ० ॥ ० ॥

विवरणम् । अधिकरणकौमुदी नाम कश्चिद्विविधाधिकरणविचारविषयकोनिबन्धविशेषः ॥

---

**No 230.** अशौचनिर्णयसंग्रहः । Aśaucha-nirnaya Saṅgrahah. Substance, country-made white paper, $10 \times 4\frac{1}{2}$ inches. Folia, 37. Lines, 4–7 in a page. Character, Nágara. Date, ? Appearance, very old, and slightly worm-eaten throughout. Prose. Generally correct. Complete.

A work treating of Aśauchas or impurities caused by the birth or death of a Sapinda or other relatives. Anonymous.

Beginning. श्रीगणेशाय नमः ॥ श्रीवीरेश्वराय नमः ॥ अथाशौचं निरूप्यते । तत्र प्रथमतोगर्भनाशजननाद्यशौचम् ॥ तत्र पराशरः आचतुर्थाद्भवेत्स्रावः पातः पंचमषष्ठयोः अत ऊर्द्ध्वं प्रसूतिः स्यादिति तत्र स्रावे । आद्यमासत्रये मातुस्त्रिरात्रमशौचं ॥ तदुपरि आषष्ठं मासममसंख्यदिनं संपिंडानां तु गर्भग्रहणप्रभृति मासचतुष्टयपर्य्यंतं गर्भनाशे स्नानमात्रेण शुद्धिः । पंचमषष्ठयोस्तु गर्भपाते सपिंडानां त्रिरात्रं । केचित्तु आद्यमासत्रये विप्रे त्रिदिनांते त्रयोदिवसा अधिकाः राजन्ये चतूरात्रं वैश्ये पंचाहं शूद्रे षडाहं चतुर्थादौ तु माससमसंख्यदिनमित्याहुः तद्वैषम्यादयुक्तं सप्तमासप्रभृति तु जनने मातुः सपिंडानांच संपूर्णमाशौचं तत्र विप्रे दशाहं । क्षत्रे द्वादश । वैश्ये पंचदश । शूद्रे मासं । सच्छूद्रे पक्षं ।

End. द्वयोरेव महागुर्व्वोरब्देकमशौचकं नान्येषामधिकाशौचं सजातिविधिनात् किन्त्वेति जातुकर्ण्यात् वर्षांतसपिंडीकरणपक्ष एवैते नियमाः न तु द्वादशाहसपिंडीकरणपक्षे इति केचित् तत्र मूलं चिंत्यं ॥ ॥

Colophon. इत्याशौचनिर्णयसंग्रहः । अनेनाशौचशास्त्रार्थसंग्रहेण कृतेन वै। प्रीयतां भगवान् देवः शिवयासहितः शिवः ॥ १ ॥

विवरणम्। अशौचनिर्णयसंग्रहो नाम विविधजननमरणाशौचनिर्णयविषयकोऽयं निबन्धविशेषः ।

---

No. 231. अशौचनिर्णयः । Aśaucha-nirṇayaḥ. Substance, country-made white paper, 10×3½ inches. Folia, 4. Lines, 6–13 in a page. Character, Nágara. Date, ? Appearance, very old. Prose. Correct. Incomplete.

A work treating of the same subject under the name of Aśaucha-nirṇaya. Anonymous.

Beginning. श्रीगणेशाय नमः ॥ पराशरः । आचतुर्थाद्भवेत्स्रावः पातः पंचमषष्ठयोः । अत ऊर्द्धं प्रसूतिः स्यादिति मच स्रावे आद्यमासत्रये मातुस्त्रिरात्रमाशौचं । उपरि आषष्ठात् मासममसंख्यादिनमाशौचं चतुर्थे चत्वारि पंचमे पंच षष्ठे षड्भिरित्यर्थः । सपिण्डानां स्नानमात्रेण शुद्धिः स्रावे । पाते तु त्रिरात्रं ।

End. नास्ति ।

Colophon. नास्ति ।

विवरणम् । अशौचनिर्णयो नाम पूर्ववदशौचनिर्णयविषयकोनिबन्धविशेषः असम्पूर्णः ।

---

No. 232. अशौचनिर्णयः । Aśaucha-nirṇayaḥ. Substance, foolscap paper, 12×3¼ inches. Folia, 30. Lines, 5–8 in a page. Character, Bengali. Date, ? Appearance, fresh. Prose. Not correct. Complete.

Another work of the same name and on the same subject, but written by a different person, Gopála Nyáya-panchánana.

Beginning. नमो भगवते वासुदेवाय॥ नत्वा नीलोत्पलश्यामं रामं राजीवलोचनं । न्यायपञ्चाननो विद्वान् कुरुतेऽशौचनिर्णयम् ॥ अथ निर्गुणाशौचनिर्णयः ॥ अशौचन्तु विहितकर्म्माधिकारविरोध्यदृष्टविशेषः ॥ यथा सूतके कर्म्मणां त्यागः सन्ध्यादीनां विधीयते इति कात्यायनीयात् । अघानां यौगपद्ये तु क्रियाशुद्धिर्गरीयसा ॥ अत पापपर्य्यायाघपदस्याशौचवाचकत्वदर्शनात् । रात्र्युत्पन्नाशौचे पूर्वंदिनं ग्राह्यं । यथा रात्रावेव समुत्पन्ने मृते रजसि सूतके । पूर्व्वमेव दिनं ग्राह्यं यावन्नैवोदितो रविरिति काश्यपीयात् ॥

End — अन्यपूर्वा, गृहे यस्य भार्य्या स्यात्तस्य नित्यशः । अशौचं सर्वकार्य्येषु देहे भवति सर्वदा ॥ दानं प्रतिग्रहः स्नानं सर्वं तस्य वृथा भवेत् । अन्यपूर्वा पूर्व्वमन्येन परिणीता उपभुक्ता वा सजातीयेनोपभुज्यते सोक्ता ॥ यावज्जीवाशौचं परपूर्वावधारणजन्यं तत्प्रसवमरणयोस्त्वघाशौचं परं । सर्वसाधारणं न तु प्रतिग्रहस्तुतेर्ब्राह्मणविषयमिति । उक्तवचने यश्चेतिपदश्रवणात् ॥ व्यवस्थोपयिकं ग्रन्थे वचनं लिखितं मया ततोऽन्यूनाधिकं भाव्यं सगुणैस्त्यक्तनिर्गुणैः ॥ ० ॥ ० ॥ श्री ॥ ० ॥

Colophon. — इति श्रीगोपालन्यायपञ्चाननविरचिताशौचनिर्णयः समाप्तः ॥ श्रीकृष्णचैतन्यचन्द्राय नमः ॥ ० ॥ भग्नपृष्ठकटिग्रीवस्तब्धदृष्टिरधोमुखः यत्नेन लिखितं ग्रन्थं पुत्रवत्पालयेत् सदा ॥ ० ॥ श्री ॥ ० ॥ ० ॥ श्रीकृष्णाय नमः ॥ ० ॥ श्रीहरिः ॥

विवरणम् । पूर्ववदशौचनिर्णयविषयकोऽयं निबन्धः ।

---

No. 233. अशौचनिर्णयः । Aśaucha-nirṇayaḥ. Substance, country-made yellow paper, 25 × 6 inches. Folia, 16. Lines, 11-12 in a page. Character, Bengali. Date, ? Appearance, very old, worn out, and slightly torn Prose. Generally correct. Complete.

Another copy of the above-mentioned work.

विवरणमुक्तपूर्वम् ।

---

No. 234. अशौचसंग्रहव्याख्या । Aśaucha-saṅgraha Vyákhyá. Substance, country-made white paper, 10 × 5 inches. Folia, 7. Lines, 10-11 in a page. Character, Nágara. Date, ? Appearance, very old, worn out, thoroughly worm-eaten, and writing effaced in parts. Prose. Not correct. Incomplete.

A gloss on the Aśaucha-saṅgraha. Anonymous.

Beginning. — श्रीगणेशाय नमः ॥ षण्मासाभ्यन्तरेषु + + + स्यनिश्चिते गर्भस्रावे तन्मासममसंख्या + + + दिनमशुचिः स्नानशुद्धाः सपिण्डाः + + + दिनमशुचयोऽतःपरं स्वतिवत्स्याचातुर्वर्ण्यस्य तुल्य + + + + + प्रोच्यते शौचमाचम् ॥ १ ॥ नत्वा गणेश्वरं देवं शारदां गुरुमात्मनः । अशौचसंग्रहविंशच्छ्लोकयाः व्याख्यां करोम्यहम् ॥ १ ॥ तत्र स्मार्त्तं + + + समुग्रंथ श्लोकप्रसिद्धक्रममनुसरणार्थं विपत्तिनिमित्ताशौचक्रमेण आशौचं प्रतिपादयति षण्मासाभ्यन्तरेष्विति ॥

End. नास्ति ।

Colophon. नास्ति ।

विवरणम् । अशौचसंपाताभिधविधिसङ्कोचकालकम्पविशेषव्याख्यानिरूपणम्

---

No. 235 अशौचव्यवस्था । Aśaucha Vyávasthá. Substance, country-made yellow paper, 20×3½ inches. Folia, 6. Lines 6-7 in a page. Character, Bengali. Date, ? Appearance, very old. Prose. Correct. Complete.

A treatise on the same subject under the name of Aśaucha Vyávasthá by Maheśa.

Beginning. ॐ नमो दुर्गायै । प्रणम्य गोपालपदारविन्दं विलोक्य सर्वादिमतञ्च शास्त्रम् । अशौच (व्य?)वस्थाविधानहेतुं ग्रन्थं महेशो वितनोति धीरः ॥ विहितस्य निषिद्धस्य कर्मणो नाशकारकं । अवस्थाभेदतः सर्वैः पण्डितैः प्रविविच्यताम् ॥ ब्राह्मणक्षत्रियविट्शूद्राणां जनने मरणेऽथवा दशद्वादशपक्षाहैः शुद्धिः शूद्रस्य मासतः ॥ गर्भमासात् पुरुषात् तावत् स्रावतः शुद्धिरीरिता ॥ ततो दशमपर्य्यन्तं पाताशौचं विधीयते । चतुर्दशावधि ततः पक्षिणी स्यादशौचकं । ततःपरं स्नानमात्रं सर्वत्रैष विधिः । देशान्तरस्थे ज्ञातौ जाते चाशौचमध्यके । शेषाहेन विशुद्धिः स्यात् विभिन्नेऽपि च वत्सरं ॥ ततःपरं स्नानमात्रं पित्रोरेकाहमिष्यते । नाशौचं सूतकस्यास्ति व्रतोत्सवेषु दिनेष्वपि । मातामहस्य मरणे त्रिरात्रं स्यादशौचकं मातामह्यामपि तथा पक्षिणी कश्यपेनोक्ते स्यात्तु के मातृवैमात्रे एकरात्रमुदाहृतम् । मातुले मातुलान्याञ्च भगिन्यां तत्सुते तथा । मातृष्वसरि तत्सुते पितृष्वसरि तत्सुते । दौहित्रे पक्षिणीं रात्रिं तथा मातुलपुत्रके । स्वगृहे संस्थितानाञ्च त्रिरात्रं स्यादशौचकं । मातृबन्धौ पितृबन्धौ पक्षिणी स्यादशौचकं । त्रिरात्रमसपिण्डेषु स्वगृहे संस्थितेषु च । पित्रोश्च मरणेऽशौचं त्रिरात्रमेकरात्रकं । ऊढानूढस्वकन्यानाम् इत्याह भगवान् मनुः । उपाध्याये चैकरात्रं सहाध्याये मृते तथा गुरुपत्न्यां पक्षिणी स्यात् त्रिरात्रमुपदेष्टरि । गुरुपुत्रे चैकरात्रं श्वशुरयोरन्यत्र संस्थितौ । एकग्रामे पक्षिणी स्यात् स्वगृहे च त्रिरात्रिकं पूर्व्वाशौचमिदं प्रोक्तं व्याधिभिर्मरणं यदि ॥

End. पुत्रपौत्रप्रपौत्राश्च क्रमात् पिण्डाधिकारिणः । तदभावे च पत्नी स्यात् सुसुता पुत्रिणी ततः । ऊढानूढा स्वकन्या स्यात् तदभावे तु तत्सुतः

कनिष्ठभ्राता ज्येष्ठश्च वैमात्रेयस्तथाविधः । भ्रातृपुत्रस्तथाज्ञया भ्रातृवत् क्रम-
योगतः । तदभावे च पितरौ तदभावे वधूः स्मृता । तदभावे सपिण्डाः स्यात्
समानोदकगोत्रजाः । तेषामभावे तेषान्तु सन्ततिर्मातुलस्तथा भागिनेयस्त-
तोऽन्येयो मातामहकुलस्तथा । श्वशुरस्तदभावे स्यात् जामाता च ततःपरं
शिष्यर्त्विगाचार्य्यमित्रपितृमैत्रैकवासिनः । उदासीनब्राह्मणाय क्रमेणैवा-
धिकारिणः ॥ स्त्रिया दौहित्रपर्य्यन्ताभावे सपत्नीपुत्रः । तदभावे पतिः
पुत्रवधूज्ञातिसगोत्रजाः । भाग्निध्यक्रमतो ज्ञेयः पिता माता सहोदरः ।
भगिनी तत्सुतो भर्त्तृभागिनेयश्च भ्रातृजः । जामाता श्वश्रूभ्राता च
भर्त्तृशिष्ये तथैव च । पितृवंशमातृवंशद्विजाद्यैवाधिकारिणः ॥ ना
शुचिं न जपन्तश्च कुर्वाणं दैवपैतृकं । भुञ्जानं तैलाभ्यक्तं स्नान्तं
नैवाभिवादयेत् ॥ जलहस्तं पुष्पपाणिं स्वयञ्चैव तथाविधः ॥ सर्व्वा एव
नमस्कुर्य्युः सर्व्वावस्थां गतेष्वपि ॥ न च खातोदकं गावो महिषश्चाज-
योनयः ॥ दशाहेन विशुध्यन्ति सर्व्वासु च नवोदकं ॥ त्र्यहेन शुध्येत्-
स्पर्शेन शुद्धं मेघोदकं पुनः । स्नानमाचमनं दानं देवता पितृतर्पणं ।
शूद्रोदकैर्न कुर्व्वीत तथा मेघादिनिःसृतैः ॥ श्रावणे मासि भाद्रे च सर्वा-
नद्यो रजस्वलाः । तासु स्नानं न कुर्व्वीत गङ्गास्नानं सदैव हि ॥ अभावे
कूपवापीनां न दुष्टं दूरवाहिनां । अम्भसा हेमरूप्यादि कांस्यं शुध्यति
भस्मजे । अश्मताम्रश्च रौप्यस्य प्रस्तरं केवलैर्जलैः । वीथि देशाः पवित्राणि
ब्राह्मणानामकल्पयन् । अदृष्टमद्भिर्निक्तश्च यच्च वाचा प्रशस्यते ॥ ० ॥ ०॥

Colophon. इत्यशौचव्यवस्था ॥ ० ॥ ० ॥ ० ॥ ० ॥

विवरणम् । अशौचव्यवस्था नाम कश्चिन्निबन्धःअत्र जननमरणाद्यशौचानि विवेचितानि,
द्रव्यशुद्धिरप्यभिहिता ।

---

No. 236. अशौचनिर्णयः । Aśaucha-nirṇayah. Substance, country-made colourless paper, 10 × 4 inches. Folia, 10. Lines, 9–10 in a page. Character, Nágara Date, ? Appearance, very old, worn out, worm-eaten throughout, and the writing spoiled. Prose. Generally correct Complete.

A work, treating of the same subject under the name of Aśaucha-nirnaya, by Kauśikáditya. As the work is complete in about 86 verses, it is called *Shadaśíti* Aśaucha Nirṇaya. It has also a short explanation in the Punjabi language under each verse of the text.

**Beginning.** श्रीगणेशाय नमः ॥ अनेक ऋषिवाक्यानि संगत्यादाय केवलं ॥ संस्कृ कौशिकादित्यो लिखेदाशौचनिर्णयं ॥ १ ॥ टीक् ॥ कौशिकादित्य वंब ऋषीश्वरनु ॥ ऋषिवाक्यगळसंग्रहिसि आशौच प्रकरण बनु ॥ आशौच (चं) द्विविधा(धं) प्रोक्तं जातकं मृतकं तथा ॥ अस्पं चैवाधिकं चेति तत्पुन-र्द्विविधं स्मृतं ॥ २ ॥ टीक् जातकवु । मृतकवु । अदरल्लि अल्पसूतका-धिकसूतक । जातकसूतकवु द्विविध मृतसूतकवु द्विविध ॥

**End.** अयानभोजना ये च ये च होमविवर्जिताः ॥ नास्तिकाः किं भविष्यन्ति तेषां भस्मांतसूतकं ॥ ७९ ॥ टीक ॥ स्नानविल्लदे भोजन मा+दव-रिगे । औपासन विल्लदा वरिगे मातृपितृगुरुदेवताभजन विल्लदवरिगे यजरिगे भस्मांतवु सूतकवु ॥ ब ॥ अयात्मा चापि कृत्वा च अदत्वा यस्तु भुंजति ॥ एवं विधस्य विप्रस्य भस्मांतं सूतकं भवेत् ॥ ८० ॥ टीक् ॥ स्नान-विल्लदे, जपविल्लदे अंनवुभिच इक्कदे दायातनुभुंजि उसानो अभाग्यदे-भस्मांतसूतक ॥ ब ॥ विषमस्थस्य चित्तस्य पराधीनस्य नित्यशः ॥ भक्ति-श्रद्धाविहीनस्य भस्मांतं सूतकं भवेत् ॥ ८१ ॥ षडशीतिपरपंथं तावच्छ्लोक निबंधनात् कौशिकादित्यवचनात्(?) कौशिकादित्यमेव च ॥ ८२ ॥

**Colophon.** इति षडशीतौ सूतकनिर्णयः चतुर्वर्णानां जातीनां सूतकनिर्णयः ॥

विवरणम् । कौशिकादित्यविरचितः आशौचनिर्णयो नाम कश्चिन्निबन्धविशेषः। षडशीति-श्लोकपूर्णत्वादयं षडशीत्याशौचनिर्णय इति नाम्नाऽपि प्रसिद्धः, संक्षिप्तकर्णाटभाषाव्या-ख्यानसहितश्च ।

---

No. 237. आपस्तंबाग्निहोत्रहोमः । *Ápastambágnihotra-homaḥ.* Substance, country-made white paper, 10×4½ inches. Folia, 14. Lines, 11 in a page. Character, Nágara. Date, ? Appearance, very old. Prose. Generally correct. Complete.

A guide to the performance of the Agnihotra rite, according to the precepts of *Ápastamba,* by *Kuva Sukla Díkshita.* A Vedic work.

**Beginning.** श्रीगणेशाय नमः ॥ श्रीमत्भट्टोजीदीक्षितकृत आह्निके प्रथमहोमवि-धिः ॥ तत्र दृष्टः ॥ संध्याकर्मावसाने तु स्वयं होमोविधीयते ॥ अमतं प्रति च रवात्र । ऋत्विक् पुत्रोगुरुर्भ्राता भागिनेयोथ विट्पतिः ॥ एतैरपि कृतं यत्स्यात् तद्धुतं स्वयमेवतु । विट्पतिर्जामाता । कात्यायनः । अथ-

मर्थंतु दंपत्योर्वैतयं नलिंगादिना । द्वयोरथसमर्थंतु भवेद्भूतमवं-चैकं । उभयोः संनिधानं मुख्यं । एकतरसन्निधानं त्वनुकल्पः । प्रातर्हो-मस्य कालमाह । मनुः । उदितेऽनुदिते चैव समयाध्युषिते तथेति । सायं होममाह कात्यायनः । यावत् सम्यङ्न भाव्यन्ते नभस्यृक्षाणि सर्वतः । लौहित्यलंच नापैति तावत्सायंतु श्रूयते । उभयत्र गौणकालमाह का-त्यायनः ॥ संगवांतः प्रातः प्रदोषांतः सायमिति ॥

End. तथैव द्वितीयायां प्रातरारभ्य पर्व्वप्रातः पर्य्यंतं पूर्ववत् । यदि दैवात् संभ-वति तदारभ्य शेषहोमान् कुर्यात् । एवं पक्षहोममपि छत्वाग्निं संदध्यात् । छतेपि पक्षहोमे उदयास्तमये होमकाले वा उभयोः संनिधानमावश्यकं । अन्यतरं संनिधानं वा । असंनिधानेऽग्निः लौकिकः संपद्यते । ह ।

Colophon. इति श्रीत्रयदीक्षितानां छतिः आपस्तंबाग्निहोत्रहोमः समाप्ति-गमत् ॥

विवरणम् । आपस्तम्बदीक्षितविरचितापस्तंबमतानुगताग्निहोत्रानुष्ठानपद्धतिरूपोनि-बन्धविशेषः । वैदिकनिबन्धोऽयम् ।

---

No. 238. आपस्तंबश्रौतपद्धतिः । Apastamba S'rauta-paddhatih. Substance, country-made white paper, 12×4 inches. Folia, 171. Lines, 6–10 in a page. Character, Nágara. Date, Samvat 1801. Appearance, very old, worn out, and worm-eaten throughout. Prose. Generally correct. Complete.

A guide to the performance of some Vedic rites, beginning with the Darśapaurnamása to the Agnichayana ceremony. The work is chiefly based on Dhúrta Swámin's explanation of Ápastamba's Sútra by Traividyábriddha Sómapá.

Beginning. श्रीगणेशाय नमः । सद्गुरुभ्यो नमः । गंगाप्रवाहपरिपूतजटाकलापं कौतूहलीन्द्रचकितेंदुसुधिः प्रभाति । प्रज्वालितस्फुरितमदनकलेवरंच-प्रच्छिन्नकालविषकंठहरं नमामि । आपस्तंबीयसूत्रस्य धूर्त्तस्वामिव्याख्या-नुसारेण शाखांतरसिद्धानपेक्षितानविरुद्धानप्युपसंहृत्य दर्शपूर्णमासमार-भ्याग्निचयनपर्य्यन्तानां कर्म्मणां प्रयोगपद्धतिः क्रियते ॥ सोमांगानि नित्या-न्यफलार्थिनापि कर्त्तव्यानि । नैयमिकं होतद्गुणसंस्तुतमिति वसिष्ठवच-नात् सर्व्वांगोपसंहारे असमर्थस्यापि कर्त्तव्यानि । अंधपङ्ग्वादीनां नित्य-

णिरेव। केचित् तेषामपि कर्त्तव्यानीति। श्रोत्रियस्य कृतदारस्य कर्त्तव्यानि अनधीतस्यापि चाथोदर्शपूर्णमासशब्दौ कालविशेषयोर्वाचिनौ तयोः कालविशेषयोराग्नेयादयः क्रियंते। तथयथा कर्म्मणि प्रवृत्तिः। काले मुख्यः कर्म्मणि लक्षयेति सूत्रकाराणां मतम्।

End. यदि प्रधानाकृतावंगाकृतौ वा कृतायां कर्म्योपभूमौदक्षिणां दिशं गच्छेदाप्तो वा प्रमुच्यमावेष्टयेत् तथापि मरणं यजमानस्य विजानीयात्। सर्व्वप्रायश्चित्ते कृते पश्चाच्च म्रियते भूर्भुवःस्वरित्याहवनीये स्वाहाप्रवेषु सर्वप्रायश्चित्तं जैमिनीनां ब्राह्मण उक्तं।

Colophon. एषा मैथिलभट्टेन मालहट्टनिवासिना। सोमपेन कृता वृत्तिः प्रयोगस्य प्रदीपिका॥। तत्र श्लोकः उदस्ततिष्ठ इत्यादौ द्विपदास्वेव नोद्यते उच्छागतिष्ठ इत्यादौ द्विपदास्वेव नोद्यते। गर्भछिन्ने तथाछिन्ने प्रायश्चित्तं विधीयते॥ अनूद्धं नवमं प्रयोक्तव्यं न संशयः। उद्धृत्य चैव दामानि धाता सूर्य्याकृतिद्वयं॥ अग्नस्फोटयुतं निष्कं द्विगते द्वादशे प्रेषः। चतुःसंख्यातिरिक्तं स्यादुद्दिलेपयेवं तथैव च। शाटिना वेष्टनं कृत्वा स्फोटकादौ विधीयते। द्वितीये तु चकोऽयंतु तृतीयेऽपि तथैव च। अपिधाय च व्यावर्त्तयति गर्भकं। मंत्राष्टतिर्द्वितीयादौ मौते पक्तिपुटच्छिदिं। वह्निक्षेति क्रमेणैव गर्भकर्षणमेव च। निष्टप्य हृदयं शूले कृत्वा शूलान्तरे तथा। निर्हृत्य गर्भं शूले च संधयित्वा पचेत् तथा। एकादशपशोस्तथा। गर्भस्थैकं कपालानि प्रयुज्य प्रोक्ष्य निर्वपेत्॥ पशोर्निरूप्य गर्भस्य स्नपयित्वा पशोर्यजिः। गर्भार्थांच पुरोडाशं तेनैव च यजेत्तथा। दैवतानि पशोः कृत्वा पुजां नाम्नां पुराशिशोः। मंत्रेण दैवते चिप्ता तूष्णीमुत्तरमुत्तरौ। अवदानं तत्र स्विष्टार्था पशोरनवदाय च। शिरोऽंसाः परा छित्त्वा शिष्टैः सह निधाय च॥ कृत्वा तथाप्येवं गार्भस्य सममेव च। दैवतादिषु मंक्षिप्य सर्वां कृत्वा पशोरंतिः॥ नाडीष्वेकपदीहोमः स्फोटयुतस्य कांचनं अध्वर्य्यवे तथा दत्त्वा शिरोदक्षिणपादकं। छित्वा मंत्रेणानेन गर्भकः। सस्तौ यस्य मंत्रेण गर्भशेषं तथैव च पुरोडाशस्य शेषंच भस्मनोपसमूह्य च। एतं युवानं मंत्रेण वानस्पत्यादि पाद्यकं॥ यूपे निरूढे प्राप्ते च यस्मिन् यस्य पशोः क्रिया। तत्र स्नात्वा उपास्यश्रीमश्वेभ्यच यथाविधि। समाप्तं प्रायश्चित्तं॥ श्रीलक्ष्मीनारायणार्पणमस्तु। संवत् १८०१ मार्गशीर्षवदि सप्तमी भृगुवासरे स्वार्थं परोपकारार्थं लिखितोऽयं ग्रंथः। यादृशं पुस्तकं दृष्टा (दृष्टं ?) तादृशं

लिखितं मया यदिशुद्धमशुद्धं वा मम दोषो न विद्यते ॥ पंचे स्वरव्यंजन-
रेफबिंदुमात्राविहीनं लिखितं मया यत् ॥

विवरणम् । आपस्तम्बसूत्रानुगतदर्शपौर्णमासादियागानुष्ठानपद्धतिरूपोऽयं निबन्धस्तात्र
ह्मणनिवासिसोमपर्वविद्वद्भिर्विरचितः ।

---

**No. 239. संस्कारकौमुदी ।** Sañskárakaumudí. Substance, country-made white paper, $9\frac{1}{2} \times 3\frac{1}{2}$ inches. Folia, 46. Lines, 9 in a page. Character, Nágara. Date, ? Appearance, very old, and worn out. Prose. Generally correct. Complete (as regards the first part only.)

A work treating of Sañskáras or purifying ceremonies, under the name of Sañskára Kaumudí, by Giribhaṭṭa, son of Ballambhaṭṭa. The codex contains only the first part of the work.

**Beginning.** श्रीगणेशाय नमः ॥ प्रणम्य दक्षिणामूर्त्तिमंबां च भुवनेश्वरीं । श्रवणा-
कर्म्मप्रभृतिसंस्कारान् व्याकरोत्ययं ॥ १ ॥ गर्भाधानादिविवाहांतान्संमिति-
कानुपाकर्म्मोत्सर्जने च वार्षिके इत्येवमष्टादशसंस्कारानुक्त्वा सूत्रोक्तक्रमेण
श्रवणाकर्म्मसर्पबल्याश्वयुज्या प्रयणप्रत्यवरोहणाष्टकामाध्यावर्षमासिकश्राद्धका
म्यश्राद्धानि निरूप्यंते ॥ एते च नित्याः काम्याश्च ।

**End.** चविर्यश्चेप्यशक्तस्य लुप्तस्यैकमादिनः ॥ प्राजापत्येन मध्येन पाकसंस्था-
सुचैव होति ॥ एतदनुक्तप्रायश्चित्तानां श्रवणाकर्म्म सर्पबल्याश्वयुजीकर्मा-
प्रयणप्रत्यवरोहणानां प्रायश्चित्तमिति मन्तव्यं ॥ चाष्टकाश्राद्धेषु तथोक्तमेव
प्रायश्चित्तं कर्त्तव्यमिति ॥ ॥ दक्षिणस्य प्रसादेन यज्ञं भट्टात्मजः सुधीः ॥
गिरिभट्टोकरोत्पाकयज्ञकांडं मनोरमं ॥ ॥

**Colophon.** इति यज्ञं भट्टात्मज'गिरिभट्टकृतायां(?) संस्कारकौमुदी समाप्ता ॥ ॥
श्रीरस्तु ॥ च ॥

विवरणम् । संस्कारकौमुदी नाम श्रवणादिसंस्कारकर्म्मप्रयोगनिबन्धः श्रीयज्ञं भट्टविर-
चितः ।

---

**No 240. संस्कारकौमुदी ।** Sañskárakaumudí. Substance, country-made white paper, $10 \times 5$ inches. Folia, 25. Lines, 12-15 in a page. Character, Nágara. Date, ? Appearance, very old, and slightly worm-eaten throughout. Prose. Generally correct. Incomplete.

The second part of the work noticed last. The part is not complete.

**Beginning.** श्रीशिवाय नमः॥ अथ गर्भलंभनं। तत्रेदं गृह्यं। उपनिषदि गर्भलंभनं पुंसवनमनवलोभनं चेति। यज्ञोपनिषदि यौषि कर्म्माणि आम्नातानि। तदुक्तप्रकारेण तानि कुर्य्यादित्यर्थः। गर्भोलभ्यते येन कर्म्मणा निषिक्तं वीर्य्यममोघं भवति तद्गर्भलंभनं। पुमान् येन प्रसूयते तत् पुंसवनं॥ पुमांश्च अन्येन नावलुम्पते न भवति। तदनवलोभनं॥ यथविकार आर्षः। एतस्यार्थमाह भगवान्। गर्भलंभः पुंसवनं गर्भस्यानवलोभनं इति कर्म्मचयमिदं यज्ञोपनिषदीरितं। तामधीतवतः कर्म्मचयं तत्रैव सुप्रदम्। निषिक्तो यत्प्रयोगेण गर्भः सधार्य्यते स्त्रिया। तद्गर्भलंभनं नाम कर्म्म प्रोक्तं मनीषिभिः॥ पुमान् प्रसूयते येन तत् पुंसवनमीरितं। न लुप्येत सर्वेण तत्कर्म्मानवलोभनमिति। तामुपनिषदमनधीतवतोऽप्यस्मानार्थस्योत्तरं कर्म्म वक्ष्यति। यदि नाधीयात् तृतीये गर्भमासे इति एवं वदता आचार्य्येण कैवल्योपगमनेन गर्भलंभनं प्रतिपादितमिति वदंति॥ अन्ये तु शौनकाद्युक्तमार्गेण कार्य्यमित्याहुः॥ तथा च शौनकः॥ शुक्ले चाश्वगंधाया मूलं पिष्ट्वाथ तत्पुनः। कृत्वा नवांवरच्छन्नं परिस्रुत्याप्रपाणिना। उदीर्ध्वांतः पतिवतीत्यायामचमुदीर्य्य तु। जायाया दक्षिणे नासारन्ध्रे सिंचेत्तु तद्रसम्॥ उदरे स्वे रसे तस्मिन्नाचांतसलिलां सतीं। उपगच्छेदमूमेवं गर्भलंभनमूचिरे इति।

आश्वलायनः। आनयित्वाश्वगंधाया मूलमालोच्य हृच्छवत्। आर्षमेण तु सूत्रेण घृतमूलेन वा नयेत्। कपिलापयसा मिश्रं कांस्यपात्रगतं शुभं। दक्षिणस्यां नासिकायां सिंचेन्मंत्रेण तत्पतिः। तत्रांत ऋगुदीर्ष्वेति सिक्तास्मिन्नुदरं गते। तां पूषन्निति मंत्रेण तामुपेयाद्यथाविधिरिति(?)। ऋग्विधाने तु। निक्षुर्नेजयेत् स्त्रीं योनिं स्पृष्ट्वा त्रिभिर्त्रतो। गर्भाधानं ततः कुर्य्यात्सपुत्रो वै प्रजायते इति। त्रिभिरङ्गुलीभिरित्यर्थः।

**End.** ( नास्ति )।

**Colophon.** ( नास्ति )। *

विवरणम्। पूर्व्वोल्लिखितस्य निबन्धस्य गर्भाधानादिसंस्कारानुष्ठानपद्धतिरूपो द्वितीयो-भागोऽसम्पूर्णः। पुस्तकेऽस्मिन् गर्भलम्भनादारभ्यनिष्क्रमणान्तानां संस्कारकर्म्मणामुल्लेखोवर्त्तते।

---

* The codex being incomplete, has no regular colophon at the end. But at the end of each Saṅskára, there is a concluding line, a specimen of which is given below. "इति श्रीपरमं भट्ट स्वतगिरिभट्टकृतायां संस्कारकौमुद्यां पुंसवनानवलोभनप्रकरणम्"।

**No. 241.** संस्कारतत्त्वम् । Sañskáratattwam. Substance, country-made white paper, 18×4 inches. Folia, 82. Lines, 4-6 in a page. Character, Nágara. Date, ? Appearance, very old. Prose. Generally correct. Complete.

A work treating of the same subject under the name of Sañskáratattwa by Raghunandana of the Bengal School. It is a part of his Smrititattwa series.

Beginning. ॥ नमो गणपतये ॥ प्रणम्य सच्चिदानन्दं श्रीकृष्णं भुक्तिमुक्तिदं । संस्कारतत्त्वं ॥ तत् प्रीत्यै वक्ति श्रीरघुनन्दनः ॥ अथ संस्काराः तत्र हारीतः गर्भाधानवदुपेतो ब्रह्मगर्भं सन्दधाति पुंसवनात् पुंसीकरोति फलस्थापनात् मातृपितृजं पाप्मानमपोहति रेतोरक्तगर्भोपघातः पंचगुणोजातकर्म्मणा प्रथममपोहति नामकरणेन द्वितीयं प्राशनेन तृतीयं चूड़ाकरणेन चतुर्थं स्नानेन पंचमं एतैरष्टभिः संस्कारैर्गर्भोपघातात्पूतोभवतीति । गर्भाधानवत् गर्भाधानविधिना विष्णुर्योनिं कल्पयत्वादिना उपेतः स्त्रियमुपगतं ब्रह्मगर्भं सन्दधातीति ब्रह्मवेदस्तदध्ययनयोग्यं गर्भं सन्दधाति संजनयति पुंसीकरोति अव्यक्तलिंगं गर्भं पुमांसं करोति पुमांसं पुत्रं विन्दस्वेति मन्त्रलिङ्गात् फलस्थापनात् फलस्थापनं गर्भसीमन्तोन्नयनात् मातृपितृजं मातापितृद्वाराजातं गर्भस्याशयसंस्कारद्वारैव एते अपत्यसंस्काराः उपघातः पापसंघः पंचगुणः पंचप्रकारः उपपातकजातिभ्रंशकरसंकरीकरणापात्रीकरणमलिनीकरणरूपाय पंचकसंक्रान्त इति स्नानं चात्र समावर्त्तनमिति कल्पतरुः अथ दृष्टान्तमाहांगिराः चित्रकर्म्म यथानेकैरंगैरुन्मील्यते शनैः । ब्राह्मण्यमपि तद्वत्स्यात् संस्कारैर्विधिपूर्व्वकैः ॥ संस्काराणां नित्यत्वात् प्रतिनिधिमप्याह स्मृतिः अष्टौ संस्कारकर्म्माणि गर्भाधानमिव स्वयं । पिता कुर्य्यात् तदन्यो वा तदभावेपि तत्क्रमात् ॥

End. सूर्य्याय कपिलां धेनुं दद्यात् शंखं तथेन्दवे इत्यादिषु चतुर्थी तादर्थ्येन सूर्य्ययागप्रतिष्ठार्थं दक्षिणां धेनुं ऋत्विजे दद्यात् गुड़ौदनादिभोजनमपि तथैव उपस्थितत्वात् एता दक्षिणा भोजितब्राह्मणानामिति स्मृतपाणिव्याख्यानाच्च स्वमंत्रे प्रदातव्याः सर्व्वाः सर्व्वत्र दक्षिणा इति मत्स्यपुराणात् एता दक्षिणा धेन्वादिदक्षिणादाने कपिले सर्व्वदेवानामित्यादितन्मंत्राः पाठ्याः ये च प्रयोगे वक्ष्यन्ते ऋत्विग्भ्य इत्ययुतादिहोमविषयं अल्पहोमे एकावेकोऽपि ऋत्विक् अत एव गुरुर्व्वा येन तुष्यतीत्युक्तं यथेति पक्षेण पूर्व्वोक्तादतिरिक्तोपचारेण अत एव दीपिकायां एकैकस्याहएतक-

महाविंशतिरेव वा होमव्यामधुसर्पिर्भ्यां सहमं साष्टमंयुतं । पूजयित्वा-न्ययाभीष्टवरदानेन सर्पिताः । यतो दुःस्थप्रहोयत्नतः पूजनीयः । यथा मत्स्यपुराणे सुस्थः स्वस्थोपचारेण दुःस्थः शान्त्याद्यपेक्षया यत्नतः पूजनीयास्ते पूजिताय शुभावहाः । यस्तु पीडाकरोनित्यमल्पविनाश्य वा ग्रहः । स तं यत्नेन संपूज्य शेषानप्यर्चयेद्बुधः । तस्मात् पीडाकरोनित्यं य एव भवति ग्रहः तमेव पूजयेत्कृत्वा द्वौ वा त्रीन् वा यथा विधि । एकमप्यर्चयेत्कृत्वा ब्राह्मणं वेदपारगं । दक्षिणाभिः प्रयत्नेन न बहूनल्पवित्तवान् ।

Colophon. इति पंचवटीयहरिहरभट्टाचार्य्यात्मजश्रीरघुनन्दनभट्टाचार्य्यविरचितं संस्कारतत्त्वं समाप्तं । * । * स । मा * स । र * स । न श्रीहरये नमः । र स * मा । वा * । श्रीरामः । * । श्रीहरिः । * ।

विवरणम् । स्मार्तश्रीरघुनन्दनभट्टाचार्य्यविरचितं संस्कारतत्त्वं तदीयस्मृतितत्त्वान्तर्गतम् ॥

---

No. 242. संस्कारपद्धतिः । Saṅskára-paddhatiḥ. Substance, country-made white paper, 9×3 inches. *Folia*, 27. *Lines*, 12 in a page. Character, Nágara. Date, ? Appearance, very old, and worn out. Prose. Not correct. Incomplete.

A manual on the Saṅskáras or purifying ceremonies entitled Saṅskára Paddhati. Anonymous.

Beginning. श्रीरामचंद्रायनमः । योमुख्यात्कदशां सदैवसुभननां(?) ध्येयस्तथा योगिनां यो विघ्नो (घ ?) विनाशनेऽप्यति भूतौ (दृढो ?) भाग्यप्रदः सेविनां यो विद्यार्थिहरस्तथैव सुखदः साहित्यविद्यानिधिस्तं वंदे गिरिजात्मजं गणपतिं वाक्सिद्धये सर्वदा । १ । नत्वा दाशरथिं रामं वाग्देवीं चैव शारदां । गर्भाधानादिकर्माणां क्रियते पद्धतिर्मया । १ । गर्भाधानंतु प्रथमं पुंसवनं द्वितीयकं । सीमन्तोन्नयनं चाप्यथजातकर्म्म चतुर्थकं नामधेयं पंचमं स्यात् षष्टं (ष्ठं ?) निष्क्रमणं मतं सप्तमं प्राशनाख्यं च चूडाकर्म्म तथाष्टमं । ३ । नवमं व्रतबंधाख्यं वेदव्रतचतुष्टयं चतुर्दशंतु केशान्तमप्यद्भुतविसर्गकं । ४ । वदंति मुनयश्चाद्या विवाहाख्यंतु षोडशं ।

End. ( नास्ति ) ।

Colophon ( नास्ति ) ।

विवरणम् । संस्कारपद्धतिर्नामकश्चित् संस्कारविषयकोनिबन्धः । असम्पूर्णत्वादस्य ग्रन्थकर्त्तृनामादिकं न ज्ञायते ।

---

No. 243.. संस्कारवीचिः । Saṅskáravíchiḥ. Substance, foolscap paper, 15×3 inches. Folia, 316. Lines, 6-7 in a page. Character, Bengali. Date, ? Appearance, fresh. Prose. Not correct. Complete.

A work, treating of the Sanskáras or purifying ceremonies *in extenso*, under the name of Saṅskáravíchi, by Nara Súri, who wrote it under the direction of Govindadeva, either a king or the minister of a king. The work, forming, as it does, a part of a series entitled Govindárṇava Dharmatattwáloka, is named Víchi, meaning a sea-wave.

Beginning. ॐ स्वस्ति श्रीगणेशाय नमः ॥ ॥ यन्मायावशतः प्रपञ्चितवपुश्चित्स्वप्रकाशात्मकं तुल्याऽतद्व्यतिरेकगम्यमपरानन्दाद्वितीयात्मकम् । स्थाध्यासात्मकमा स्वतस्य जगतोऽसत्यस्य सद्भासकं भूत्यैनश्चिखिलाय संहतिचयं स्यान्नारसिंहं महः ॥ १ ॥ मूर्त्तिं तूर्णविदीर्णदैत्यनखरां प्रेक्ष्य प्रकम्पां पुरोलक्ष्मीं मुद्रितलोचनां सचकितां वीक्ष्याशु संहृत्य ताम् । रूपं सस्मितमीषिताभरसुखी मायेति विस्मापितां तामालिङ्ग्य विनोदयन् वटुतरैर्युष्मान् नृसिंहोऽवतु ॥ २॥ सिद्धिं बुद्धिशुभे अपि प्रियतमे संघर्षवत्यौ मिथोवाञ्छन्त्यौ प्रथमं स्वयंग्रहपरीरम्भेण मानं प्रियात् । ज्ञात्वा मानयतः समं गणपतेः प्रस्ताव्य वाद्योत्सवं स्वेच्छालिङ्गनचुम्बनादिललितं जीयादपांस्तक्रमं ॥ ३ ॥ दन्ताघातविभिन्नभूतलचलन्नागेन्द्रमौलिस्खलद्रत्नज्योतिषि कुम्भवन्मुखिगसं सम्भ्रमादिच्छतः । दानाम्भःस्रुतिपङ्क्तिलञ्चितिमिलद्भ्रृङ्गानुविम्बद्विपं चक्षुः सन्तु मुदे सुधा विधुनयोमूर्द्ध्नोऽगणानां प्रभोः ॥ ४ ॥ अन्तर्द्वारितवारिवारिदघटाः प्रेक्ष्यान्तरिक्षे द्रुतं संरम्भादिव विभ्रमाद्रिपतितोद्दामाम्बुमेदस्विनः ऊर्द्ध्वैरुन्नतदन्तकुम्भशिखरप्रोता शुण्डधुन्वतोविघ्नेशस्य विलोलचामरचमत्काराचिरं पातु वः ॥ ५ ॥ नागेन्द्र द्रुतमाहरस्व गरलज्वालावलीजाकुलां गङ्गे अङ्कुरते मनागलमलंकल्लोलकोलाहलैः । वक्के वारय विस्फुलिङ्गपटलीमित्यद्रिराजात्मजानिद्राभङ्गभयाच्छलैरपदिशं देयात्सुखं शङ्करः ॥ ६ ॥ विश्वस्यायतनं स्तृतीयनयनस्फारस्फुरत्पावकज्वालाजालशिखावलीभिरभितोभक्तौघविघ्नान् दहन् शम्भोर्नो किलकिञ्चिनात्मतयाम्न्दैकमज्जमना विश्वेशस्विजगद्गुरुः सकरुणः पायादपायाज्जगत् ॥ ७ ॥ यस्मिन् पौरस्त्यशैलातुलशिखरशिरःशेखरैरिङ्गति शासु-

श्रीमद्भूरिरागप्रचुरमरपरीरम्भप्रभाविताङ्गे पद्मामन्दाननानि द्विजवरकर-
कृत्य च पङ्केरुहाणि । यस्याध्यान्तं विकासं दधति दिनमणिः पातु युष्मान्
सदैव ॥ ८ ॥ मधुमीलन्नीलमधुपकमलामोदमुदितभ्रमतृष्णद्वैरीकदम्बक-
लभङ्कारमधुरा । सरस्वत्यास्वादनखरिखरसद्वारपरवर्हिपंथीभवीची नुति-
निगदवीची विजयते ॥ ९ ॥ चक्षिमक्षितिक्षितिरिहचतुर्वर्गसर्गैकभूमिः
सर्गङ्गाघाटपरिसरे राजधानी शिवस्य । यस्यामीशः क्षपितविषमा-
श्लेषकौनाशपाशं मत्र्यज्न्तोर्वदति जगत्तारकं ब्रह्म शान्तं ॥ १० ॥
यस्यां शिष्टानियमितमनोदृष्टयस्तत्त्वनिष्ठा योगोद्योगादवहितधियः शुद्ध-
सत्त्वा निरीहाः । प्रत्यक्ज्योतिः किमपि तपसां प्रत्ययानां पुरस्तादस्ताभङ्कं
निरवधि परानन्दमाशीलयन्ति ॥ ११ ॥ पुरन्दरपुरतः पुरतः सुरसरिन-
धोपनीरमन्तरिता । विविधारिभवैर्विभवैरतिरामा राजते नगरी ॥
१२ ॥ सुरसरिदुपकण्ठे नीलकण्ठेयदीयं त्रिभुवनकमनीयं चीक्ष्य रम्य-
त्वमत्र । अघटत सुघटतमारे नाण्डवं तेन नाम्ना प्रमितिरिह पृथिव्यामस्ति
नाण्डेति यस्याः ॥ १३ ॥ अमरसुरमस्हिमर्हजायापराङ्गमगधितमधि-
राशीन् सारयत्यम्बुराशैः । विविधविबुधशोभाभङ्गनानां जनानां कर-
पदनरङ्गीना नाकलोकोत्सुकत्वं(?) ॥ १४ ॥ यस्यामभ्रंलिहस्वदनदपालनीला-
म्बुद (?) जाद्रेरद्गोमध्ये कवलितमद्वोमण्डलं चण्डभानोः । सद्योविद्यो-
तितमरणे तरलोदीर्णशीर्षांशुद्वाषप्रासादासादितमलिनिमालयचैलधर्म-
च्छि(?) ॥ १५ ॥ यत्प्राकाराग्रभानुस्फुरदवयमणिक्षेत्रिसंक्रान्तकान्ति विश्रा-
न्तिर्हे प्रमद्दादधिनमविवराञ्चक्रमोपक्रमेषु शीतांशुसन्द्रकान्तादिनमणिदशह
चक्रवाकं चकोरं तुम्रं(?) नीलरुप पद्मं कुमुदमपि समानंदसान्द्रीकरोति ॥
१६ ॥ यत्कान्तासुखकान्तिनिर्जिततनुस्त्वज्लानलज्जाकुलः सौधौत्सेधवि-
चित्ररत्ननिचयोद्दन्तङ्घितेयुम्नात् । शोणाब्जीयति षट्पदीयति कुङ्कुमा-
तपत्रीयति द्राक्कुन्दीयति चन्द्रमाः कमलिनीपत्रीयति प्रत्यहम् ॥ १७ ॥
द्वे द्वे धर्मे निहितमतयो यत्र लोका विशोका नोकाङ्क्षन्ति त्रिदश-
पतितां यत्तराज्यं च साक्षात् । यामध्यास्ते विरचितशिवा सा शिवा
काशिवासिप्राणवायावहितविहितानेककामा निकामं ॥ १८ ॥ दृष्ट्वा
दृष्टिं सुचिरमखिलां नीयमानां (क्व ?) *योगैगौरीनाथः स्वयमरचयत्*
कल्पिशिल्पां (कल्पितानेकशिल्पां ?) यामालोक्य त्रिदशतटिनीद-
न्तारामसारां राशौ(?) नियतमपरां सज्जयत्यञ्जसा यः ॥ १९ ॥ गौर्यो
यत्र गृहे गृहे युवतयः सर्वे महेशा नराः किंचास्याः धनदाः प्रधान-
पुरुषा धनातुगाजिष्णवः (?) । लक्ष्मीशायतुराननाः इव जनाः मत्वेति
यास्त्र्गतोप्युचैरत्यधिका विनायकार्भैर्बालकैः शोभिताः ॥ २० ॥ यद-

धर्मकर्म्मपरिकर्म्मणामर्म्मविधा विज्ञातवेदविषया विषयानपेक्षाः । शाखा-
दिवाच सुधियो निधयोगुणानां शश्वद्द्विजान् द्विज निजादिवहमा-
र्गात् (?) ॥ ११ ॥ मल्लीपल्लीव यस्या विलसति पुरतः कान्तयोकान्तयो-
तेषान्तः कम्पेव चम्पा तदनु च मल्लिना श्रीविशाखा विशाखा ॥ गाढा
गाढ़ाभितापा परिपतदयशोमग्नदेवा विदेवा लंकातंकाकुलाशीदपि
विशदयशाः सालका कालकान्तिः ॥ १२ ॥ अस्ति क्षितिप्रशस्तिर्भुवि
भुवनतलाभोगभूषायमाणोवंशः श्रीवास्तकाख्योमितविभवभवोद्भासिताशा-
विभागः । प्रत्यपोद्यजापघ्निजभुजयुगलोद्दामदीप्यत्प्रतापज्वालामाला-
लीढं प्रतिस्पर्धपतिबलोधर्म्मकर्म्मैकधुर्य्यः ॥ १३ ॥ तस्मिन् वंशेऽजनि पर-
मतं शूरवंशावतंसाः कंसारातेश्चरणयुगले दत्तचित्तावधानाः । सन्नीति-
ज्ञा द्विजगुरुगुरुप्रापितार्थाः (?) पार्थप्रख्या (?) विशदयशसोधर्म्मकर्म्मै-
कधुर्य्याः ॥ १४ ॥ तत्रासीच्छुचिहासः शौर्य्यनिवासः हरेन्द्रपरिहासः ।
परिहृतजगदायासोजनितत्रासः परेषां शिवदासः ॥ १५ ॥ शवाराधना-
सावधानेन मुक्तामणिहारविहारगौरायशोधामधामाभिरामं निकामं
सदा येन तेन सदाशे भयेन ॥ १६ ॥ शिवं समाराध्य चिराय येन
(येन ?) भगीरथेनेव ततः प्रदाशो । आसप्तसप्तोनिजकीर्त्तिपूरे दूरे
व्यपेचि प्रसभं त्रिलोकी ॥ १७ ॥ तस्मादाविरभूत् प्रभूतविभवोगाङ्गेयवी-
र्योर्जितो गङ्गादास इति प्रसिद्धमहिमा गङ्गां समाराध्य सः ॥ साम्रा-
ज्यामंचुतार्थं यदुकुलममलं चक्रोन्यचक्रेश्वरानक्षोभादजयज्जयैकनिलयः
शक्रोऽथवम्राकरः ॥ १८ ॥ तदनुदनुजवैरिपादपद्मप्रणतिपरः समभूत्कदे-
शदासः । इह हरिहरयोरभेदभावं भजनमुपादिशदेष योजनेषु ॥
१९ ॥ यद्वाक्रोर्वंलमाकलय्य बलिनः प्रत्यर्थिपृथ्वीभृतोभूभृत्कन्दर-
दिरेषु (मंदिरेषु?) निभृताः स्त्रीपुत्रमित्यादिषु ॥ २० ॥ हित्वा स्वेषु
च पक्षपातमसमतुङ्गानुरागं (?) मृगव्यालव्याघ्रकिरातकेसरिपरीवारे
समातन्वते ॥ २१ ॥ अजनि नयनसिंहः पार्थिवोऽस्मादकस्मात् समरभुवि
यदीयं सिंहनादं निशम्य ॥ परनरपतिनीनामत्तमातङ्गसंघाः सपदि
विपदि मग्नास्ते दिगंतान् भजन्ते ॥ २२ ॥ क्रूराक्षेण विपक्षपक्षदलने
दक्षेण पक्षेश्वरादन्यूनेन नयेन येन सकलं भूमण्डलं शासता ॥ वैषम्यं
न विरच्यतेऽत्र भुवनेऽमित्रेषु मित्रेषु वा स्वस्त्रीकेलिपरेषु निर्म्मितचिर-
स्वाम्येषु नित्यार्थिषु ॥ २३ ॥ तद्वंशे भुवतंसेऽजनि जननयनानन्दचन्द्रोभरे-
न्द्रोमाहेन्द्रलोकमेवा (च ?) हसति वसुमती यं पतिं प्राप्य पुरोपि(?) ।
श्रीपात्नृपभग्नु (मनुः ?) परिचरितसदामाधवोमाधवीयं संग्रामो

साधवोमी गुणमणिविपणिर्मायवोधस्रंग्धुर्य्यः ॥ ७३ । दाने माने निदाने विनये नये च यस्य च सौन्दर्य्येऽप्यार्यादेरपयायांमप्रथयत्श्रयां ततः प्रवात् ॥ ७४ ॥ आसन्नासन्नभूमीपतिततिनतिमत् कोटिकोटी दे कोटी प्रोन्मीलन्नीलरत्नावलिचलितवचिश्रान्तशङ्कास्नाभिः । पीला यत्पाद-पद्मोदरदरगलिता साधु धूलीमधुनी स्वैरं यत्कीर्त्तिगीतैः सपदि सुचरि-ताश्चे दिगंताः समन्तात् ॥ ७५ ॥ स्वर्वाचिन्याः प्रवाहाः किमु किमुत सुरा ब्रह्मगोविन्दचन्द्राः किं वा धर्म्मार्यकामा ननु किमु निगमा ऋग्यजुः-सामरूपाः । स्वर्भूपातालस्लोकाः किमुत किमु दयाः साधुसिद्धिनयो-द्रकास्तेषां ज्येष्ठश्रयाधामखिलगुणगणैर्भूपगोविन्दचन्द्रः ॥ ७६ ॥ यैः पञ्चा-सन्नधीरोधरविधरवरैराश्रितोजाप्रदुद्योदयोदीर्णप्रतापानलकलितदिशः श्रीमद्भावधानः । सर्व्वाशापूरिभूरिस्फुरितवचियशश्चन्द्रमाश्चन्द्रवासो दयद्दुर्वीकरः सद्गुणगणमणिभिः पूर्णरत्नाकर श्रीः ॥ ७७ ॥ तद्गुरु-गुरुपुंगवदानद्विपदीपकोदयचारपदार्थमार्यरमणीयधन्मणीनां गणैः(?)॥ तं श्रेयामलवंशभूषणमणिं गोविन्दचन्द्रः स्वयं विद्वन्मण्डलपुण्डरीकतर-णिर्भूमण्डलीमण्डनं । धर्म्मोद्धारविधौ समाहितमनाः प्रीत्यानुनीयाधुना गोविन्दार्णवनामकं व्यरचयत् धर्म्मप्रबन्धं शुभं ॥ ८१ । अशेषविदुषा-मेष सम्बोधाय विशेषतः । करोति सदनुग्रासोत्सिंहः सन्निबन्धनं ॥ ८२ । किं दुर्ज्जनानामिह तर्ज्जनाभिस्तुष्यन्ति सन्तो यदि सत्कुलेन । शम्भोः शिरःशेखरतां प्रयातं विधुं गृणीते न विधुन्तुदोपि ॥ ८३ ॥ श्रुतिस्मृतिपुराणानि निबन्धान् विविधानपि । दृष्ट्वा सम्यक् समासेन सारोद्धाराय मे श्रमः ॥ ८४ ॥ तथादौ सुखबोधार्थं ब्रूमः प्रकरणक्रमं । संस्कार आह्निकं श्राद्धः शुद्धिः कालस्य निष्कृतिः ॥ ८५ । क्रमात् षड्-वीचयो ज्ञेयाः सर्व्वशास्त्रार्थदीपिकाः ॥ ८६ ॥

End. यत्तु कल्पनयमपाहत्य निमर्ग्गोनिरवं ह्रतिः । शास्त्रसवचियोवापि येभ्यो वा प्रवर्त्तेद् स्वभावादिति सद्विरोधाद्वाध्यमेव । यद्वा प्रवर्त्तेदिति वाक्यप्रश्न-परं प्रश्नस्यासन्दस्य स्वदुर्क्केपि श्रुतिप्रामाण्यसंरक्षणाय स्वदेरेव तिरस्कारा-दिति दिक् । सदर्थेषु प्रकाशतां विदधतोमाधव चिते सतोमित्याराध्य-त्वं सतिर्यदि सतामास्तुमीहे समः । नाशाः किमु यमतृप्तीः सती-रचो निर्भिद्य लोकाभिके वृत्ताः शिष्टविटामवापसपितैव्यख्यात्तमित्यर्थ-योः । प्रयोगमात्रजिह्यास्तुमोपायैषा न यद्यपि । तर्कतर्कमनुवीना वर्णो-ज्ज्वलं करिष्यति ॥ १ ॥ वन्दादेदममर्थैर्नैनिवपथिप्रेमानुबन्धा चिते सन्वदेत् सुतरां मतान्भकमणं वः कर्त्तुमिष्टे समः । किञ्चाभिनिवेशमपेमरुधियः

लावाघरे मतूलानि पर्य्यालोच्य चमतृप्तं चिरमथोनन्दनु निन्दमु वा ॥ २ ॥

**Colophon.** इति श्रीमद्खण्डभूमण्डलाधीश्वरसमस्तमाधाख्यधुरंधरश्रीमद्गोविन्ददेवादिष्टश्रीपनरसिंहस्रिविरचिते गोविन्दार्णवे धर्मतत्त्वालोके संस्कारवीचिः प्रथमः समाप्तः ॥ ० ॥ शुभं भवतु ॥ ० ॥ * ॥

विवरणम् । संस्कारवीचिर्नाम नरसिंहसूरिविरचितः संस्कारविषयकः कश्चिन्निबन्धस्तदीय गोविन्दार्णवधर्मतत्त्वालोकाख्यधर्मशास्त्रीयनिबन्धविशेषान्तर्गतः ॥

---

No 244. विवाहादिपद्धतिः । Vivahadi-paddhatiḥ Substance, foolscap paper, 16 × 3¼ inches. Folia, 63. Lines, 7 in a page. Character, Bengali. Date, ? Appearance, fresh. Prose. Generally correct Incomplete.

A guide to the performance of the ten Sañskáras or purifying ceremonies, as observed by the followers of the Yajurveda, commencing with the marriage ceremony. Anonymous.

**Beginning.** ॐ नमो गणेशाय ॥ अथ यजुर्व्वेदिनां दशकर्म्मपद्धतिर्लिख्यते । तत्र प्रथमं कतिपयदिनभाविनि विवाहे यथाचारसिद्धवक्रोदकार्थं कन्यादातृसम्बन्धिब्राह्मणादयः फलकुसुमादिकं गृहीत्वा जामातृगृहं गच्छेयुः । गत्वा च कन्यादातृसम्बन्धी कश्चित् ब्राह्मणः शुचिराचान्तः पश्चिमाभिमुखं जामातृसम्बन्धिनं ब्राह्मणं कश्चित्फलकुसुमादिभिरभ्यर्च्य तस्य हस्ते वाक्यपूर्व्वकं सतिलकुशोदकं दद्यात् ॥ यथा विष्णुरोम् तत्सदद्यामुके मासि अमुकपक्षे अमुकतिथौ अमुकगोत्रः श्री अमुकदेवशर्म्मा अमुकगोत्रस्यामुकप्रवरस्यामुकदेवशर्म्मणः प्रपौत्राय अमुकगोत्रस्यामुकप्रवरस्यामुकदेवशर्म्मणः पौत्राय अमुकगोत्रस्यामुकप्रवरस्यामुकदेवशर्म्मणः पुत्राय अमुकगोत्रायामुकप्रवरायामुकदेवशर्म्मणे वराय अमुकगोत्रस्यामुकप्रवरस्यामुकदेवशर्म्मणः प्रपौत्रीं अमुकगोत्रस्यामुकप्रवरस्यामुकदेवशर्म्मणः पौत्रीं अमुकगोत्रस्यामुकप्रवरस्यामुकदेवशर्म्मणः पुत्रीं अमुकगोत्रामुकप्रवरां अमुकाभिधानां अमुकेन विवाहेन दातुं नवाहं प्रतिजाने । इति जामातृसम्बन्धी कश्चिद् ब्राह्मणः वाढमिति ब्रूयात् । ततस्तु शुभे दिने शुभे लग्ने सदाचारपरिप्राप्तं तैलहरिद्रालेपनादिकं कन्यावरौ कुर्य्याताम् । ततो विवाहदिने कन्यापितृवरपितृवराः प्रातः गणाधिपगौर्य्यादिषोडशमातृकापूजां वसोर्धारामायुष्यमन्त्रं वृद्धिश्राद्धञ्च कुर्य्युः ।

End. ततो भित्तादौ प्राङ्मुख उदङ्मुखो वा । ॐ यद्वर्चोहिरण्यस्य यद्वा-वर्चो गवामुत सत्यस्य ब्रह्मणोवर्चस्तेन मा संसृजामसि ॥ अनेन सप्तधा वा घृतधारां (राः ?) दद्यात् ॥ ततो भूमौ परस्परं मिलितासु घृत-धारासु ॐ वेदिराजवसो इहागच्छेत्यादिनावाह्य पूजयेत् ॥ तत आ-युष्यमन्त्रं जपेत् यथा ॥ ॐ आयुर्विश्वायुर्विश्वं । विश्वमायुरशीमहि । प्रजास्त्वष्टरधिनिधेह्यस्मे शतं जीवेम शरदो वयन्ते । ॐ आयुषो मे पवस्व वर्चसे मे पवस्व विदुः पृथिव्याद्दिवोजनित्राः । शृण्वन्त्वापोधः क्षरन्तीः सोमोस्तो दुगाय ममायुषे मम ब्रह्मवर्चसाय यजमानस्याद्यौ अमुष्य राज्याय । अमुष्येत्यत्र यदर्थं वृद्धिस्तस्य षष्ठ्यन्तं नाम प्रयोक्तव्यं ॥ ततो वृद्धिश्राद्धं कृत्वा दक्षिणा देया ॥

Colophon. इत्यायुष्यजपः समाप्तः ॥ ० ॥ प्रतिनिधिस्थले सङ्कल्पवाक्यन्तु ॥ ० ॥ ॐ अद्येत्यादि अमुकगोत्रः श्रीअमुकदेवशर्म्मा अमुकगोत्रस्य श्रीअमुकदेवश-र्म्मणः अमुककर्म्माभ्युदयार्थं गणाधिपगौर्य्यादिषोडशमातृकापूजावसो-र्धारासम्पातनायुष्यजपाभ्युदयिकश्राद्धान्यहं करिष्यामि ॥ ० ॥ श्रीहरिः ॥ श्रीहरिः ॥ श्रीहरिः । श्रीहरिः ।

विवरणम् । यजुर्वेदिनां विवाहादिदशकर्म्मानुष्ठानपद्धतिरूपोऽयं निबन्धः असम्पूर्णः ॥

---

*Note.*—This codex has also a fragment of the Kuśaṇḍiká rite as performed in the marriage ceremony, from foll. 9-12, of country-made yellow paper, 22×3¼ inches, having six lines in a page, and in the Bengali character.

पुस्तकेऽस्मिन् कुशण्डिकायाः ९-१२ चत्वारि पत्राणि वर्त्तन्ते ।

---

No. 245 संस्कारनिर्णयः । Sañskáranirṇayah. Substance, country-made Káśmíri paper, 10×4½ inches. Folia, 50. Lines, 10-13 in a page. Character, Nágara. Date, ? Appearance, very old, torn, worn out, and slightly worm-eaten in parts. Prose. Generally correct. Incomplete.

A detailed account of the Sañskáras under the name of Sañskáranirṇaya by Tipyábhaṭṭa, son of Rámabhaṭṭa, according to Áśvaláyana's aphorisms.

A work on the same subject under the name of Sañskára Mayúkha by Nílakanṭha, forming a section of his Bháskara series. Enclosed within the boards, is another codex, containing the well-known manual on the daily prayers of the Bráhmaṇas of the Sámaveda school, entitled सामवेदीय सन्ध्याप्रयोगः, a description whereof is given in a note at the end of this number.

Beginning. श्रीगणेशाय नमः ॥ यो लीलया जगदनुते च विश्वं तत् पालयत्यात्मनि
विश्वरूपे ॥ स्वयं नयत्यात्मसपूर्वरूपः शिवं तनोत्वाशु स विश्वसाक्षी ॥ १ ॥
ब्रह्मे पितामहतनोः खलु काश्यपोयस्तस्मादजायत मुनिस्तु विभांडकाख्यः ।
तं पुनिधियां धुरमरोचयदृष्यशृंगस्तस्मान्वयेप्यजनि शृंगिवराभिधानः ॥ २ ॥
तस्मिन् वंशे महति विततं संगराख्ये प्रयायां राजा कर्णः समजनि यथा
सागरे शीतरश्मिः । कीर्त्या यस्य प्रथिततरया श्रीवजादेऽभिपूर्वे कर्ण-
स्यापि प्रविततकथा नावकाशं लभन्ते । विशोकाख्यदेवस्ततस्तत्सुतोऽभूद्वि-
शोकीकृता येन सर्व्वा धरित्री । ततोपाधराजोऽस्य सूनुस्ततोभूद्याख्योरये-
वैव सर्व्वाहितघ्नः ॥ ४ ॥ बभूवाथ वैराटराजस्ततो भूमुपोमेदिनीवल्लभी-
वीरराजः । नरसिंहदेवस्ततोमन्युदेवस्ततोभूत्पर्यंद्रपालाभिधानः ॥ ५ ॥
शिवगणाख्यस्तत्पः समजन्यथोशिवगणाख्यपुरं प्रचकार यः शिवगणेन समः
सकलैर्गुणैः शिवशिवप्रथमोगणनादु यः ॥ ६ ॥ रोहिचंद्र इति तत्तनयोभूत्
कर्म्मवेदस्पतिल्लमपात् लोकयोर्नरहरिर्नृपराजो रामचंद्र इति तत्तनु-
जातः ॥ ७ ॥ यशोदेवस्ततोजातश्चाराचंद्रस्तपस्ततः । चंद्रसेनस्ततोराजा
मतः सिंहस्तपोधनः ॥ ८ ॥ ततोऽप्यभूद्भूपतिमानिदेवः स्वकीर्त्तिभि-
र्न्निर्जितदुग्धसिंधुः । अभूत्ततः श्रीभगवंतदेवः सदैव भाग्योदयवान् क्षिती-
शः ॥ ९ ॥ यद्दानप्रविधार्द्रनिर्ज्जितवपुर्माचलोल्लया दूरतश्च द्रुता
इत्ते निविशते नो यत्र पुंसां मतिः ॥ किं च सप्तदशानिवासनयनानेत्रा-
स्तुभिर्वेदितैस्तेजोऽग्निवैकुवासुधोत्सकृतभुक् तुल्यः कथं नोभवेत् ॥ १० ॥
चाज्ञप्तेन राज्ञा विबुधकुलमपिदांदिषात्यावतंसोभट्टश्रीनीलकंठः स्मृति-
सुहृद्भक्तिर्ज्जैमिनीयेऽद्वितीयः । चाज्ञामादाय मूर्ध्ना सविनयमनसा तस्य
सर्व्वान्निबंधान् दृष्ट्वा सम्यक् विचित्याथ कुरुते भगवद्भास्करग्रन्थवेऽस्म ॥
११ ॥ प्रतारकैराहतमत्र किंचिन्मया तु निर्मूलतया यदुक्तम् । अनोति-
मातोनहि तेन काचित् बहुधनानापचितिर्नं चीयते ॥ १२ ॥ संस्काराचार
कालाः समुचितमफला॰ चाद्यनीतिर्व्विवादोदानोत्सर्गप्रतिष्ठाजयति जप-
कराः संगतार्थानुबद्धाः प्रायश्चितं विशुद्धिश्चदनु निगदिता शान्तिरेवं क्रमे-
ण ख्याता ग्रंथेऽत्र ग्रन्थे बुधजनहृषदा द्वादशैते मयूखाः ॥ १३ ॥ भगवंत-

भास्कराख्येयं ग्रंथेऽस्मिन् शिष्टसंमते पूर्वसंस्कारविधिर्मयूखः प्रतन्यते नील-
कंठेन ॥ १४ ॥ तत्रैतन्निबंधोपयोगि किंचिदुच्यते । तत्र प्रथमं धर्म्मप्रमाणा-
न्युच्यन्ते । *तान्याह याज्ञवल्क्यः* ॥ श्रुतिस्मृतिसदाचाराः स्वस्य च प्रियमा-
त्मनः सम्यक् संकल्पजं कामो धर्म्ममूलमिदं स्मृतमिति । सदाचारः श्रुति-
स्मृत्यविरुद्धो दृष्टार्थोविसंतोसवादिः धर्म्मे मूलं प्रमाणमित्यर्थः सम्यक् संक-
ल्पाज्जातः कामो यथा भोजनव्यतिरेकेण जलं न पातव्यमिति । एतेषां
च विरोधे पूर्वं बलीयः ॥ स्मृतिष्वपि मनुस्मृतिः प्रबलेति अंगिराः ।
मन्वर्थविपरीता तु या स्मृतिः सा विनश्यतीति । अनादरणीयेत्यर्थः ।
मधाच मानवी ऋचौ धार्य्येत्यस्य वाक्यशेषे श्रूयते ।

End. संकल्पादित्येतन्निते ध्रुवमीमंचक्षेति वधूं प्रेक्ष्य ध्रुवमासि ध्रुवं त्वा पश्यामि
ध्रुवैधियोष्येमपि मह्यदां त्वा ददद्बृहस्पतिः । मया पत्या प्रजावती
संजीव शरदांशतमिति मंत्रं वाचयित्वा ध्रुवमीचयीत । ततो दंपती विवा-
हादादारभ्य त्रिरात्रमक्षारलवणाशिनावधःशायिनौ संवत्सरं द्वादशरात्रं
षट्रात्रं त्रिरात्रं वा ब्रह्मचारिणौ स्यातामिति विवाहप्रयोगः । धर्म्मे
(चर्म्मे?) खतीतरधिजाद्यभसंगमस्य पाविध्यभाजि सततशालिनि मध्यदेशे
धा (ख्या ?) ता भरेहनगरी किल तत्र राजा राजीवलोचनरतो-
मगवंतदेवः ।

Colophon इति श्रीमगरवंशावतंसश्रीमहाराजश्रीभगवंतदेवादिष्टमीमांसकभट्टशंक-
रात्मजभट्टनीलकंठकृते भगवंतभास्करे संस्कारमयूखः प्रथमः समाप्तः ॥ •॥
* ॥ श्रीगणेशाय नमः ।

विवरणम् । नीलकण्ठभट्टविरचितः संस्कारमयूखोनाम कश्चित् संस्कारविषयकोनिबन्धः । अत्र गर्भाधानादारभ्य विवाहपर्य्यन्तानां संस्कारकर्म्मणां सविस्तरालोचन वर्त्तते । नीलकण्ठेन हि भगवन्तभास्कराभिध- कश्चित् धर्म्मनिबन्धः संकलितः । तदन्तर्गताः संस्कारश्राद्धप्रायश्चित्ताद्यभिधा द्वादशमयूखाः सन्ति । तत्रचायमस्मदालोच्यसंस्कारमयूखोनाम तेषु प्रथमः । मयूखग्रन्थानां दाक्षिणात्ये सम्यगादरोवर्त्तते । मुद्रिताश्चैते तत्र ।

---

*Note.*—सामवेदीयसन्ध्याप्रयोगः । Sámavedíya Sandhyá-prayogaḥ. Substance, country-made white paper, $24 \times 2\frac{1}{2}$ inches Folia, 4. Lines, 6–8 in a page Character, Bengali. Date, S'aka 1769. Appearance, old. 'Generally correct. Complete.

विवरणम् । पुस्तकेऽस्मिन् सामवेदिसंध्याप्रयोगनिबन्धस्य पुस्तकमेकं वर्त्तते ।

---

No. 247. संस्कारमयूखः। Sañskára Mayúkhaḥ. Substance, country made white paper, 9×5 inches. Folia, 115. Lines, 11–12 in a page. Extent, 2,500 ślokas. Character, Nágara. Date, ? Appearance, not old, but slightly worm-eaten in parts. Prose. Generally correct. Complete.

Another copy of the same work.

विवरणमनुक्रमपूर्व्वम्। –

---

No. 248. उद्वाहतत्त्वम्। Udváhatattwam. Substance, country-made yellow paper, 18×3 inches. Folia, 34. Lines, 6–7 in a page, with a blank space of about half an inch square in the middle. Character, Bengali. Appearance, almost new. Prose. Generally correct. Complete.

A work treating of the marriage ceremony under the name of Udváhatattwa by Raghunandana of the Bengal school. It belongs to his Smṛititattwa series, and has been printed and published in the Bengali character in Bengal with notes. The codex under notice has some explanatory notes in the margin.

Beginning. ॐ नमो गणेशाय॥ प्रणम्य कमलाकान्तं वागीशं जगतां प्रभुं। उद्वाहकर्म्मणस्तत्त्वं वक्ति श्रीरघुनन्दनः। अथ उद्वाहनिर्णयः॥ मनुः। असपिण्डा च या मातुरसगोत्रा च या पितुः। सा प्रशस्ता द्विजातीनां दारकर्म्मणि मैथुने। दारकर्म्मणि भार्य्यात्वसम्पादककर्म्मणि।

End. । स्वच्छन्दगा तु या नारी तस्यास्त्यागो विधीयते। न चैवं स्त्रीवधः कार्य्यो न चैवाङ्गविभाजनं। बृहस्पतिः। नीचवर्णोपभुक्ता या त्याज्या वध्यापि वा भवेत्। विशेषयति। मिताक्षरायां व्यासः। ब्राह्मणक्षत्रियविशां भार्य्याः शूद्रेण सङ्गताः। अप्रजाता विशुध्यन्ति प्रायश्चित्तेन नेतराः। एतद्वलात्कारविषय॥ ०। ०। ०।

Colophon. इति वन्द्यघटीयहरिहरभट्टाचार्य्यात्मजश्रीरघुनन्दनभट्टाचार्य्यविरचिते स्मृतितत्त्वे उद्वाहतत्त्वं समाप्तं (समाप्तं ?)। ०। ०। ०। श्रीमधुरामाचदेवशर्म्मणाचरं पुस्तकच। यथेन लिखितं मया यथोरयति पण्डितः। माता तस्य शङ्करी च पिता तस्य च गर्दभः॥ शक १९०४ शाके २ वैशाख बृहस्पतिवार। ०। ०। श्रीश्रीदुर्गा शरणं। ०। ०। श्रीश्रीहरिः शरणं। ०। अथ श्रीगौरीविवाहप्रकरणे उपविष्टस्त्रियेषत्तु शाक्षौ द्विजमव-

ग्रत । सप्तर्षिकाष्ठां मैत्रेन्द्रकूपविष्टो विलोकयम् । मद्दीश्वतमनुखो मान्
दैविकोऽसुत्तरामुखः । द्विमाद्रिविम्य चात्मानं प्राङ्मुखाय प्रयत्नतः ।
दद्यात् शिवाय गौरीमु कुशतोयतिलैः सह इति मनुवचनात् उत्तर-
मुखेन कन्या देया। अतएव सर्व्वत्र प्राङ्मुखोदाता गौरीता च उदङ्मुखः।
एव एव विधिर्दाने विवाहे च विपर्य्ययः। इति मनुवचनमपि सङ्-
च्छते। विपर्य्ययपदस्य परिवर्त्तपर्य्यायत्वात्। तथा च गौरीदावरोर्विनि-
मयो व्यत्यासः परिवर्त्तो विपर्य्यय इत्यनर्थान्तरम्। प्राङ्मुखायाभिरूपाय
वराय ऋषिसन्निभौ। प्रत्यङ्मुखस्तु दाता वै दद्यात् कन्यां स्वलङ्कृतां।
इति वचनं ऋषिपदवैयर्थ्यप्रसङ्गेन आहिताग्निपरतया आग्निपजु-
र्वेदिपरं। यजुर्वेदिनां अग्न्याधानानन्तरविवाहाचरणात् इति द्वितीय-
वचनानदवचनैकवाक्यतया समाधेयं। इति शूलपाणिभट्टाचार्य्यविद्या-
निवासभट्टाचार्य्यचरणानुसृतः पन्थाः॥ इति ॥ ० ॥ दैविकः प्राङ्मुखो
भूयात्। दाता प्रत्यङ्मुखः ऋषिः। संपूज्य गन्धपुष्पाभ्यां दद्यात् कन्यां
सुरेश्वरीं ॥ इति लक्ष्मीविवाहे मत्स्यपुराणोक्तं ॥ ० ॥

विवरणम्। स्मार्त्तश्रीरघुनन्दनभट्टाचार्य्यविरचितमुद्वाहतत्त्वं मुद्रितैतत्पुस्तकानुसारेण ।

---

*Note.*—This codex has also the first three folia of another copy of the same work of the following description. Substance, country-made reddish paper, 14×2½ inches, having 5 lines in a page, in the Bengali character. Appearance, old.

विवरणम्। पुस्तकेऽस्मिन्नुद्वाहतत्त्वीयपुस्तकान्तरस्य प्रथमपत्रत्रयं वर्त्तते।

---

**No. 249.** उद्वाहतत्त्वम्। Udváhatattwam. Substance, country-made white paper, 18×3 inches. Folia, 25 (of which fol. 1 is wanting). Lines, 3–7 in a page. Character, Bengali. Date, S'aka 1725. Appearance, not old. Prose. Correct. Complete (except the first folium).

Another copy of the same work.

Colophon. इति बन्द्यघटीयहरिहरभट्टाचार्य्यात्मज-श्रीरघुनन्दनभट्टाचार्य्यविरचिते स्मृतितत्त्वे उद्वाहतत्त्वं समाप्तं ॥ ० ॥ * ॥ ० ॥ बाणद्वन्द्वविधुचन्द्रमितशक-वत्सरे श्यामपक्षे हि माघे वाजिचन्द्रमितांशे मिथुनगतरवेः पञ्चमीचान्द्र-चक्रे। उद्वाहं तत्त्वमेवं यत्किञ्चिदविरलं चन्द्रयित्वा श्रिवेमं काशीनाथो-

द्विजातिवंशपुरस्थसनिषद्वंशप्रसूतः । ० । ० ॥ ० ॥ ॐ नमोवासुदेवाय नमः । ॐ गुरवे नमः ।

विवरणमूलपूर्व्वम् ।

---

No. 250. उद्वाहतत्त्वम् । Udváhatattwam. Substance, country-made yellow paper, 18×4 inches. Folia, 7. Lines, 6-7 in a page. Character, Bengali. Date, ? Appearance, not old. Prose. Generally correct. Incomplete.

Another incomplete copy of the same work.

विवरणमूलपूर्व्वम् ।

---

No. 251. उद्वाहतत्त्वम् । Udváhatattwam. Substance, country-made red and yellow as well as foolscap paper, 14×2½ inches. Folia, 41. Lines, 5-7 in a page. Character, Bengali. Date, ? Appearance, not old. Prose. Generally correct. Complete.

A fourth copy of the same work.

विवरणमूलपूर्व्वम् ।

---

No. 252. प्रायश्चित्ततत्त्वम् । Práyaśchittatattwam. Substance, country-made yellow and white paper, 16×3½ inches. Folia, 13. Lines, 6-7 in a page. Character, Bengali. Date, ? Appearance, old. Prose. Generally correct. Incomplete.

An incomplete copy of the work noticed in No. 176, but by a clerical oversight it was named Udváhatattwa on the outside, and placed among works on Udváhatattwa.

विवरणम् । पूर्व्वोल्लिखितस्य प्रायश्चित्ततत्त्वस्य खण्डितं पुस्तकमेतत् ।

---

No. 253. व्यवस्थासंग्रहः । Vyávasthá-saṅgrahaḥ. Substance, country-made yellow paper, 21×5¼ inches. Folia, 22. Lines, 9-11 in a page. Character, Bengali. Date, ? Appearance, not much old, but completely damaged. Prose. Generally correct. Complete.

A work, containing Vyávasthás on several subjects such as Práyaśchitta (penance), Adhikára (inheritance), &c., by Gaṇeśá Bhaṭṭa. It treats of marriage at the end, and perhaps misled by the colophon, it was named Udváha-viveka, and placed among works treating of the marriage ceremony.

**Beginning.** ॐ नमोगणेशाय । अथ प्रायश्चित्तव्यवस्था । तत्र प्रायश्चित्तलक्षणं । पापनाशकतामात्रेण विधिबोधितं कर्म्म प्रायश्चित्तं। तेन प्रायश्चित्त ++ +ध्वंसज्ञानादिजनकत्वे तदंशे विधिबोधितत्वाभावान्न सम्भवः । इत्यदा गङ्गाधामादौ फलान्तरजनकत्वेन नातिव्याप्तिः ॥

**End.** यदि मातामहीभातापि नास्ति तयोर्व्यतामवलम्ब्य बन्धुपितामह वृद्धप्रपितामहानां त्रयाणां प्रत्येकं सन्ततिः पञ्चमीपर्य्यन्ता बन्धुभागिन्यादिकाः पञ्च+++मातुश्च सप्तमी भातुः कन्यादौहित्री च न विवाह्या गुरोः कन्या च न विवाह्या । ०।

**Colophon.** इति गणेशभट्टकृते उद्वाहविवेकः समाप्तः । ० । ० । ० ॥ ० ।

विवरणम् । गणेशभट्टविरचितः प्रायश्चित्तादिनानाविषयकव्यवस्थासंग्रहनिबन्धः। ग्रन्थस्यास्यान्तभागे विवाहव्यवस्था वर्त्तते, तस्य च (उद्वाहविवेकः समाप्त इत्यन्तिमवचनमवलोक्य पुस्तकालयाध्यक्षेणोऽद्वाहविवेकनाम्नाऽङ्कितमिदं पुस्तकं, स्थापितश्चोऽद्वाहविषयकनिबन्धानामन्तरिति विभाव्यते ।

---

No. 254. सामवेदिविवाहपद्धतिः । Sámavedi-viváha-paddhatih. Substance, country-made white paper, 16 × 2½ inches. Folia, 19. Lines, 6–7 in a page. Character, Bengali. Date, ? Appearance, very old, and worn out. Prose. Generally correct. Complete.

A guide to the performance of the marriage ceremony as observed by the followers of the Sámaveda. Anonymous.

**Beginning.** ॐ हरये नमः । अथ सामगविवाहः । वरोपस्थिते वरे सम्प्रदाता इमं मन्त्रं पठति । प्रजापतिर्ऋषिरनुष्टुप्छन्दोऽर्हणीया गौर्देवता गवोपस्थापने विनियोगः । ॐ अर्हणापुत्रवासमा धेनुरभवद्यमेषाम: धेनुरभवदियमेषानः । पयस्वती दुहामुत्तरामुत्तरां समां ।

**End.** तत इमं मन्त्रं पाठयन् वधूमरुन्धतीं दर्शयति । प्रजापतिर्ऋषिर्मधूर्देवता अरुन्धतीदर्शने विनियोगः । ॐ अरुन्धत्यसि । ततो जामाता

इमं मन्त्रं वधूं पश्यन् पठेत् । प्रजापतिर्ऋषिरनुष्टुप्छन्दः कन्या देवता कन्यानुमन्त्रणे विनियोगः । ॐ ध्रुवा द्यौ ध्रुवा पृथ्वी ध्रुवं विश्वमिदं जगत् । ध्रुवासः पर्वता इमे ध्रुवास्त्री पतिकुले इयं ॥ ततो वधूः पितृगोत्रेण भर्त्तारमभिवादयेत् । अमुकगोत्रा श्रीअमुकीदेवी अहं भोऽभिवादये । इत्यभिवादनवाक्यं । ततो भर्त्ता आयुष्मती भव सौम्ये इति ब्रूयात् । ततस्तत्क्षणमौनया वध्वा सहितं जामातरमागतो वेदीमुत्थाप्य अक्षपूर्वकलशमादाय । अविधवा नार्यः मङ्गलकारपल्लवोदानस्नानादिमङ्गलं कुर्य्युः । ततो जामाता अग्निसमीपमागत्य व्यस्तसमस्तमहाव्याहृतिहोमं कृत्वा उदीच्यं सर्वकर्मसाधारणं शाट्यायनहोमादिवामदेव्यगानान्तं कर्म समाप्य कर्मकारयित्रे ब्राह्मणाय गां दक्षिणां दद्यात् ॥

Colophon. इति उत्तरविवाहकर्म समाप्तं ॥*॥ ततो + + + + + + + ॥ प्रजापतिर्ऋषिरनुष्टुप्छन्दोऽग्निर्देवता अत्र + + विनियोगः ॥

विवरणम् । सामवेदिनां विवाहकर्मानुष्ठानपद्धतिरूपोऽयं निबन्धः ॥

---

No. 255. उपनयनपद्धतिः । Upanayana Paddhatiḥ. Substance, country-made white paper, 8 × 3½ inches Folia, 16. Lines, 7–12 in a page Character, Nágara. Date, 1785. Appearance, very old, and worn out. *Prose. Not correct. Complete.*

A guide to the performance of the Upanayana ceremony or the investiture with the sacred thread. Anonymous.

Beginning. श्रीगणेशाय नमः ॥ अथोपनयपद्धतिर्लिख्यते (अथोपनयनपद्धतिर्लिख्यते ?) पूर्वेद्युः मातृपूजापूर्वकमाभ्युदयिकं विधाय कुमारस्य वपनं कारयित्वा अमुककुमारस्य उपनांय (उपनयनांय ?)ऽहेन ब्राह्मणान् घृताद्युपस्करवदन्नेनाहं भोजयिष्ये । इति संकल्प्य ब्राह्मणान् भोजयित्वा होमादिकं विधाय वस्त्रं वेष्टयित्वा पूर्वैरसंस्कृतदाचार्यसमीपमानयेत् ॥ तत्रोपविश्य कुमारः पवित्रपाणिर्भूत्वा आचमनं करोति ॥ ततश्चाचार्य्यः पंचभूसंस्कारपूर्वकाग्निमुपसमाधाय संकल्पं कुर्य्यात् ॥ अद्येत्यादि गोत्रस्यामुकसंस्कारपूर्वकवेदाध्ययनाधिकारसंपादकमाणवकसिद्धिनिमित्तं अमुं देवदत्तं वटुमहमुपनेष्ये ।

End. धृतंतो मां परस्मै भाषयीत तिष्ठन् गुरुदरीचे न कुर्य्यात् । विहृतं

वाशो न परिदध्यात् । दुष्टवतो न भवेत् सर्वेषां मित्रवदाचरेत् ++ ++++++ ।

Colophon. पुस्तकं समाप्तं द(म?) भमस्तु संवत् १०८५ माघमासि कृष्णपक्षे तिथौ ११ चंद्रवासरे । शुभंभवतु(?)

विवरणम् । उपनयनकर्म्मानुष्ठानपद्धतिरूपोऽयं निबन्धः ।

---

No. 256. उपनयनविधिः । Upanayana Vidhiḥ. Substance, country-made white paper, 6 × 2½ inches. Folia, 7. Lines, 6–9 in a page. Character, Nágara. Date, ? Appearance, very old, and worn out. Prose. Generally correct. Complete.

Another manual on the performance of the Upanayana ceremony.

Beginning. गणेशः । अथ उपनयनं । अस्य कुमारस्य द्विजत्वसिद्धा वेदाध्ययनाधिकारद्वारा श्रीपरमेश्वरीप्रीत्यर्थं च उपनयनं करिष्ये । तदंगभूतं गणपतिपूर्व्वकं (गणपतिपूजनपूर्व्वकं?) स्वस्ति पुण्याहवाचनं मातृकापूजनपूर्व्वकं नांदीश्राद्धमंडपदेवतास्थापनं देवक (दिक्?) देवतास्थापनं कुलदेवतास्थापनं च करिष्ये ।

End. ब्रह्मचारिणा (ब्रह्मचारी?) स्नानं कृत्वा वस्त्रादि धारयेत् । मेधासूक्तं जपेत् । वायकं दद्यात् ।

Colophon. इति मेधाजननं ॥ उपनयनं ॥ ॥ ।

विवरणम् । उपनयनानुष्ठानस्यापरविधपद्धतिरूपोऽयं निबन्धः ।

---

No. 257. यजुर्व्वेदीयदशकर्म्मपद्धतिः । Yajurvedíya Daśakarma-paddhatiḥ. *Substance, foolscap and country-made yellow paper, 9 × 3 inches.* Folia, 67. Lines, 6–7 in a page. Character, Bengali. Date, B. E. 1285. Appearance, new. Prose. Generally correct. Complete.

A guide to the performance of the ten domestic ceremonies generally known as Daśakarma, as marriage, Upanayana, Garbhádhána, Puñsavana, &c., for the followers of the Yajurveda of the Kanva School, by Paśupati, with an appendix containing an account of certain preliminary rites, as Adhivása, Áyushya-japa,

&c. Paśupati was the chief Pundit in the Court of Lakshman Sen, the last Hindu Prince on the throne of Gaura in Bengal, who was dethroned by Bakhtiyár Khiliji in 1227 A. H. Consequently, Paśupati was a man of the twelfth century, and was at the head of the "nine gems" belonging to the Court of Lakshman Sen. He was contemporaneous with Umápati-dhara, Áchárya Govardhana, and others alluded to in the opening ślokas of the Gítagovinda.

**Beginning.** ॐ नमो गणेशाय । अथ यजुर्वेदिनां दशकर्मपद्धतिर्लिख्यते । तत्र प्रथमं कतिपयदिनभाविनि विवाहे यथाचारविवाहोदकवत्कन्यादान-सम्बन्धिबान्धवादयः पञ्चकुसुमादिकं गृहीत्वा जामातृगृहं गच्छेयुः । तथा च कन्यादानसम्बन्धी कश्चिद् ब्राह्मणः प्रविशन्नेव पश्चिमाभिमुखं जामातृसम्मुखिनं ब्राह्मणं कश्चित् पञ्चकुसुमादिभिरभ्यर्च्य तस्य पाणिपूर्वकं सतिलकुशोदकं दद्यात् ।

**End.** तत आचार्यः प्रणीतोदकेन मार्ज्जनं कृत्वा यथा ॐ सुमित्रिया न आप ओषधयः सन्तु । इति शिष्यमभिषिच्य ॐ दुर्मित्रियास्तस्मै सन्तु । इति भूमौ जलं क्षिप्त्वा ॐ योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः । इति प्रणीताजलमैशान्यां न्युब्जीकृत्वा शिष्यमाशिषं कृत्वा विसर्जयेत् । ततो विवाहपद्धत्युक्तक्रमेण विहारादिभिः शिष्यमर्चयेत् । ततोऽच्छिद्रावधारणं वैष्णवमाख्याय कुर्यात् ।

**Colophon.** इति राजपण्डितश्रीपशुपतिविरचिता यजुर्वेदिकाचारादिभाषाणां विवाहादिदशसंस्कारपद्धतिः समाप्ता ॥

**Beginning of the Appendix.** अथाधिवासोऽभिधीयते । प्रातः कर्मकर्त्ता स्नातः शुचिराचान्तः ॐ तद्विष्णोरिति विष्णुं स्मृत्वा गणेशादिपञ्चदेवताः इन्द्रादि लोकपालान् आदित्यादिनवग्रहान् गुरुं नारायणं ब्राह्मणान् सम्पूज्य अधिवासमङ्गलं कुर्यात् । स्वस्तिकाम् गृहीत्वा ॐ कर्म्मण्यस्मिन् अमुककर्म्माङ्गीभूतशुभदाभ्यादयिवासनकर्म्मणि ॐ पुण्याहं भवन्तोऽधि ब्रुवन्तु । ॐ पुण्याहं इति त्रिः प्रतिब्रूयुः । एवं ऋद्धिं स्वस्ति च वाचयित्वा ॐ स्वस्ति सोम इति पठित्वा "शान्तानां ॐ देवीव इति । कुशतिलयवादि-गङ्गाजलपूर्णं ताम्रपात्रं भूमिसम्प्रजानुः पूर्व्वास्यः गृहीत्वा विष्णुरोम् तत् सदद्यामुकेमासि अमुकराशिस्थे भास्करे अमुके पक्षे अमुकतिथौ अमुक-

गोत्रः श्रीअमुकदेवशर्म्मा अमुकगोत्रस्य अमुकदेवशर्म्मणः अमुककर्म्माङ्गभूतं गणपत्यादिदेवतापूजापूर्व्वकं षष्ठीमार्कण्डेयपूजापूर्व्वकञ्च शुभगन्धाधिवासनकर्म्माहं करिष्ये परार्थे करिष्यामीति विशेषः ।

**End of the Appendix.** ततः आयुष्यमन्त्रं जपेत् । यथा । ॐ आयुर्व्विश्वायुर्व्विश्वं विश्वमायुरशीमहि । प्रजास्त्वष्टभिरधिनिधेह्यस्मे शतं जीवेम शरदोवयन्ते ॥ ॐ आयुषो मे पवस्व वर्च्चसे मे पवस्व विदुः पृथिव्या दिवोजनित्राः । शृण्वन्त्वापोधः क्षरन्तीः सोमोरोदृगाय ममायुषे मम ब्रह्मवर्च्चसाय यजमानस्यार्द्धा अमुष्य राष्ट्राय । अमुष्येत्यत्र यदर्थं हविस्तस्य षष्ठ्यन्तेन नाम प्रयोक्तव्यं । ततो वृद्धिश्राद्धं कृत्वा दक्षिणा देया ॥

**Colophon.** इत्यायुष्यजपः समाप्तः । ० ॥ प्रतिनिधिस्थले सङ्कल्पवाक्यन्तु ॐ अद्येत्यादि अमुकगोत्रः श्रीअमुकदेवशर्म्मा अमुकगोत्रस्य श्रीअमुकदेवशर्म्मणः अमुककर्म्माभ्युदयार्थं गणाधिप गौर्य्यादिषोडशमातृकापूजावसोर्धाराव्यातनायुष्यजपाभ्युदयिकश्राद्धान्यहं करिष्यामि । सन १९८१ ॥ १ रा भाद्र ॥ * ॥

विवरणम् । पण्डितप्रवरश्रीपशुपतिविरचिता यजुर्व्वेदिकाण्वशाखिनां विवाहादिदशकर्म्मपद्धतिरत्र यथाक्रमं विवाहगर्भाधानपुंसवनसीमन्तोन्नयनजातकर्म्मनामकरणनिष्क्रमणान्नप्राशनचूडोपनयनानामनुष्ठानपद्धतिर्वर्ण्यते अन्ते चाधिवासवसुधारायुष्यजपरूपाणां तत् तत् संस्कारपूर्व्वकृत्यानां सम्यगनुष्ठाननियमा विद्यन्ते ।

---

No. 258. व्रतार्कः । Vratárkah. Substance, country-made white paper, 16×6 inches. Folia, 165. Lines, 13-14 in a page. Character, Nágara. Date, ? Appearance, old. Prose. Generally correct. Incomplete.

A digest of matters connected with vows or voluntary rites of penance, under the name of Vratárka, by Sañkara Bhaṭṭa, son of Nílakanṭha Bhaṭṭa.

**Beginning.** श्रीगणेशाय नमः । श्रीसरस्वत्यै नमः । श्रीलक्ष्मीनृसिंहाभ्यां नमः ॥ दिवाकरपदद्वंद्वं फलद्वंद्वप्रदायकम् । त्रैलोक्यतमसोनाशकर्त्तृ तत् प्रणमाम्यहम् ॥ १ ॥ योऽज्ञानप्रतिकरमंदराद्रिमंथैर्निर्मथ्य प्रथितमतां-धकारसिंधुं । लोकेभ्यो वितरति सत्प्रकाशरत्नं तं वंदे सनभावनी विनोदबंधुम् ॥ २ ॥ नामं नामं प्रणामोद्धुरम(र?) चलश्रीषमालिंग-

नेन धाम्यद्भृंगाङ्गभूरिभ्रमजननपरो ज्ञानकोषप्रभांशी । तातश्रीनील-
कंठास्यपदकमलयुग्मं सर्वंगाधायैतत्त्वं कुर्वे श्रीशंकरोऽहं सहृदय-
हृदयाम्भोजतुष्ट्यै व्रतार्कम् । १ । अन्यच्च सकर्त्तव्यविषयो नियतः
संकल्पो व्रतमिति श्रीदत्तः तत्र अग्निहोत्रसंध्यावंदनादिविषये संकल्पे-
ऽतिप्रसक्तेः किं च युक्तव्रतप्रसिद्धिविषयः संकल्पविशेष एव व्रतं न च
व्रतं संकल्पयेदित्यन्वय इति वाच्यं तस्य प्राकंपभृतिदानं दध्यादिव्रता-
त्ययानुप्रदार्थे (?) प्रयोगोपपत्तिरिति तथाः । तत्र व्रतकालमाह
हेमाद्रौ गार्ग्यः । अस्तगे च गुरौ शुक्रे बाले वृद्धे मलिम्लुचे । उद्यापन-
मुपारंभं व्रतानां नैव कारयेत् ॥ तत्रैव बृहन्मनुबृहस्पती । अग्न्याधानं
प्रतिष्ठां च यज्ञदानव्रतानि च । मांगल्यमभिषेकं च मलमासे विव-
र्जयेत् । वलिन्यापदि वा वृद्धे शुक्रे बाले गते गुरौ । मलमासे इव
एतान् वर्ज्जयेद्देवदर्शनम् । लल्लः नीचस्थे वक्रसंस्थेऽप्यतिचरणगते
बालवृद्धास्तगे वा संन्यासो देवयात्रा व्रतनियमविधिः कर्णवेधस्तु दीक्षा
मौञ्जीबंधोऽथ चूडापरिणयनविधिर्वास्तुदेवप्रतिष्ठा वर्ज्याः सद्भिः प्रय-
त्नात्त्रिदशपतिगुरौ सिंहराशिस्थिते चेति नीचस्थो मकरस्थः । कल्पतरौ
देवीपुराणे । सिंहसंस्थं गुरुं शुक्रं सर्व्वारंभेषु वर्ज्जयेत् । प्रारब्धं न
च सिध्येत महाभयकरं भवेत् । पुत्रमित्रकलत्राणि हन्याच्छीघ्रं न संशयः ।
देवारामे तडागेषु प्रतोद्यानमठेषु च ॥ सिंहस्थं मकरस्थं च गुरुं यत्नेन
वर्ज्जयेत् । वसिष्ठः । सिंहस्थं तु मघासंस्थं गुरुं यत्नेन वर्ज्जयेत् ।
अन्यत्र सिंहभागे तु सिंहस्थोऽपि न दुष्यति । सिंहस्थगुरोर्वर्ज्जनीयत्वं
नर्मदोत्तरभागे एव अन्यत्र तु सिंहांशक एव वर्ज्यः तथाच मदनरत्ना-
दिधृतकालविधाने सिंहस्थितः सुरगुरुर्यदि नर्मदायास्तं वर्ज्जयेत् मकरस्थ
कर्मसु सौम्यभागे विंध्यस्य दक्षिणदिशि प्रवदंति चार्य्याः सिंहांशके खग-
पतावपि वर्ज्जनीयमिति सिंहांशस्तु पूर्व्वफाल्गुन्याः प्रथपाद, खगपतौ
गुरौ मकरस्थे शेषेषु मासदलकः (प्रतिप्रसवमासदलकः ?) नर्मदा
पूर्व्वभागेतु *सो (शो ?)* णस्योत्तरदक्षिणे *गंडक्याः पश्चिमे भागे मकरस्थो*
न दोषभागिति ।

End. नास्ति ।

Colophon. नास्ति ।

विवरणम् । नीलकण्ठभट्टात्मजशङ्करभट्टविरचितो व्रतार्को नाम बहुविधव्रतविषयको-
ऽयं निबन्धः ।

---

No. 259. व्रतकालविवेकः। Vratakálavivekah. Substance, country-made yellow paper, 20×2½ inches. Folia, 11. Lines, 3-7 in a page Character, Bengali. Date, ? Appearance, very old, and worn out. Prose Generally correct. Complete.

A work treating of the times and seasons suitable for the performance of religious vows and ceremonial observances, under the name of Vratakálaviveka, by Mahámahopádhyáya S'úlapáṇi.

Beginning. ॐ नमो गणेशाय ॥ नानामुनिमतद्वैधजातसंशयच्छेदनः। व्रतकालविवेकोऽयं क्रियते शूलपाणिना ॥ अथ दीर्घकालानुपालनीयतत्तदिति कर्त्तव्यताकलापोपहितनियतसंकल्पविषयो व्रतमिति व्रतलक्षणम् ॥ व्रतानां संकल्पसम्भवत्वमाह मनुः। संकल्पमूलः कामो वै यज्ञाः संकल्पसंभवाः। व्रतानि यमधर्म्माश्च सर्व्वे सङ्कल्पजाः स्मृताः ॥ व्रतारम्भप्रतिष्ठाकालमाह ज्योतिषं। गुरोर्भृगोरस्तकाले बाल्यं वार्द्धक्ये सिंहगे गुरौ। गुर्व्वादित्ये दशाहे तु वक्रिजीवाष्टविंशके। दिने प्रयोग्यनाथातिचारि गुरुवत्सरे। प्रयोगिगम्बुजीवस्य चातिचारे त्रिपक्षके ॥ सम्याघाङ्गुलसप्ताहे नीचस्थेऽज्ये मलिम्लुचे। भान्वलङ्घितके मासि क्षये राहुयुते गुरौ ॥ पौषादिकचतुर्मासे चरणाङ्कितवर्षणे। एकेनाङ्का चैकदिने द्वितीयेन दिनत्रये ॥ तृतीये न तु सप्ताहे मासत्रयानि जिजीविषुः। विद्यारम्भकर्णवेधौ चूड़ोपनयनोद्वहान् ॥ तीर्थस्नानमनाष्टतं तथाऽन्नादिसुरेक्षणम्। परीचारामयज्ञाश्च पुरश्चरणदीक्षणे ॥ व्रतारम्भप्रतिष्ठे च गृहारम्भप्रवेशने। प्रतिष्ठारम्भने देवकूपादेर्वर्ज्जयन्ति च ॥ द्वाविंशद्दिवसाद्यान्ते जीवस्य भार्गवस्य च। ह्रासप्रतिर्मन्दत्याखे पादान्ते द्वादशक्रमात् ॥ अस्तात् प्राक् परयोः पक्षं गुरोर्बाल्यक वाञ्छते। पक्षं वृद्धो महास्ते तु भृगुर्बालो दशाहिकः ॥ पादान्ते तु दशाहानि वृद्धोबालो दिनत्रयम्। सिंहस्थे गुरौ विशेषस्तु ज्योतिःकौमुद्याम्। गण्डक्या उत्तरे तीरे गिरिराजस्य दक्षिणे। सिंहस्थं मकरस्थञ्च गुरुं यत्नेन वर्जयेदिति।

End यत्तु, समाप्ते तु व्रते तत्र प्रतिष्ठा तदनन्तरम्। न कालनियमस्तत्र विघ्ने पराह्णिके ॥ इति तत्सम्पूर्णदिवसे समयाशुद्धावपि प्रतिष्ठाविषयक वचनं तत्कामधेनुकल्पतरुकारादिभिरलिखितत्वादनाकरं। यद्व्रतं मासवर्षादिकालविशेषनियन्त्रितं काम्यं तस्यैव प्रतिष्ठा यत्पुनः कालविशेषानियन्त्रितञ्च न तस्य प्रतिष्ठा। पूर्व्वोक्ते हयशीर्षीय

काम्यकल्पादिभिरित्यनेन काम्यस्यैव प्रतिष्ठाविधानात् । कालविशेषा-नियन्त्रिते तदसम्भवात् । प्रतिष्ठाविधानञ्च प्रतिष्ठाविवेकेऽनुसन्धेयमिति ॥

Colophon. महामहोपाध्यायशूलपाणिविरचितो व्रतकालविवेकः समाप्तः ॥ * ॥ • ॥ श्रीनारायणशर्म्मणः पुस्तकं स्वाक्षरञ्च । मकरे मूलकं भुक्त्वा सिंहे भुक्त्वा तलाबुकम् । कार्त्तिके मूलकं भुक्त्वा परंचान्द्रायणव्रतम् ॥ इति पठन्ति ।

विवरणम् । महामहोपाध्यायशूलपाणिविरचितो व्रतकालविवेकोनाम व्रतानुष्ठानयोग्या-योग्यसमयनिरूपणविषयकोऽयं निबन्धः ॥

---

**No. 260.** व्रतकालविवेकः । Vratakálavivekaḥ. *Substance*, country-made white paper, 18×4½ inches. Folia, 10. Lines, 7 in a page. Character, Nágara. Date, Samvat 1834. Appearance, fresh. Prose Generally correct. Complete.

Another complete copy of the same work.

विवरणमुक्तपूर्व्वम् ।

---

**No. 261.** बुधाष्टमीव्रतम् । Budháshṭami-vratam. Substance, country-made colourless paper, 16×2 inches. Folia, 6 Lines, 7–8 in a page. Character, Bengali Date, ? Appearance, very old, worn out, torn, and the writing slightly effaced in parts Prose. Generally correct. Complete.

*A guide to the performance of the religious observance called Budháshṭami to be performed when the eighth lunar day of the full moon falls on a Wednesday of any month.*

Beginning. ॐ नमोगणेशाय ॥ अथ बुधाष्टमीव्रतम् । तत्र प्रथमं यस्मिन् मासे शुक्लपक्षे बुधवारे अष्टमीतिथिर्भवति । तस्मैव व्रतं कुर्य्यात् । तत्र प्रातः सप्तम्यां संयतो भूत्वा अष्टम्यां प्रातः स्वस्ति संवाच्य सङ्कल्पं कुर्य्यात् ॥ तद्यथा ॥ ॐ तत्सदद्यके मासि शुक्ले पक्षे बुधवारे अष्टम्यां तिथौ अमुकगोत्रः श्रीअमुकदेवशर्म्मा अमुकीदेवी वा ऐहिक नानासुखभोगा-नन्तर कपिलाशतप्रदानसुवर्णशतदानअश्ववाजिमहेवनरकेन्द्रादामन्त्र-फलसमफलवापीकूपतडागशिवलिङ्गप्रतिष्ठापनसमफलप्राप्तिकामनया गणेशादिसप्तदिक्पालानां पूजापूर्व्वकतत्तदानकथाश्रवणात्मकबुधाष्टमी-व्रतमहं करिष्ये ।

**End.** यम उवाच । अपरस्याप्युपायोऽस्ति ब्राह्मणीमथुरापुरे । धनी प्रभाकरो नाम ब्राह्मणो तस्य गर्भिणी । पतिव्रता च विख्याता सा चकार बुधाष्टमीं । सा च कष्टवती भद्रे वर्त्तते गर्भवेदना ॥ भूत्वा गोपालिका-रूपं त्वं गच्छ तत्र वै ध्रुवम् । कृत्वा प्रपञ्चनावृ हिमुपायत्वं प्रवच्यसे । अभिनन्द्य जलं शीघ्रं त्वच्च तस्यै प्रदास्यसि । यमस्य वचनं श्रुत्वा कृत्वा तद्रूपमुत्तमम् ॥ द्रुतं तस्याश्रमं गत्वा विजया चापि सत्वरा । अथ सा ब्राह्मणी रुग्ना पूर्त्तापि दिनत्रयम् ॥ तस्याश्च वेदनां दृष्ट्वा विजया वाक्यमब्रवीत् । गोपालिकोवाच । मन्त्रौषधिमहं जाने प्रसवे कुशला-प्यहम् । सोपायवचनं श्रुत्वा सादरा सातिवासिनी ॥ महतीं वेदनां दृष्ट्वा उवाच विनयोदितम् । सर्व्वमधिगतं विप्र यदस्याः प्रसवचणम् ॥ कुक्ष्या च व्यथया विप्र बालकश्च न दृश्यते । एकमस्ति महोपायं शृणु विप्र मयोदितम् ॥ जीवनाय त्वमुत्सृष्टां एकां देहि बुधाष्टमीं । तदेव जीवनह्यास्याः प्रसवश्च भविष्यसि ॥ ब्राह्मण्युवाच । गच्छ गोपालिके नाच श्रूयतां कुत्सितं वचः । एतद्व्रतं न दास्यामि प्राणान्तेऽपि बुधा-ष्टमी ॥ गोपालिकोवाच । जीवितेन लभेत् धर्म्मं जीवितेन सुखं लभेत् । जीवितेन गृहं तेरुतस्मात् धार्य्यमिदं वपुः ॥ एकं दत्त्वा लभेत् पञ्च जीवितेन न संशयः । विनीता तेन शूलार्त्ता स्वयञ्च पञ्चधाप्यथ ॥ ब्राह्मणी सा तदा भक्त्या गोपालिन्या प्रबोधिता । कुशोदकं गृहीता च तया दत्ता बुधाष्टमी ॥ ततः सा बिजया प्रादात् पानीयमभि-मन्त्रितम् । अभिवन्द्य जलं पीत्वा ब्रह्मणी प्रसवेत् सुतम् ॥ यत्क्षणात् विजया शीघ्रं गता सा निजमन्दिरम् । ततो मातापिता चैव दिव्य-देहसुखान्वितौ ॥ लभेत् शीघ्रं ततः स्वर्गं बुधाष्टमीप्रसादतः । समा-हितमना भूत्वा यः करोति बुधाष्टमीं ॥ ईप्सितं लभते कामं स्वर्गं गच्छेन्न संशयः । वापीकूपसहस्रस्य शिवलिङ्गशतस्य च ॥ दानस्य फल-माप्नोति कृत्वा भक्त्या बुधाष्टमीं । कपिलायाः सहस्राणां दानेन यत्-फलं भवेत् । तद्दानफलमाप्नोति कृत्वा भक्त्या बुधाष्टमीं ॥ गजवाजि-सहस्रस्य कन्यादानशतस्य च । तद्दानफलमाप्नोति कृत्वा भक्त्या बुधाष्टमीं ॥

**Colophon** इति श्रीब्रह्मपुराणे बुधाष्टमीव्रतकथा समाप्ता । द्विजेन्द्रबुधसंयुक्ता या च पूर्णा सिताष्टमी । षष्टिदण्डात्मिका कार्य्या न तु खण्डे कदाचन ॥ इति शिवपुराणे ।

विवरणम् । बुधाष्टमीव्रतानुष्ठानपद्धतिरूपोऽयं निबन्धः ब्रह्मपुराणसंगृहीतः ।

**No. 262.** एकादशीतत्त्वम् । Ekádaśítattwam. Substance, foolscap paper, 15×4 inches. Folia, 57. Lines, 6 in a page. Character, Bengali. Date, ? *Appearance, fresh. Prose. Generally correct.* Incomplete.

A work treating of Ekádaśí-upavása, or the fast on the eleventh or twenty-sixth day of the lunar month, under the name of Ekádaśí-tattwa by Raghunandana of Bengal. It forms a part of his Smṛititattwa series. It has been recently published with the glossary of Káśináthа in the Devanágara character, with the help of Viśwanáth's fund.

**Beginning.** ॐ नमो गणेशाय । प्रणम्य सच्चिदानन्दं परमात्मानमीश्वरम् । मुनीन्द्राणां मतेस्तत्त्वं वक्ति श्रीरघुनन्दनः ॥ अज्ञानतिमिरध्वंसि हरिपादनखत्विषम् । नत्वा वच्मि स्मृतेस्तत्त्वमेकादशीव्रतादिषु ॥ एकादशीव्रत तत्र कर्त्तव्यत्वनिर्णयः । पूर्णकामे तु संक्रान्तेर्विहितं प्रतिषेधनम् ॥ व्रतस्य लक्षणं तत्र दन्तसम्मार्ज्जनं तथा । वैदिके कर्म्माभावे च नारायणमतिस्मृती ॥ विष्णुनामानि श्राद्धार्थे तथाच्छिद्रावधारणम् । ॐ तत्सदिति निर्देशः कर्म्मणां प्राग् भवेद्व्रतम् ॥ संकल्पविषयो नित्यं काम्यमेकादशीव्रतम् । वृद्धिश्राद्धस्य विषय उपवासप्रसङ्गतः ॥ दयादि लक्षणान्यत्र व्रते गन्धादिवर्ज्जनम् । अशक्तौ व्रतेऽभिगामित्वं श्राद्धादि नैव तद्भवेत् ॥ चतुर्थादिपरित्यागः प्रशस्तसुतकाङ्क्षिणः । एकादशीभोजनेषु निन्दानित्यत्वसाधकम् ॥ नित्यं सन्ध्यादिविश्वजिद्यावज्जीवनयोस्तथा । अशक्तौ मनसा कर्म्म नित्यात् पापक्षयादिकम् ॥ एकादशीव्रतफलं रात्रिसत्रमयस्तथा । न्यायः संयोगपार्थक्ये वृद्धिश्राद्धस्य सर्व्वदा ॥ एकस्य नित्यकाम्यत्वे न योषिद्भ्यो विवेचनम् । उपवासाधिकारी च कृष्णाद्यामधिकारिता ॥ वैष्णवानां सपुत्राणां तथा वैष्णवलक्षणम् । नित्योपवासे रव्यादिदोषाभाव उपोषणम् ॥ सप्तवारांस्तथाश्रेयः पित्रोश्च उपोषणे । पूर्वतिथिस्वरूपस्य पूर्णोपवासनिर्णयः ॥ विद्धैकादशी चैव दशम्या संयुता सदा । नोपास्या तासु संक्षेपो दशमी नियमस्तथा ॥ एकादश्यान्तु संकल्पः श्रीशपूजाविवेधनम् । षट्त्रिंशदुपचारादिकपर्व्वनिरूपणम् ॥ द्वादशीनियमस्तद्वदुपवाससमर्पणम् । पारणायास्तथा काले सङ्कटे जलपारणम् ॥ तुलसीमहिमा तत्र तथा चक्राद्यधारणम् । स्वदत्तदेवनैवेद्याद्युपयोगस्त्रियस्तथा ॥ श्राद्धपिण्डादनन्तत्र कूपादित्यागयोग्यता । त्वमनुत्तचोपयोगश्च रज. छत्रकिमीर्तनम् ॥ उपवासानुकल्पश्च

मयैवेह व्यवस्थितः । एकभक्तं नक्तानशं हविष्यद्रव्यनिर्णयः । मिश्रधान्यस्य भक्तत्वं प्रतिनिध्यविवेचनम् । चान्द्रायणादौ ग्रामानां परिसंख्या व्यवस्थितिः ॥ पारणा नियमः पाने त्वप्रमत्तपमनशनाने (?) । व्यवस्थाः शयनादीनां कथ्यन्तेऽद्य जगत्पतेः ॥

End. नास्ति ।

Colophon. नास्ति ।

विवरणम् । स्मार्त्त श्रीरघुनन्दनभट्टाचार्य्यविरचितः एकादशीतत्त्वाख्य एकादशीविचारविषयकोऽयं निबन्धः । सुप्रसिद्धोऽयं मुद्रितश्च बहुनागराक्षरयोः ॥

---

No 263. एकादशीतत्त्वम् । Ekádaśitattwam. Substance, country-made red paper, 18×2½ inches. Folia, 43 Lines, 6–8 in a page. Character, Bengali. Date, ? Appearance, old. Prose. Correct. Complete.

Another complete copy of the same work

End. हरिनाथोपाध्यायस्तु । यमः । क्षीराब्धौ शेषपर्य्यङ्के आषाढ्यां संविशेद्धरिः । निद्रां त्यजति कार्त्तिक्यां तयोस्तं पूजयेत् सदा । ब्रह्महत्यासमं पापं क्षिप्रमेव व्यपोहति । हिंसात्मकैस्तु किं तस्य यज्ञैः कार्य्यं महात्मनः । प्रस्वापे च प्रबोधे च पूजितो येन केशवः । आषाढ़शुक्लैकादशीमारभ्य पौर्णमासीपर्य्यन्तं विष्णोर्निद्राप्रवृत्तपशयनसमयः । अतएवैकादश्यां शयनमभिधाय तदादि दिनपञ्चके कर्म्मकथनम् ॥ ब्रह्मपुराणे । वराहपुराणे तु । एकादशीकालीनमत्र निद्राप्रवृत्ताभिधानं यम स्मृतौ तु पौर्णमास्यां शयनाभिधानं । आषाढ़ीपदस्यानुपपत्तेः तत्रैवप्रवृत्तेः । एवञ्च ब्रह्मपुराणे । यद्यप्येकादश्यां प्रबोधनमुक्तं तथापि तदादि दिनपञ्चक एव प्रबोधयत्नः । तेन वराहपुराणे प्रबोधाभिधानं । यमस्मृतौ कार्त्तिक्यां प्रबोधनाभिधानं समञ्जसमिति । एवमेव श्रीदत्तोपाध्यायाः । कल्पतरुकृतस्तु एकादश्यामेव शयनं प्रबोधञ्च यमस्मृतावाषाढ़ी कार्त्तिकीपदमेकादशीपरं । आषाढ़स्येयं कार्त्तिकस्येयमिति व्युत्पत्त्या न तच्छब्दप्रत्ययापत्तिः अपवादविषये क्वचिदुत्सर्गप्रवृत्तिरित्याहुः । श्रीभगवद्वाक्यं । मत्शयने मदुत्थाने मत्पार्श्वपरिवर्त्तने । नरो मूलफलाहारी हृदि शल्यं समर्पयेत् ॥ फलाहारपदमनशनमभिधानेन सर्व्वथा त्वनशनपरत्वं । अत्र मलमासादिकृतविशेषो मलिम्लुच-

तत्त्वेऽनुसन्धेयः । इति शिवम् । विरुद्धं गुरुवाक्यस्य यद्च भाषितं मया ।
तत्क्षन्तव्यं बुधैरेतत् स्मृति तत्त्वबुभुत्सया ॥ ० ॥

Colophon. इति वन्द्यघाटीय श्रीहरिहरभट्टाचार्यात्मजश्रीरघुनन्दनभट्टाचार्यविरचितं स्मृतितत्त्वे एकादशीतत्त्वं समाप्तम् ॥ ० ॥

विवरणम् । स्मार्त्तं श्रीरघुनन्दनभट्टाचार्यविरचितैकादशीतत्त्वस्य सम्पूर्णपुस्तकमेतत् ॥

---

No. 264. एकादशीनिर्णयः । Ekádaśínirṇayaḥ Substance, country-made Kaśmiri paper, 5 × 3½ inches. Folia, 8. Lines, 4–16 in a page. Character, Nágara. Date, ? Appearance, very old, and worn out. Prose Generally correct. Complete.

An exposition of the sixteen memorial verses known as Krishṇámṛita on the greatness of Ekádaśí by Hari, son of Narasiṁha.

Beginning. श्रीमध्वगुरवे नमः ॥ श्रीमन्नृसिंहदेवेशं भक्तानामभयप्रदम् । श्रीमध्वनाथं वंदेऽहं मध्ववाक्यार्थसिद्धये ॥ १ ॥ कृष्णातीर विराटस्थे पाण्डुपीठकुलोद्भवे । हर्याख्ये मंदबुद्धौ सज्जनाः चतुमर्हथ ॥ २ ॥ कृष्णामृतस्य वाक्यार्थो लिख्यते ॥ स्मृतः ॥ ज्ञात्वा विप्रामिथिं सम्यग्दैवज्ञैः समुदीरिताम् । कर्त्तव्य उपवासस्तु अन्यथा नरकं भवेत् ॥ १ ॥ दैवज्ञैरिति ॥ सिद्धांतज्ञाः ॥ ब्राह्मणाः पद्मागदर्यादूर्द्धं कल्पादौ वेदोद्धारार्थं ॥ लक्ष्मीपतेः श्रीमन्नारायणस्य चयोवतारः प्रोक्ताः ॥ ते के ॥ मत्स्यावतारः ॥ हयग्रीवावतारः । व्यासावतारः ॥ अष्टादशपुराणात् पूर्वं व्यासेनादौ अष्टसिद्धांताः कृताः ॥ तेषु मध्ये त्रयः सिद्धांताः प्रसिद्धाः ॥ ते के ॥ तत्र कृतादौ ब्रह्मसिद्धान्त ब्रह्मनारदसंवादः ॥ ततः पाराशरस्यार्यसिद्धांता व्यासान्यऋषिसंवादः ॥ ततः सूर्यसिद्धांतः सूर्यमायासुरसंवादः ॥ कलियुगमध्ये भास्कराचार्येण सिद्धांतशिरोमणि कृतः ॥ ब्रह्मसिद्धांतसंमतकरणकुतूहलग्रंथः ॥ आर्य्यभट्टसिद्धांतसंमत करणप्रकाशग्रंथः ॥ सूर्यसिद्धांतसंमतकरणार्थवादिग्रंथाः सिद्धांतशिरोमणिसंमत प्रहलाघवग्रंथ. ॥ अथैकादश्या निर्णये आर्य्यभट्टशास्त्रज्ञैर्देवज्ञान् प्रतिकथं प्रश्नः कार्यः ॥ सूर्योदयादुपरि दशमी कियद्घटिका इति प्रश्नः कार्यो वा ॥ सूर्योदयात् प्रागेकादशी कियद्घटिका इति प्रश्नः कार्यो वा ॥ अन्यसिद्धांतभ्रांत्यद्भा आर्य्यभट्टसिद्धांतज्ञान् प्रति प्रश्नः

कुतः । अत्र प्रमाणम् ॥ शौरं मतं सदा पार्थ सदाचारोऽत्र शोभते सर्व्वधर्म्मेषु कः श्रेयान् विष्णुधर्म्मेषु योऽधिकः ॥

**End.** द्रवस्तुलक्षणमुच्यते । किमिति ॥ अखंडदंडायमानेनाहोरात्रप्रमाणस्य नदीरूपस्य नष्टोदयद्वयस्य घटिकाप्रमाणेन पलद्वयेन द्रवः प्रोक्तः । घनसो घटिकानां द्रवपलान्यष्टौ । सूक्ष्मकालत्वादधिकानि पलद्वयान्यङ्गीकार्य्यं श्लोकेषूक्तानि । तथा भूम्याः पूर्व्वपश्चिमदेशभेदतार्थं वा दशपलान्युक्तानि । एकादश्याः सूर्य्योदयात् दशपलाधिकपञ्चषष्टिघटिकाः यदा तदा शुद्धैकादशी । नवपलाधिका यदा तदा विद्धैकादशी । गतघटिकाः षष्टिशोधिताः पूर्व्वदिने दशमी पंचपंचाशद्घटिकाः पंचाशद्दिनाड़िकाः प्राप्ता यदा तदा शुद्धैकादशी । एकपंचाशद्दिनाड़िकाः यदा तदा विद्धैकादशी । विद्धा त्याज्या शुद्धा ग्राह्येत्यभिप्रायः । पंचपलोनित षट्पंचाशद्घटिकाः । भट्टेनोक्ताः । कस्मादरुणोदयस्य चतस्रोघटिकास्तावद्दिनान्यूनतः ॥ उक्ताः इति ज्ञात्वा स्वाभिप्रायः प्रकाशितः । छ ॥

**Colophon.** इति श्रीवैराटस्थाटपुत्रेण नरसिंहदासजेन हरिदासकृष्णामृतस्य षोडशश्लोकस्यैकादशीविषयेऽभिप्रायः कृतः । शुभं भवतु ॥

विवरणम् । नृसिंहदासजहरिविरचित एकादशीनिर्णयाख्यो नाम कृष्णामृताख्यषोडशश्लोकीरूपनिबन्धविशेषकस्यैकादशीविषयव्याख्यात्मकः सन्दर्भविशेषः ॥

---

**No. 265.** एकादशीमाहात्म्यम् । Ekádaśí Máhátmyam. Substance, country-made white paper, 10×4 inches. Folia, 7. Lines, 8–10 in a page. Character, Nágara. Date, ? Appearance, very old. Verse. Correct. Incomplete, as regards the whole, but complete so far as the parts contained in it are concerned.

Extracts from the Puránas in celebration of the greatness of the lunar eleventh day, Ekádaśí. The work consists of several parts, each part treating of a different Ekádaśí. These are twenty-four in number. The codex under notice contains only four parts, treating of the Ekadaśís that occur in the months of Vaiśákha and Jyaishtha.

**Beginning.** श्रीगणेशाय नमः ॥ नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् । देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ १ ॥ श्रीयुधिष्ठिर उवाच ॥ वैशाखस्यासिते पक्षे किं नामैकादशी भवेत् । महिमानं कथय मे वासु-

देव नमोऽस्तु ते ॥ ३ ॥ श्रीकृष्ण उवाच ॥ सौभाग्यदायिनी राजन्निह-लोके परत्र च । वैशाखकृष्णपक्षे च नाम्ना चैव वरूथिनी ॥ २ ॥ वरू-थिन्या व्रतेनैव सौख्यं भवति सर्व्वदा । पापहानिश्च भवति सौभाग्यप्राप्ति-रेव च ॥ ३ ॥ दुर्भगा या करोत्येनां सा स्त्री सौभाग्यमाप्नुयात् । सलो-कानां च सर्व्वेषां भुक्तिमुक्तिप्रदायिनी ॥ ४ ॥

End. यत्फलं संनिहत्यायां राहुग्रस्ते दिवाकरे । कृत्वा श्राद्धं लभेन्मर्त्ये-स्तदस्याः श्रवणादपि ॥ नियमं च प्रकर्त्तव्यं दन्तधावनपूर्वकम् । एका-दश्यां निराहारोवर्त्तयिष्यामि वै जलम् ॥ केशवप्रीणनार्थाय अन्य-दाचमनादृते । द्वादश्यां देवदेवेश पूजनीयस्त्रिविक्रमः ॥ गंधैः पुष्पै-र्धूपदीपैः वासोभिः प्रियदर्शनैः । पूजयित्वा विधानेन मंत्रमेतदुदी-रयेत् ॥ देवदेव हृषीकेश संसारार्णवतारक । उदकुंभप्रदानेन प्रयद-परमां गतिम् ॥ ततः कुंभः प्रदातव्यो ब्राह्मणाय च शक्तितः । माल्य-वस्त्रयुतो भीम छत्रोपानद्युगान्वितः ॥ दानानि चात्र देयानि यत्र धेनुर्विशेषतः । भोजयित्वा ततो विप्रान् स्वयं भुञ्जीत वाग्यतः ॥ एवं यः कुरुते पूर्णां द्वादशीं पापनाशिनीम् । सर्वपापविनिर्मुक्तः पदं गच्छत्यनामयम् ॥ ततः प्रभृति भीमेन कृता ह्येकादशी शुभा । पांडव-द्वादशीनाम्ना लोके ख्याता बभूव तु ॥ ५४ ॥

Colophon. इति श्रीब्रह्मवैवर्त्तपुराणे निर्जलज्यैष्ठशुक्लैकादशीमाहात्म्यं समाप्तम् ॥

विवरणम् । एकादशीमाहात्म्यं नाम सांवत्सरिकयावदेकादशीमाहात्म्यसूचकविविध-पुराणसंग्रहीतवचनसङ्कलनात्मकोनिबन्धविशेषः । पुस्तकेऽस्मिन् वैशाखज्यैष्ठैकादशीमाहात्म्य-मात्रं विद्यते ।

---

No. 266. आषाढ़कृष्णैकादशीमाहात्म्यम् । *Áshádhakrishnaikádaśí Máhátmyam.* Substance, country-made white paper, 9 × 2½ inches. Folia, 2. Lines, 10–12 in a page. Character, Nágara. Date, ? Appearance, very old. Verse. Correct. Complete.

A part of the work noticed above, quoting verses from the Puránas on the greatness of the eleventh day of the dark lunar fortnight in the month of Áshádha.

Beginning. श्रीगणेशाय नमः ॥ युधिष्ठिर उवाच ॥ ज्यैष्ठशुक्लनिर्जलाया माहात्म्यं च श्रुतं मया । आषाढ़कृष्णपक्षे तु किंनामैकादशी भवेत् ॥ कथयस्व

प्रसादेन समापे मधुसूदन । श्रीकृष्ण उवाच ॥ व्रतानामुत्तमं राजन् कथयामि तवाग्रतः । सर्वपापक्षयकरं भुक्तिमुक्तिप्रदायकम् । आषाढस्यासिते पक्षे योगिनी नाम नामतः । एकादेव नृपश्रेष्ठ महापातकनाशिनी । संसारार्णवमग्नानां पोतभूता सनातनी । जगत्त्रये सारभूता योगिनी व्रतकारिणाम् ॥ कथयामि तवाग्रेऽहं कथां पौराणिकीं शुभाम् ।

End अतो व्रतोपदेशं ते कथयामि शुभप्रदम् । आषाढे कृष्णपक्षे त्वं योगिनीव्रतमाचर । अस्य व्रतस्य पुण्येन कुष्ठं यास्यति ते ध्रुवम् । इति वाक्यमृषेः श्रुत्वा दंडवत् पतितः क्षितौ । उत्थापितः स मुनिना बभूवातीव हर्षितः । मार्कंडेयोपदेशेन कृतं तेन व्रतोत्तमम् । तद्व्रतस्य प्रभावेन (च ?) देवरूपोबभूव सः । संयोगं कांतया लेभे बुभुजे सौख्यमुत्तमम् ॥ ईदृग्विधं नृपश्रेष्ठ कथितं योगिनीव्रतम् । अष्टाशीतिसहस्राणि द्विजान् भोजयते तु यः ॥ तत्फलं समवाप्नोति योगिनीव्रतकृन्नरः । महापापप्रशमनी महापुण्यफलप्रदा । शुभा कृष्णैकादशी ते कथिता योगिनी नृप । पठनाच्छ्रवणात् मर्त्यः सर्वपापैः प्रमुच्यते ।

Colophon. इति श्रीब्रह्मवैवर्तपुराणे आषाढकृष्णपक्षे योगिन्येकादशीमाहात्म्यं समाप्तम् । शुभमस्तु चिराय नमः गोविंदाय नमः शिवाय नमः रामाय नमः ।

विवरणम् । आषाढकृष्णैकादशीमाहात्म्यरूपोऽयं निबन्धः ।

---

No 267. आषाढकृष्णैकादशी । Ashadhakrishnaikádaśí. Substance, Kaśmiri paper, 10×3 inches. Folia, 2 Lines, 10–11 in a page. Character, Nágara. Date, Samvat 1901. Appearance, fresh. Generally correct Complete.

Another copy of the same work.

Colophon. इति श्रीब्रह्मवैवर्तपुराणे आषाढकृष्णा योगिणी (नी ?) नाम्नैकादशीमाहात्म्यम् समाप्तिमगमत् ॥ मासोत्तमे मार्गशीर्षे मासि कृष्णपक्षे ॥ तिथावमायां ॥ सौमे पयसिजयकृष्णमिश्रेणालेखि ॥ (सं १९०१) ।

विवरणम्मूलपूर्वम् ।

---

No. 268. श्रावणकृष्णैकादशीमाहात्म्यम् । Sravaṇakṛishnaikádaśi Máhátmyam. Substance, country-made white paper, 9×2½ inches Folia, 1. Lines, 6–12 in a page. Character, Nagara. Date, ? Appearance, very old. Verse. Correct Complete.

Extracts from the Brahma-vaivarta Puráṇa on the greatness of the eleventh day of the lunar dark fortnight of the month of Srávana.

Beginning. श्रीगणेशाय नमः । नारद उवाच कथ्यतां चैव भोः स्वामिन् पिता त्वं पितामह । सर्व्वसृष्टिप्रकर्त्ता त्वं देवकीनंदनप्रियः । श्रावणस्यासिते पक्षे का च एकादशी भवेत् । किं नामकोविधिस्तस्या एतद्विस्तरतोवद । ब्रह्मोवाच । श्रावणस्यासिते पक्षे कमला नाम नामतः । यस्याः श्रवणमात्रेण वाजपेयफलं लभेत् ॥ तस्यां यः पूजयेद्देवं शंखचक्रगदाधरं । वन्दे दामोदरं देवं माधवं मधुसूदनम् ॥ यजते ध्यायते चैव तस्य पुण्यं शृणुष्व मे । काश्यां चैव गयायांच नैमिषे पुष्करे तथा । यत्फलं लभते मर्त्त्यस्तत्फलं कृष्णपूजने । गोदावर्य्यां गुरौ सिंहे व्यतीपाते च दंडके । यत्फलं समवाप्नोति तत्फलं कृष्णपूजने ॥ समागरवनोपेतां धरां दद्याच्च योनरः । अभयस्य प्रदानेन तत्पुण्यममला भवेत् ।

End. मौक्तिकं चैव रत्नञ्च वैदूर्य्यंच प्रवालकं । एकतस्तुलसीपत्रं विष्णोः प्रीतिकरं स्मृतं । तुलस्या मंजरीभिश्च यो नरः पूजयेद्धरिं । तस्य पुण्यस्य संख्यायां चित्रगुप्तो न शक्तिभाक् । एकादश्यां दिने मर्त्यो घृतदीपं ददाति यः । स याति परमं स्थानं वैकुण्ठं चातिशोभनम् । तस्य पुण्यस्य संख्यां च न लिखेच्चित्रगुप्तकः ॥ कृष्णाग्रे दीपकं यस्तु पितॄनुद्दिश्य योऽर्पयेत् । स पितॄन् तारयेत् सर्व्वान् दशपूर्व्वान् दशापरान् । एतत् पुण्यं मही-नाथ दीपदस्य नरस्य च । किं प्रवक्ष्यामि भो वत्स पुण्यात् पुण्यतमं स्मृतम् ॥ एतस्मात् कारणात् सर्व्वैः कर्त्तव्या च प्रयत्नतः । विष्णुलोकं समाप्नोति सर्व्वपापैः प्रमुच्यते ॥

Colophon. इति श्रीब्रह्मवैवर्त्तपुराणे कृष्णैकादशीमाहात्म्ये कमलाख्यं सम्पूर्णम् । शुभम् ।

विवरणम् । कमलाख्यश्रावणकृष्णैकादशीमाहात्म्यरूपोऽयं निबन्धः ।

---

No. 269. श्रावणकृष्णैकादशी । Sravanakṛishnaikádaśí. Substance, country-made coloured and white paper, *10×5 inches.* *Folia*, 2. *Lines*,

10–11 on a page. Character, Nágara. Date, Samvat 1874. Appearance, fresh. Verse. Generally correct. Complete.

Another copy of the same work.

विवरणग्रन्थपूर्वम् ।

---

**No. 270.** श्रावणशुक्लैकादशी । *S'rávanaśuklaikádaśí.* Substance, country-made white paper, $7 \times 2\frac{1}{2}$ inches. Folia, 4. Lines, 3–8 in a page. Character, Nágara. Date, Samvat 1802. Appearance, very old, and worn out. Verse. Correct. Complete.

Extracts from the Bhavishyottara Purána, on the greatness of the white eleventh day of the month of S'rávaṇa.

Beginning. श्रीगणेशाय नमः ॥ युधिष्ठिर उवाच ॥ श्रावणस्य सितेपक्षे किन्नामैकादशी भवेत् ॥ कथयस्व प्रसादेन ममाग्रे मधुसूदन ॥ श्रीकृष्ण उवाच ॥ शृणुष्वावहितो राजन् कथां पापहरां शुभां । यस्याः श्रवणमात्रेण वाजपेयफलं भवेत् ॥ द्वापरस्य युगस्यादौ पुरा माहिष्मती पुरी । राजा महीजिदाख्यातो राज्यं पालयति स्वकं ॥ पुत्रहीनस्य तस्यैव न तद्राज्यं सुखप्रदं ॥ अपुत्रस्य सुखं नास्ति इह लोके परे तथा ॥ यततोऽस्य सुतप्राप्त्यै कालोवहुतरोगतः । न प्राप्तश्च सुतोराज्ञा सर्वसौख्यप्रदोनृणाम् ॥ दृष्ट्वात्मानं प्रथमं राजा चिंतापरोऽभवत् । सभामतः प्रजामध्ये इदं वचनमब्रवीत् ॥ इह जन्मनि भो लोका न मया पातकं कृतं ॥ अन्यायोपार्जितं वित्तं क्षिप्तं कोषे मया नहि ॥ ब्रह्मस्वं देवद्रविणं न गृहीतं मया क्वचित् ॥ न्यासापहारोन कृत. परस्य वहुपापदः ॥ पुत्रवत् पालिता लोका धर्मेण विजिता मही । दुष्टेषु पातितो दंडो बंधुपुत्रोपमेष्वपि ॥ शिष्टाः संपूजिता नित्यं देव्या वापि मया जनाः ॥ इत्येवं व्रजतोमार्गे धर्मयुक्ते द्विजोत्तमा. ॥ कस्मान्मम गृहे पुत्रो न जातस्तद्विचिन्त्यतां ॥

End. ॥ लोमश उवाच ॥ श्रावणे शुक्लपक्षेतु पुत्रदानाय विश्रुता ॥ एकादशी योषितदा कुरुध्वं तद्व्रतं जनाः ॥ यथाविधि यथान्यायं यथोक्तं जंमराक्षितं(?) ॥ तस्य पुण्यं सुविमलं दद्युर्नृपतये जनाः ॥ एवं कृत्वा सुनिमतं राज्ञः पुत्रोभविष्यति ॥ श्रुत्वा ते लोमशवचनं प्रणम्य द्विजोत्तमं ॥ जग्मुः स्वे स्वे गृहे सर्वे हर्षोत्फुल्ललोचनाः ॥ श्रावणतु समासाद्य श्रुत्वा लोमशभाषितं ॥ राज्ञा सह व्रतं चक्रुः सर्वे श्रद्धासमन्विताः ॥ द्वादशीदि-

यमे पुत्रं मंददुर्नृपते कनाः ॥ दत्ते पुण्येथ सा राज्ञी गर्भमापत्तु शोभनम् ॥ परिपूर्णे यदा गर्भं काले पुत्रमजीजनत् ॥ एवंचापि हि राजेन्द्र पुत्रदा नाम नामतः । कर्तव्या पापनाशाय पुत्रप्राप्त्यै नरोत्तमः ॥ एकाग्रमनसा राजन् ये कुर्वंति नरोत्तमाः । तेषांच पुत्रपौत्राय संभवंति सहस्रशः ॥ पठनाच्छ्रवणाद्राजन् सोमयज्ञफलं लभेत् ॥

Colophon. इति श्रीभविष्योत्तरपुराणे पुत्रदा श्रावणशुक्लैकादशी समाप्ता ॥ १ ॥ श्रीरामाय नमः लिखितं शिवप्रसादमिश्रेण संवत् १८०१ शा. ह.।

विवरणम् । श्रावणशुक्लैकादशीमाहात्म्यं भविष्योत्तरपुराणसंगृहीतम् ।

---

No. 271. श्रावणशुक्लैकादशीमाहात्म्यम् । Srávaṇaśuklaikádaśí Máhátmyam. Substance, Kaśmírí paper, 10×4 inches. Folia, 3 Lines, 8 in a page. Character, Nágara. Date, Samvat 1670. Appearance, fresh. Verse. Correct. Complete.

Another complete copy of the same work, having the following hemistich added at the end.

"श्रामं संपूज्य विधिवद्धनधान्यहिरण्यकैः" ॥ ४९ ॥

Colophon. इति श्रीभविष्योत्तरपुराणे पुत्रदा श्रावणशुक्लैकादशी सम्पूर्णा ॥ लिखितं पयाशिमिश्रोपनामकजयकृष्णेन ॥ संवत् ॥ १८७० ॥ श्रावणे मासि ॥ शुक्लपक्षे ॥ तिथौ ॥ दशम्याम् ॥ १० ॥

विवरणमुक्तपूर्वम् ।

*Note.*—This codex has an extra page containing the latter part of the Kartikaśuklaikádaśí called Prabodhiní.

पुस्तकेऽस्मिन् कार्त्तिकशुक्लैकादशीमाहात्म्यान्तिमपत्रं विद्यते ।

No. 272. श्रावणकृष्णैकादशीमाहात्म्यम् । Srávaṇakṛishṇaikádaśí Máhátmyam. Substance, Kaśmírí paper, 10×4 inches. Folia, 7 (of which foll. 1–4 are wanting). Lines, 5–9 in a page Character, Nágara. Date, Samvat 1901. *Appearance, fresh. Verse. Correct Incomplete.*

A collection of verses from the Bhavishya Purána, on the greatness of the dark eleventh lunar day of the month of Srávaṇa.

Beginning. नास्ति ।

End. श्रीकृष्ण उवाच। इति श्रुत्वा मुनिवचोमत्वा च शिरसा नृपः। राज्ञा सह तथा चक्रे विमलैकादशीव्रतम्। ४५। ततश्च मुनिनाथश्री स्वपुरं गन्तु-मुद्यतौ। अमात्यैः पौरकजनैः पूजितौ तौ गतौ गृहम्। ४६। तेन व्रतप्रभावेण ह्यवन्धः शरणं ययुः। चंद्रसेनोपि तद्राज्यं तैर्नेता तु समर्पितम्। ४७॥ चंद्रसेनो महाराजः पालयामास च प्रजाः। तस्य पुत्रो हि धर्मात्मा रिपुंजिन्नामतोऽभवत्। ४८। तद्राज्यं स्वतने दत्त्वा राज्ञा सह वनं गतः। चंद्रसेनोवने तत्र स चचार महातपाः। ४९। नत्वाराध्य हरिं पूज्य स्थानं परममापत। रिपुंजित् पालयामास प्रजाः पुत्रानिवौरसान्। ५०। तस्मात्त्वयापि राजेन्द्र कर्त्तव्यं विमलाव्रतम्। सूत उवाच। युधिष्ठिरोऽपि तद्वाक्यं श्रुत्वा चक्रे व्रतं त्विदम्॥ ५१॥ तस्माद्बुधैः क्रियतां व्रतं मोक्षप्रदं सदा। माहात्म्यश्रवणात् पाठात् गोसहस्रफलं लभेत्। ५२॥

Colophon. इति श्रीभविष्यपुराणे पुरुषोत्तममासस्य कृष्णपक्षैकादशीविमला नाम्नी तन्माहात्म्यं सम्पूर्णम्॥ संवत्। १८०१॥ श्रावणाधिमासि। शुक्लपक्षे। तिथावेकादश्याम्। ११। बृहस्पतिवासरान्वितायांमध्याह्नसमयेऽलेखि पयामिश्रोपनामक श्रीराधाकृष्णात्मजजयकृष्णमिश्रेण॥

विवरणम्। भविष्यपुराणसंदृष्टीतं श्रावणकृष्णैकादशीमाहात्म्यम्।

---

**No. 273.** भाद्राश्विनैकादशीमाहात्म्यम्। Bhádráśvinaikádaśí Máhátmyam. Substance, country-made colourless paper, 10 x 4 inches Folia, 7. Lines, 10-11 in a page Character, Nágara. Date, ? Appearance, very old. Verse. Correct. Incomplete.

Extracts from the Brahmáṇḍa, Skanda, Brahmavaivarta, and other Puránas, on the greatness of the dark as well as white lunar eleventh day of the months of Bhádra and Áśvina.

Beginning. युधिष्ठिर उवाच भाद्रस्य कृष्णपक्षे तु किन्नामैकादशी भवेत् एतदिच्छाम्यहं श्रोतुं कथयस्व जनार्दन॥१॥ श्रीकृष्ण उवाच शृणुष्वैकमना राजन् कथयिष्यामि विस्तरात् अजेति नामतः प्रोक्ता सर्वपापप्रणाशिनी। २। पूजयित्वा हृषीकेशं व्रतमस्याः करोति यः पापानि तस्य नश्यंति महापातकयान्यपि॥ ३॥ नातः परतरा राजन् लोकद्वयहितावहा सत्यमुक्तं मयाद्येतद्व्यसत्यं मम भाषितं॥ ४। हरिश्चंद्र इति ख्यातो बभूव नृपतिः पुरा चक्रवर्त्ती सत्यसंधः समस्ताया भुवः पतिः। ५॥ कस्यापि

कर्म्मयोगेऽयोगाद्राज्यभ्रष्टो बभूव सः विक्रीतौ वनितापुत्रौ च चकारात्म-
विक्रयं ॥ ९ ॥ पुष्कसस्य च दासत्वं गतोराजा स पुण्यकृत्सत्यमाश्रित्य
राजेन्द्र मृतचेलापहारकः सोऽभवन्नृपतिश्रेष्ठो न सत्याच्चलितस्तथा एवं
गतस्य नृपवेर्यस्य बहवो वत्सरा गताः ॥ ८ ॥ ततश्चिंता परोराजन् स बभूवा-
ति दुःखितः किं करोमि क्व गच्छामि निष्कृतिर्मे कथं भवेत् ॥ ९ ॥ इति
चिंतयतस्तस्य मग्नस्य दुःखार्णवे आजगाम मुनिः कश्चिज्ज्ञात्वा राजान
मातुरं ॥ १० ॥ परोपकाराणायाय निर्मिता ब्रह्मणा द्विजाः स तं
दृष्ट्वा द्विजवरं ननाम नृपसत्तमः कृताञ्जलिपुटोभूत्वा गौतमस्याग्रतः
स्थितः कथयामास वृत्तांतमात्मनो दुःखसंयुतं ॥ ११ ॥ श्रुत्वा नृपतिवाक्या-
नि गौतमोविस्मयान्वितः उपदेशं नृपतये व्रतस्यास्य ददौ मुनिः ॥ १२ ॥
मासे भाद्रपदे राजन् कृष्णपक्षेऽतिशोभने एकादशी समायाता अजा-
नाम्नीति पुण्यदा ॥ १३ ॥ अस्याः व्रतं कुरु राजन् पापस्यांतो भविष्यति
तव भाग्यवशादेषा सप्तमेऽह्नि समागता ॥ १४ ॥

End. नास्ति ।

विवरणम् । भाद्रकृष्णपक्षैकादशीमाहात्म्यानि ब्रह्माण्डस्कन्दब्रह्मवैवर्त्तादि पुराण-
संग्रहीतानि ॥

---

No. 274. कार्त्तिकशुक्लैकादशीमाहात्म्यम् । *Kártikaśuklaikádaśí Máhátmyam.* Substance, country-made white paper, 10 × 4½ inches. Folia, 5. Lines, 9-11 in a page. Character, Nágara. Date, ? Appearance, old. Verse. Not correct. Complete.

Extracts from the Skanda Puráṇa on the greatness of the white eleventh lunar day of the month of Kártika.

Beginning. श्रीगणेशाय नमः ॥ युधिष्ठिर उवाच ॥ कृष्ण कृष्ण महाबाहो सर्वलोक-
हितावह (हा ?) । कथयस्व (स्व ?) प्रसादेन शुक्लां कार्त्तिकसंभवाम् ॥
१ ॥ किं नाम को विधिस्तस्या (तस्याः ?) एतद्विस्तरतो वद ॥ भगवन्देव
दामोदर नाथ कार्त्तिं विस्तरात् ॥ श्रीकृष्ण उवाच ॥ कार्त्तिके शुक्लपक्षे
च नाम्ना चैव प्रबोधिनी (नी ?) ॥ अश्वमेधसहस्राणि राजसूयशतानि च ॥
एकेनैवोपवासेन प्रबोधिन्यां लभेन्नरः ॥ दुर्लभं चैव दुःप्राप्यं त्रैलोक्ये च
चराचरे । श्रीकृष्णं कथयामास प्रभु मं धातुसंज्ञम ॥ दद्यात्ता पावीन्
मनो ( मनो ? ) नारदं प्रति पाठम ॥ नारद उवाच ॥ पितामह
सर्वाघनाशनकामी पितकाद्यदा ॥ कार्त्तिकस्य सिते पक्षे बूहि चैकादशी-

व्रतं ॥ ब्रह्मोवाच ॥ प्रबोधिन्यास्तु माहात्म्यं पापघ्नं पुण्यवर्द्धनं । मुक्तिदं तत्त्वबुद्धीनां शृणुष्व मुनिसत्तम ॥ तावद्गर्ज्जंति विप्रेन्द्र गंगा भागीरथी क्षितौ । यावन्नायाति पापघ्नी कार्त्तिके हरिबोधिनी ॥ तावद्गर्ज्जंति तीर्थानि समुद्राश्च सरांसि च ॥ यावत्प्रबोधिनी विप्र समायाति न कार्त्तिके ॥ अश्वमेधसहस्राणि राजसूयशतानि च । एकेनैवोपवासेन प्रबोधिन्यां लभेन्नरः ॥

End. व्रतं कृत्वा विधानेन रात्रौ जागरणं चरेत् । जागरे चाच्युते विष्णोः (ष्णोः?) पूजने च द्विजोत्तम । उपवासादिकं सर्व्वमंगहीनं भवेद्ध्रुवं । गीतं वाद्यं च नृत्यं (च?) पुराणपठनं तथा । धूपं दीपं च नैवेद्यं पुष्पगंधानुलेपनं । फलार्घ्यादि श्रद्धा च दानमिंद्रियसंयमः । सत्येस्थिति (विं?) निद्रत्वं मादकादिविवर्ज्जितं ॥ नीराजनं नमस्कारमतिहृष्टेन चेतसा । यामे-यामे महापूजा कुर्ज्जा (र्य्या?) ज्जागरणं हरेः ॥ ८३ । दध्यादि समायुक्तं द्विजातीनां च पूजनं । षड्विंशगुणसंयुक्तमेकादश्यां तु जागरं । ८४ ॥ यः करोति नरोभक्त्या न पुनर्जायते भुवि । अश्वमेध-सहस्रस्य वाजपेयशतस्य च ॥ ८५ ॥ पुण्यं कोटिगुणं प्रोक्तमेकादश्यां तु जागरे । एकादशी व्रतमिदं कथितं मया वै कामप्रदं सकलकल्मषनाशनं च । विष्णोः प्रियं सुविधियुक् खलु येनिहात्तं क्तत्वे (क्लत्वे?) व यमरव-रो लभते सुमुक्तिं ॥

Colophon, इति श्रीस्कंदपुराणे प्रबोधिन्येकादशीमाहात्म्यं संपूर्णं शुभं भूयात् ।

विवरणम् । कार्त्तिकशुक्लैकादशीमाहात्म्यं स्कन्दपुराणसंगृहीतम् ।

---

No. 275. कार्त्तिकशुक्लैकादशीमाहात्म्यम् । Kártikaśuklaikádaśi Máhátymyam. Substance, country-made white paper, 11 × 4 inches. Folis, 4. Lines, 10–13 in a page. Character, Nágara. Date, Samvat 1874. Appearance, old, and slightly worm-eaten. Verse. Generally correct. Complete.

Another copy of the same work.

Colophon. इति श्रीस्कंदपुराणे प्रबोधिन्येकादशीमाहात्म्यम् संपूर्णम् ॥ पदाग्निवसु-चंद्रेऽब्दे १८७४ विक्रमे कार्त्तिके सिते ॥ एकादशी प्रबोधिन्यां बुधजय कृष्ण(?) चालिखत् ॥ श्रीवेणीमाधवाभ्यां नमः ॥ ॥

---

एकादश्यां प्रकुर्वंति उपवासं हि ये नराः ॥ ते यांति वैष्णवं स्थानं यत्रास्ते गरुडध्वजः ॥ १२ ॥ धन्यास्ते मानवा लोके विष्णुभक्तिपरायणाः ॥ एकादश्याय माहात्म्यम् सर्वकालेषु यः पठेत् ॥ १४ ॥ गोसहस्रफलं तस्य पुण्यं प्राप्नोति मानवः ॥ दिवा वा यदि वा रात्रौ ये शृण्वंतीह भक्तितः ॥ १५ ॥ कुलकोटिसमायुक्तो विष्णुलोके वसेन्नरः ॥ एकादश्याय माहात्म्यं पदमेकं शृणोति यः ॥ १६ ॥ ब्रह्महत्यादिपापानि नश्यंति मनुजाधिप ॥ एकादशीभ्यिमा राजन्नास्ति पापप्रमोचनम् ॥ १७ ॥

Colophon. इति श्रीमत्स्यपुराणे मार्गशीर्षकृष्णा उत्पन्ना नाम्नैकादशीमाहात्म्यं समाप्तिमगमत् ॥ जयकृष्णमिश्रेणालेखि ॥ मार्गशीर्षकृष्ण ११ शनौ ॥ संवत् ॥ १९०० ॥ खखांकचंद्रप्रमिते १९०० वैक्रमे मार्गशीर्षके ॥ कृष्णे श्रीकृष्णमिश्रेणालेखि विश्वतिथौ शनौ ॥ १ ॥

विवरणम् । अग्रहायणकृष्णैकादशीमाहात्म्यं मत्स्यपुराणसंग्रहीतम् ॥

---

No. 277. मार्गशीर्षशुक्लैकादशीमाहात्म्यम् । Márgaśírsha-śuklaikádaśí Máhátmyam. Substance, country-made white paper, 10×5 inches. Folia, 3. Lines, 4–11 in a page. Character, Nágara. Date, 1772. Appearance, very old. Verse. Generally correct. Complete.

Extracts from the Matsyapurana on the greatness of the white eleventh lunar day of the month of Agraháyana.

Beginning. श्रीगणेशाय नमः ॥ युधिष्ठिर उवाच ॥ वद त्वं देवदेवेश लक्ष्मीकांत जगत्पते ॥ लोकानां च हितार्थाय पापानां क्षयकारकम् ॥ मार्गशीर्षे सिते पक्षे भवेदेकादशी च या ॥ किं नामकोविधिस्तस्या एतद्विस्तरतो वद ॥ कोदेवः पूज्यते तत्र कथयस्व जनार्दन ॥ श्रीभगवानुवाच ॥ साधु साधु महाराज त्वं साधुरिति कीर्तनात् ॥ कथयिष्यामि राजेंद्र हरिवासर मुत्तमं ॥ उत्पन्ना कृष्णपक्षे या वल्लभैकादशी मम ॥ मार्गशीर्षस्य राजेंद्र गुह्यायां मम विग्रहात् ॥ मुरस्य वधनात् पार्थ पापघ्ना जनवल्लभा । कथिता तु मया चैव त्वद्ये राजसत्तम ॥ अतःपरं प्रवक्ष्यामि मार्गशीर्षे तु या सिता ॥ यस्याः श्रवणमात्रेण वाजपेयफलं लभेत् ॥ मोक्षानामेति विख्याता सर्व्वपापहरा शुभा ॥ देवं दामोदरं तत्र पूजयेत् श्रद्धयान्वितः ॥ तुलसीमंजरीभिश्च धूपैर्दीपैः समंततः । पूर्व्वेणैव विधानेन नियमं चैव कारयेत् ॥ मोक्षा ह्येकादशी पार्थ सर्वपापप्रणाशिनी ॥ रात्रौ जागरणं कार्य्यं नृत्यगीतस्तवैर्मम ॥

End. एवं यः कुरुते राजन् मोक्षामेकादशीं शुभां । तस्य पापानि नश्यन्ति मृतो मोक्षमवाप्नुयात् ॥ नातः परतरा काचिन्मोक्षदा विमला परा । पुण्यसंख्या न जानामि राजन् मे प्रियकृत्तमा ॥ चिन्तामणिसमा ह्येषा नृणां मोक्षप्रदायिनी ॥ पठनाच्छ्रवणाद्वास्या वाजपेयफलं लभेत् ॥

Colophon. इति श्रीमत्स्यपुराणे मार्गशीर्षे शुक्ला मोक्षा नामैकादशी संपूर्णा शुभं भूयात् । संवत् १७७९ माघोत्तमे मार्गशीर्षे शुक्लादशम्यामलिखत् पाव-धानसिंदेव(?) ।

विवरणम् । अग्रहायणशुक्लैकादशीमाहात्म्यं मत्स्यपुराणसंग्रहीतम् ।

---

No. 278. अग्रहायणपौषैकादशीमाहात्म्यम् । Agraháyaṇa-paushaikádaśí Máhátmyam. Substance, country-made white paper, 10 × 4½ inches Folia, 15. Lines, 10–14 in a page. Character, Nágara. Date, Samvat 1807. Appearance, old, slightly worm-eaten, but the last folium appears more fresh, in a different hand-writing, and has evidently replaced an older copy. *Verse. Generally correct.* Complete.

*Extracts from the Garuḍa and Brahmáṇḍa Puránas on the greatness of the eleventh lunar days of the months of Agraháyaṇa and Pausha.*

---

अग्रहायणशुक्लैकादशीमाहात्म्यम् ।

Beginning. श्रीगोविन्दाय नमः । धर्मस्थितिनिबन्धनकारणभावमय्यो मत्तोऽसिता नव-घनाय नमो । श्रीमारविन्दपदनाथ चतुर्भुजाय वन्दे शुभाय जगतो ॥ जगद्गुरवे ॥ १८ ॥ युधिष्ठिर उवाच । वन्दे विष्णुं विभुं शान्तालोक-पदप्रकाशम् । विशेषं विश्वकर्तारं पुराणं पुरुषोत्तमम् ॥ १० ॥ पृच्छा-मि देवदेवेशं संशयोऽस्ति महान् मम । लोकानां च हितार्थाय पापानां क्षयहेतवे ॥ ११ ॥ मार्गशीर्षे सिते पक्षे एकादशी च या भवेत् । किं नामको विधिस्तस्याः कोऽदेवतश्च पूज्यते ॥ १२ ॥ एतदाचक्ष्व मे स्वामिन् विस्तरेण यथातथम् । श्रीकृष्ण उवाच । साधु पृष्टं त्वया राजन् साधु ते विमलं मनः ॥ कथयिष्यामि राजेन्द्र चरितं व्रतमुत्तमम् ॥ १३ ॥ मार्गशी-र्षासिते पक्षे द्वादशी यम यद्वया । सार्धमेव च भक्तिमंत देवगणाहुताः । १४ ॥ सुराणां च शताधीश उत्पन्ना जगदम्बया । कथिता च मया(वा ?) मेव मया ते राजसत्तम ॥ १५ ॥ पूर्वमेकादशी राजन् त्रैलोक्ये च चरा-

चरे । मार्गशीर्षे सितायान्तु तद्व्रतं श्रोतुमर्हसि ॥ १७ ॥ मोक्षानामेति
नाम्ना सा सर्वपापहरावरा ॥ देवं दामोदरं चैव पूजयेत्तत्र मानवः ॥ १८ ॥

End मार्गशीर्षे सिते पक्षे मोक्षानामेति नामतः ॥ सर्व्वैस्तु तद्व्रतं कृत्वा पित्रे
पुण्यं प्रदीयताम् ॥ ६६ ॥ तस्याः पुण्यप्रभावेण मोक्षस्तस्य भविष्यति ॥
मुनेर्वाक्यं ततः श्रुत्वा नृपः स्वगृहमागतः ॥ ६७ ॥ आपद्यायिकात्
कृष्णात् प्राप्तोऽभरतसत्तम ॥ अन्तः पुरचरैः सर्व्वैः पुत्रदारैस्तदा नृप ॥
६८ ॥ व्रतं कृत्वा विधानेन पुण्यं दत्तं नृपाय तत् । तस्मिन् दत्ते तदा-
पुण्ये पुष्पवर्षमभूद्दिनः (?) ॥ ६९ ॥ वैखानसपिता तत्र गतः स्वर्गं सुतो-
गणैः ॥ राजानमन्तरिक्षाच्च विमलाशीरभाषत ॥ ७० ॥ स्वस्त्यस्तु ते पुत्र
चरेत्युक्त्वा. स च दिवं गतः ॥ एवं यः कुरुते राजन् मोक्षामेकादशीं
शुभां ॥ ७१ ॥ तस्य पापक्षयं याति मृतो मोक्षमवाप्नुयात् ॥ नातः परत-
रा काचिन्मोक्षदा विमला शुभा ॥ ७२ ॥ पुण्यसंख्यान्तु राजेन्द्र नाहं
जानामि वै. कृता ॥ पठनाच्छ्रवणाद्वापि वाजपेयफलं भवेत् ॥

Colophon इति श्रीब्रह्माण्डपुराणे मोक्षे (चै ?) कादशी मार्गशीर्षे शुक्ला सम्पूर्ण
(सम्पूर्णा ?) ॥

---

पौषकृष्णैकादशीमाहात्म्यम् ।

Beginning. युधिष्ठिर उवाच ॥ पौषस्य कृष्णपक्षे तु काचिदेकादशी भवेत् ॥ किं-
नामको विधिस्तस्याः कोदेवस्तत्र पूज्यते ॥ एतदाचक्ष्व मे स्वामिन् विस्तरेण
समासतः ॥ ७४ ॥ श्रीभगवानुवाच ॥ कथयामि च राजेन्द्र भवतः स्नेह-
कारणात् ॥ तथा तुष्टिर्न मे राजन् यज्ञभिर्यामदक्षिणैः ॥ ७५ ॥ यथा मे
तुष्टिरायाति एकादश्या व्रतेन वै ॥ तस्याश्चैवापि माहात्म्यं शृणु चैकाग्रमा-
नसः ॥ ७६ ॥ लोकानाञ्च हितार्थाय कथयामि तवाग्रतः ॥ पौषस्य
कृष्णपक्षे तु सफला नाम नामतः ॥ ७७ ॥ नारायणोऽधिदेवोऽस्याः पूज-
येच्च प्रयत्नतः ॥ पूर्वेण विधिना राजन् कर्त्तव्यैकादशी जनैः ॥ ७८ ॥ ना-
गानाञ्च यथा शेषः पक्षिणां गरुडो यथा । देवानाञ्च यथा विष्णुर्द्विपदां
ब्राह्मणो यथा ॥ ७९ ॥ व्रतानाञ्च तथा राजन्नेकादश्येव चोत्तमा सफला
नाम नामेति तस्याः पुण्यं शृणुष्व तत् ॥ ८० ॥

End. कस्यचित्कालपर्य्याये दैवभाग्यवशादपि ॥ पौषस्य कृष्णपक्षे तु सफा-
ख्याया दिने तथा ॥ ८८ ॥ रवौ च मध्यमे प्राप्ते संज्ञां लेभेऽथ लुम्भकः ॥
प्राप्तसंज्ञस्ततः खेन क्षुधितोऽसौ तदाक्रमात् ॥ ८९ ॥ चलितश्चैव पादा-

ष्यां वनमध्यगतस्तदा। क्षुत्तृषापीड़ितोनित्यं शीतेन बहुपीड़ितः ॥
१०० ॥ फलानि च सदाराजन्नाजहार स लुब्धकः। यावत् सोप्यागतस्तत्र
तावदस्तङ्गतोरविः ॥ १ ॥ किम्भविष्यति तातेति विफला याति दुःखितः।
फलानि तानि सर्वाणि वृक्षमूले न्यवेदयत् ॥ २ ॥ इति वाक्यं तदोवाच
फलानि प्रीयतां हरे। इत्युक्त्वा लुब्धकश्चैव न निद्रां लभते निशि ॥
३ ॥ रात्रौ जागरणं राजन् मेने हरिप्रसादतः। फलानां पूजनं मेने
सफलायास्तथानघ ॥ ४ ॥ इति कृत्वा लुब्धकोऽपि ह्यकस्मात् व्रतमुत्तमम्।
तेन पुण्यप्रभावेन प्राप्तं राज्यमकण्टकम् ॥ ५ ॥

**Colophon.** 'इति सौपर्णेये पौषी कृष्णा समाप्ता ॥

---

## पौषशुक्लैकादशी।

**Beginning.** युधिष्ठिर उवाच। कथिता चैव भो कृष्ण सफलैकादशी शुभा॥
कथयस्व प्रसादेन शुक्ला पौषस्य या भवेत् ॥ १ ॥ किन्नामको विधि-
स्तस्याः को देवस्तत्र पूज्यते। कस्मै तुष्टो हृषीकेश त्वमेव पुरुषोत्तम ॥ २॥
श्रीकृष्ण उवाच ॥ शृणु राजन् प्रवक्ष्यामि शुक्ला पौषस्य या भवेत्॥
कथयामि महाराज लोकानां हितकाम्यया ॥ ३ ॥ पूर्वेण विधिना
राजन् कर्त्तव्या सा प्रयत्नतः। पुत्रदा नाम नाम्नेति सर्वपापहरावरा ॥
४ ॥ नारायणोऽधिदेवोऽस्याः कामदा सिद्धिदा स्मृता। पुत्रदा धनदा चैव
त्रैलोक्ये न चराचरे ॥ ५ ॥

**End.** राजोवाच। एष वै संशयोमह्यं पुत्रस्योत्पादने महान् ॥ १८ ॥ यदि
तुष्टा भवन्तो वै पुत्रो मे दीयतां तदा ॥ मुनय ऊचुः। अद्यैव दिवसे
राजन् पुत्रदा नाम वर्त्तते॥ १९ ॥ एकादशीति विख्याता क्रियतां व्रतमु-
त्तमम् ॥ अभिषेकस्ततोऽस्माकं केशवस्य प्रसादतः ॥ २० ॥ अवश्यं नव-
राजेन्द्र पुत्रप्राप्तिर्भविष्यति। इत्येवं वचनात्तेषां कृतं राज्ञा व्रतोत्तमम् ॥
२१ ॥ मुनीनामुपदेशेन पुत्रदाया विधानतः। द्वादश्यां पारणं कृत्वा
मुनीन्नत्वा पुनः पुनः ॥ २२ ॥ आजगाम गृहं राजा राज्ञीगर्भमथोदधौ ॥
पुत्रो जातस्तथा काले तेजस्वी पुण्यकर्मकृत् ॥ २३ ॥ पितरं तोषयामास
प्रजापालो बभूव सः। एतस्मात् कारणाद्राजन् कर्त्तव्यं पुत्रदाव्रतं ॥ २४ ॥
लोकानान्तु हितार्थाय तवाग्रे कथितं मया। एकचित्तास्तु ये मर्त्याः
कुर्वन्ति पुत्रदाव्रतम् ॥ २५ ॥ पुत्रान् प्राप्येह लोकेऽस्मिन् मृतास्ते स्वर्गगा-
मिनः। पठनाच्छ्रवणाद्राजन्नग्निष्टोमफलं लभेत् ॥ २६ ॥

Colophon. इति श्रीब्रह्माण्डपुराणे । पौषशुक्लैकादशी पुत्रदाख्याकथा समाप्ता। शिवप्रसादमिश्रेण लिखितं संवत् १८०७। राम।

विवरणम्। पुस्तकेऽस्मिन् अग्रहायणपौषमासयोरेकादशीनां माहात्म्यानि वर्ण्यन्ते। तत्राग्रहायणकृष्णैकादश्यामाहात्म्यं मत्स्यपुराणसंगृहीतं, शिष्टानि माहात्म्यानि च ब्रह्माण्डगरुड़पुराणाभ्यां संगृहीतानि।

---

No. 279. पौषशुक्लैकादशीमाहात्म्यम्। Paushaśuklaikádaśí Máhátmyam. Substance, country-made white paper, 10×5 inches. Folia, 3. Lines, 4–11 in a page. Character, Nágara. Date, Samvat 1893. Appearance, fresh. Verse. Generally correct. Complete.

This codex contains extracts from the Brahmánda Purána only on the greatness of the white lunar eleventh day of the month of Pausha.

Colophon. इति श्रीब्रह्माण्डपुराणे पौषशुक्लपुत्रदा नाम एकादशी व्रतकथा समाप्ता। लिखितं जयकृष्णमिश्रेण तीर्थराजप्रयागे। मासोत्तमे मार्गशीर्षे मासि। शुक्लपक्षे। तिथौ दशम्यां। १०। शनौ। संवत्। १८९३।

विवरणमुक्तपूर्व्वम्।

---

No 280. पौषकृष्णैकादशीमाहात्म्यम्। Pausha-krishṇaikádaśí Máhátmyam. Substance, country-made white paper, 10×5 inches. Folia, 3. Lines, 7–9 in a page. Character, Nágara. Date, Saka 1880. Appearance, fresh. Verse. Generally correct. Complete.

Extracts from the Guruḍa Purana on the greatness of the black lunar eleventh day of the month of Pausha.

Beginning. श्रीमद्भागवताधिपतये नमः। श्रीगुरुभ्यो नमः। श्रीराधाकृष्णाय नमः। सूत उवाच। नारायणं नमस्कृत्य नरं चैव नरोत्तमं। देवीं सरस्वतीं व्यासं ततोजय मुदीरयेत्।

Colophon. इति श्रीमद्भागवड़ीये सूतशौनकसंवादो नाम सफलैकादशी पौषकृष्णामाहात्म्यकथा संपूर्णा। खनागेंदुमितेब्दे १८८० वैक्रमे मार्गसिते तुर्यतिथौ शनौ लिपि। रमावल्लो कृष्णगुरुप्रसादतः श्रीकृष्णमिश्रेण बलेखिषादरात्। १। लिखितं मया शिवजयकृष्णमिश्रेण प्रयागनगरे च।

विवरणमुक्तपूर्व्वम्।

**No 281.** पौषकृष्णैकादशीमाहात्म्यम् । Pausha-krishṇaikádaśi Máhátmyam. Substance, country-made white paper, 10×3 inches. Folia, 4. Lines, 9 in a page. Character, Nágara. Date, Samvat 1720, Śaka 1945. Appearance, old. Verse. Correct. Complete.

Another copy of the same work.

Colophon. इति गरुड़पुराणे पौषीकृष्णा सफलानामैकादशी कथाः सम्पूर्णाः ॥ संवत् १७८० शके १६४५ समये माघमासे सिते पक्षे षष्ठ्यां तिथौ लिखितं सेवकरामद्विवेदेनेदं पुस्तकं ।

विवरणमूलपूर्वम् ।

---

**No. 282.** पौषशुक्लैकादशीमाहात्म्यम् । Paushaśuklaikádaśi Máhátmyam. Substance, country-made paper, 9×3½ inches. Folia, 5. Lines, 6–8 in a page. Character, Nágara. Date, ? Appearance, very old, especially the last folium which is worn out and torn. Verse. Generally correct. Complete.

Another work on the same subject.

विवरणमूलपूर्वम् ।

---

**No. 283.** फाल्गुनशुक्लैकादशीमाहात्म्यम् । Phálgunaśuklaikádaśi Máhátmyam. Substance, country-made white paper, 9×4 inches. Folia, 13 (of which foll. 6–10 are wanting). Lines, 8–9 in a page. Character, Nágara. Date, ? Appearance, very old. Verse. Generally correct. Incomplete.

Extracts from the Brahmáṇḍa Purana on the greatness of the white lunar eleventh day of the month of Phálguṇa.

Beginning. नास्ति ।

End. केनेदं च मतनुकर्मंशतमफद्विनाधिना । एतस्मिन्नेव काले च मानुषाचाशरीरिणौ ॥ तं स्थितं नृपतिं दृष्ट्वा निःकामं विस्मयान्वितं ॥ शरणं केशवादन्योनास्ति कोपि द्वितीयकः ॥ वनात्समागात् स क्रमशो समायातोपि भूमिभुक् ॥ राज्यं चकार धर्मात्मा धरायां देववेश्मवत् ॥ वशिष्ठ उवाच ॥ धामर्दकीमतं राजन् ये कुर्वंति नरोत्तमाः ॥ ते यांति वैष्णवे लोके नात्र कार्या विचारणा ॥ ५१ ॥

Colophon. इति श्रीब्रह्माण्डपुराणे फाल्गुनशुक्लामर्दकीमाहात्म्यं समाप्तं ।

विवरणम् । आमर्दकीनामकफाल्गुनशुक्लैकादशीमाहात्म्यं ब्रह्माण्डपुराणसंगृहीतम् ॥

---

No 284. फाल्गुनकृष्णैकादशीमाहात्म्यम् । Phálgunakrishnaikádaśi Máhátmyam. Substance, country-made Káśmíri paper, 10×6 inches. Folia, 2. Lines, 13–14 in a page. Character, Nágara. Date, ? Appearance, very old. Verse. Generally correct. Complete.

Extracts from the Skanda Puráṇa on the greatness of the black lunar eleventh day of the month of Phálguṇa.

Beginning ॐ श्रीगणेशाय नमः ॥ युधिष्ठिर उवाच । फाल्गुनस्यासिते पक्षे किं नामैकादशी भवेत् । कथयस्व प्रसादेन वासुदेव समासतः ॥ १ ॥ श्रीकृष्ण उवाच ॥ नारदः परिपप्रच्छ ब्रह्माणं कमलासनं फाल्गुनस्यासिते पक्षे विजया नाम या भवेत् ॥ २ ॥ तस्याः पुण्यं सुरश्रेष्ठ कथयस्व प्रसादतः ॥ ब्रह्मोवाच ॥ शृणु नारद वक्ष्यामि कथां पापहरां परां ॥ यन्न कस्यचिदाख्यातं तच्छृणुष्व महामुने ॥ ३ ॥ पुरातनं हि वक्ष्यामि पवित्रं पापनाशनं ॥ जयं ददाति विजया स्पष्टावां वै न संशयः ॥ ४ ॥

End. अनेन विधिना राम यूथपैः सह संगतः ॥ १४ ॥ कुरु व्रतं प्रयत्नेन विजयस्ते भविष्यति ॥ इति श्रुत्वा ततो राम यथोक्तमकरोत्तदा ॥ कृते व्रते स विजयी बभूव रघुनंदनः ॥ प्राप्ता सीता जिता लंका मोक्षस्थोऽनिरुतौ-रपे ॥ १६ ॥ अनेन विधिना पुत्र ये कुर्व्वंति नरा व्रतं ॥ इह लोके जयस्तेषां परलोके तथा जयः ॥ १७ ॥ एतस्मात् कारणात् पुत्र कर्त्तव्यं विजया व्रतं ॥ पठनाच्छ्रवणाच्चैव वाजपेयफलं लभेत् ॥ १८ ॥

Colophon. इति श्रीस्कंदपुराणे फाल्गुनकृष्णपक्षे विजयैकादशी माहात्म्यं ॥ ० ॥ ॥ राम ॥ श्रीरामाय नमः ॥ श्रीरामाय नमः ॥ राम ॥

विवरणम् । फाल्गुनशुक्लैकादशी माहात्म्यम् स्कंदपुराणसंगृहीतम् ।

---

No. 285. चैत्रशुक्लैकादशीमाहात्म्यम् । Chaitraśuklaikádaśí Máhátmyam. Substance, country-made white paper, 10×4 inches. Folia, 3. Lines, 3-10 in a page. Character, Nágara. Date, Samvat 1870. Appearance, fresh. Generally correct Complete.

Extracts from the Varáha Puráṇa on the greatness of the white lunar eleventh day of the month of Chaitra.

Beginning. श्रीगणेशाय नमः॥ युधिष्ठिर उवाच॥ वासुदेव नमस्तुभ्यं कथयस्व ममा-
ग्रतः। चैत्रस्य शुक्लपक्षे तु किं नामैकादशी भवेत्॥१॥ श्रीकृष्ण
उवाच॥ शृणुष्वैकमना राजन् कथामेतां पुरातनीं। वसिष्ठो यामकथ-
यत् प्राग्दिलीपाय पृच्छते॥२॥ दिलीप उवाच। भगवन् श्रोतुमि-
च्छामि कथयस्व प्रसादतः॥ चैत्रे मासि सिते पक्षे किं नामैकादशी भवेत्।
श्रीवसिष्ठ उवाच॥ साधु पृष्टं नृपश्रेष्ठ कथयामि तवाग्रतः॥ चैत्रस्य
शुक्लपक्षे वै कामदा नाम नामतः॥४॥ एकादशी पुण्यतमा पापेन्धन-
दावानला। शृणु राजन् कथामेतां पापघ्नीं पुण्यदायिनीम्॥५॥

End. ॥ ऋषिरुवाच॥ चैत्रमासस्य संभोगशुक्लपक्षेऽस्ति सांप्रतं॥ कामदैकाद-
शीनाम्ना सा गता ललिताजिता॥१९॥ कुरुष्व तद्व्रतं भद्रे विधिपूर्वं
मयोदितम्॥ अस्य व्रतस्य यत्पुण्यं तत् स्वभर्त्रे प्रदीयताम्॥२०॥ दत्ते
पुण्ये क्षणात्तस्य शापदोषः प्रयास्यति॥ इति श्रुत्वा मुनेर्वाक्यं ललिता-
हर्षिताभवत्॥२१॥ उपोष्यैकादशीं राजन् द्वादशी दिवसे तदा॥
विप्रस्यैव समीपे तु वासुदेवाग्रतः स्थिता॥२२॥ वाक्यमूचेति ललिता
स्वपत्युस्तारणाय वै॥ मया तु तद्व्रतं चीर्णं कामदाया उपोषितं॥२३॥
तस्य पुण्यप्रभावेण गच्छत्वस्य पिशाचता॥ ललितावचनादेव वर्तमाने-
पि तत्क्षणे॥२४॥ गतपापः स ललितो दिव्यदेहो बभूव ह॥ राक्ष-
सत्वं गतं तस्य प्राप्ता गंधर्वता पुनः॥२५॥ हेमरत्नसमाकीर्णे रेमे ललि-
तया सह॥ तौ विमानसमारूढौ पूर्वरूपाधिकावुभौ॥२६॥ दंपती
अत्यशोभेतां कामदायाः प्रभावतः॥ इति ज्ञात्वा नृपश्रेष्ठ कर्तव्येषा प्रय-
त्नतः॥२७॥ लोकानां च हितार्थाय तवाग्रे कथिता मया॥ ब्रह्महत्या-
दिपापघ्नी पिशाचत्वविनाशिनी॥२८॥ नातः परतरा काचित्त्रै-
लोक्ये सचराचरे॥ पठनाच्छ्रवणाद्राजन् वाजपेयफलं लभेत्॥२९॥

Colophon. इति वराहपुराणे चैत्रशुक्लैकादशी ललिता नाम्नी कथा समाप्ता॥
लिखितं पयागिमिश्रजकृष्णेन। चैत्र। शुक्ल। दशम्याम्॥ संवत्
१८७०॥

विवरणम्। वराहपुराणसंदृष्टोक्तं चैत्रशुक्लैकादशीमाहात्म्यम्।

---

No 286. अधिमासशुक्लैकादशीमाहात्म्यम्। Adhimása-śuklaikádaśi Máhátmyam. Substance, country-made Kaśmiri paper, 10×4 inches. 33 s. c.

Folia, 4. Lines, 6-8 in a page. Character, Nágara. Date, Samvat 1901. Appearance, almost fresh. Verse. Generally correct. Complete.

Extracts from the Bhavishya Puráṇa on the greatness of the lunar eleventh day of the Adhimása or the intercalary month.

**Beginning.** श्रीगणाधिपतये नमः ॥ युधिष्ठिर उवाच ॥ नारायण नमस्तुभ्यं भक्तानां मुक्तिहेतवे ॥ विश्वोत्पत्त्यादिकर्त्रे च प्रकृतेराश्रयाय च ॥ १ ॥ भजनीय पदाब्जाय भजनीयगुणाय ते । भजनीयावताराय भजनीयक्रियाय ते ॥ २ ॥ अनंतनामधेयाय ह्यनंतगतये नमः ॥ नित्यानंदस्वरूपाय ह्यनंतफलदायिने ॥ ३ ॥ वासुदेव मया त्वत्तः श्रुता विस्तरतः कथा ॥ नानार्थगोचराः कृष्ण सर्वपापहराः पराः ॥ ४ ॥ एकादशीनां सर्वासां माहात्म्यानि श्रुतानि च ॥ तथापि हृष्टिं नोयामि श्रुत्वापि त्वां सुधामिव ॥ ५ ॥ तस्माद्विस्तरतः स्वामिन् यत्पृच्छेऽहं वदस्व तत् ॥ कृपया सर्वलोकानां भुक्तिमुक्तिप्रदायकम् ॥ ६ ॥ सूत उवाच ॥ इति तस्य वचः श्रुत्वा प्रहसन् मधुसूदनः ॥ प्रोवाच श्लक्ष्णया वाचा पिकध्वनीयसुत्तमम् ॥

**End.** श्रीकृष्ण उवाच ॥ तथा त्वमपि राजेंद्र कुरुष्व कमलाव्रतम् ॥ यत्कृत्वा सर्वकामानामावासो जायते पुमान् ॥ ४६ ॥ सूत उवाच ॥ इतीरितमिदं द्विजाः यदस्मि भीमसेनाग्रजं शृणोति पठतेऽथवा श्रुतिमतिः शतायुः पुमान् ॥ लभेत् सुखनरः फलं नियुतधेनुदानोद्भवं मुदं च परमां रमामिह परत्र मोक्षं लभेत् ॥ ४७ ॥ माहात्म्यश्रवणात् पाठाद्गोसहस्रफलं लभेत् ॥ व्यासं संपूज्य विधिवद् गोहिरण्यफलादिभिः ॥ ४८ ॥

**Colophon.** इति श्रीभविष्यपुराणे अधिमासशुक्लपक्षे कमलानाम्न्येकादशीमाहात्म्यम् समाप्तिमगमत् ॥ श्रीरामजय रामजय राम ॥ संवत् १९०१ ॥ श्रावण शुक्ला ॥ ११ ॥

विषयः । अधिमासशुक्लैकादशीमाहात्म्यम् भविष्यपुराणसंगृहीतम् ॥

---

No. 287. चैत्रकृष्णैकादशीमाहात्म्यम् । Chaitrakṛishṇaikádaśí Máhátmyam. Substance, country-made Káśmíri paper, 10 × 4 inches Folia, 3. Lines, 9 in a page. Character, Nágara. Date, Samvat 1870. Appearance, old. Verse. Generally correct. Complete.

Extracts from the Bhavishyottara Puráṇa on the greatness of the black lunar eleventh day of the month of Chaitra.

Beginning श्रीगणेशाय नमः ॥ युधिष्ठिर उवाच ॥ फाल्गुनस्यासिते पक्षे श्रुता त्वा-मर्दकी मया ॥ चैत्रस्य कृष्णपक्षे तु किं नामैकादशी भवेत् ॥ १ ॥ श्रीकृष्ण उवाच ॥ शृणु राजेन्द्र वक्ष्यामि यच्छ्रुत्वा पापनाशनं यल्लोमशोऽब्रवीत् इहोमांधात्रा चक्रवर्त्तिना ॥

End. लोमश उवाच ॥ पापमोचनिका राजन् ये कुर्वंति नरोत्तमाः ॥ ४१ ॥ तेषां यत्पातकं किंचित् तत्र सर्वं क्षयं व्रजेत् ॥ पठनाच्छ्रवणाद्राजन् गोसहस्रफलं लभेत् ॥ ४२ ॥ ब्रह्महा हेमहारी च सुरापी गुरुतल्पगः ॥ व्रतस्य चास्य करणात् पापमुक्ता भवंति ते ॥ ४८ ॥ बहुपुण्यप्रदं ह्येतत् कारयेद्व्रतमुत्तमं स्नानं संपूज्य विधिवद्गोधान्यवसनादिभिः ॥ ४८ ॥

Colophon. इति श्रीभविष्योत्तरपुराणे चैत्रकृष्णपापमोचनी एकादशीमाहात्म्यम् समाप्तम् ॥ लिखितं जयकृष्णमिश्रेण संवत् १८७० ॥ श्रीकृष्णः ।

विवरणम् । भविष्योत्तरपुराणसंग्रहीतं चैत्रकृष्णैकादशीमाहात्म्यम् ।

---

No 288 चैत्रशुक्लकृष्णैकादशीमाहात्म्यम् । Chaitraśuklakṛishṇaikádaśí Máhátmyam. Substance, country-made Kásmíri paper, 8 x 4 inches. Folia, 5. Lines, 6-16 in a page. Character, Nágara. Date, ? Appearance, very old, worn out, and slightly worm-eaten. Verse. Genetally correct Complete.

Another codex on both the white and black lunar eleventh days in the month of Chaitra.

विवरणमुक्तपूर्वम् ।

---

No 289 चैत्रवैशाखकृष्णैकादशीमाहात्म्यम् । Chaitra-vaiśákhakṛishṇaikádaśí Máhátmyam. Substance, country-made white paper, 9 x 3 inches. Folia, 8. Lines, 8-9 in a page. Character, Nágara. Date, Samvat 1816. Appearance, very old, worn out, and written by different hands. Verse. Generally correct. Complete.

Extracts from the several Puránas on the same subject for the months of Chaitra and Vaiśákha.

Beginning. युधिष्ठिर उवाच । वैशाखस्यासिते पक्षे किन्नामैकादशी भवेत् महिमानं कथय मे वासुदेव नमोऽस्तु ते ॥ १ ॥ श्रीकृष्ण उवाच ॥ सौभाग्यदायि-

नी राजन्निह लोके परत्र च ॥ वैशाखकृष्णपक्षे तु नाम्ना देव वरू-
थिनी ॥ २ ॥

End. तस्मात् सर्वप्रयत्नेन कर्तव्या पापभीरुभिः ॥ १२ ॥ व्यपारितनयाद्भीतै-
र्नरदेव वरूथिनी ॥ पठनाच्छ्रवणाद्राजन् गोसहस्रफलं लभेत् ॥ १३ ॥
सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥ १४ ॥

Colophon. इति श्रीभविष्योत्तरपुराणे वैशाखकृष्णावरूथिनीमाहात्म्यम् समाप्तं एका-
दशोऽध्यायः ११ ॥ सं१८९६ ॥

विवरणम् । वैशाखकृष्णैकादशीमाहात्म्यम् ।

---

No. 290 एकादशीव्रतम् । Ekádaśívratam. Substance, foolscap paper, 8×4 inches Folia, 85 Lines, 1–10 in a page. Character, Nágara Date, Samvat 1907. Appearance, fresh. Verse. Generally correct. Incomplete

This treatise also consists of extracts from the several Puránas in praise of Ekádaśí, and refers to all the Ekádaśís that occur in a year with the exception of the Krishṇa Ekádaśí in the month of Mágha, S'ukla Ekádaśí in the month of Vaiśákha, as also of the S'ukla and Krishṇa Ekádaśís in the months of A'sháḍha and S'rávana.

Colophon इति श्रीभविष्यपुराणे पुरुषोत्तममासस्य कृष्णपक्षस्यैकादशी विमलानाम्नी-
माहात्म्यम् समाप्तिमगमत् ॥ संवत् ॥ १९०७ । लिखितमिदं षड्विंश-
त्येकादशीमाहात्म्यं पण्डितजयकृष्णमिश्रेण ॥

विवरणम् । पूर्वोल्लिखितैकादशीमाहात्म्यान्येकत्र सम्बद्धानि । षड्विंशत्येकादशीषु पुस्तके-
ऽस्मिन् विंशत्येकादशीनां माहात्म्यं वर्तते । माघकृष्णैकादशी वैशाखशुक्लैकादश्याषाढश्रावण-
पक्षकृष्णैकादशीनां माहात्म्यं नास्ति । ततश्च पुस्तकमिदमसम्पूर्णम् ।

---

No. 291. माघैकादशीमाहात्म्यम् । Mághaikadaśí Máhátmyam. Substance, country-made white paper, 9×3 inches. Folia, 7. Lines, 9 in a page Character, Nágara. Date, ? Appearance, very old, and worn out. Verse. Correct. Complete.

Extracts from the Brahmáṇḍa and Padma Puráṇas on the greatness of the dark and white eleventh lunar days of the

month of Mágha. The name of the former is Shaṭtilí, and of the latter, Jayá.

Beginning. श्रीगणेशाय नमः ॥ दाल्भ्य उवाच । मर्त्यलोकमनुप्राप्ताः पापं कुर्वन्ति जन्तवः ॥ ब्रह्महत्यादिपापैश्च अन्यैश्च विविधादिभिः । परद्रव्यापहाराय परव्यसनमोहिताः ॥ कथं न गच्छेन्नरकान् ब्रह्मंस्तद्ब्रूहि तत्त्वतः । अनायासेन भगवन् दानेनाल्पेन केनचित् । पापं प्रशमनं याति येन तद्वक्तुमर्हसि । पुलस्त्य उवाच । साधुसाधु महाभाग गुह्यं मे तदुदाहृतं ॥ यन्न कस्यचिदाख्यातं ब्रह्मविष्ण्विन्द्रदैवतैः । तदहं कथयिष्यामि त्वया पृष्टो द्विजोत्तम ।

End. इंद्र उवाच । वदतां केन पुण्येन पिशाचत्वं हि वां गतं । मम शापवशं प्राप्तौ केन दैवेन मोचितौ ॥ माल्यवानुवाच । वासुदेवप्रसादेन जयायाश्च व्रतेन च ॥ पिशाचत्वं गतं स्वामिन् तव भक्तिप्रभावतः ॥ इति श्रुत्वा वचस्तस्य प्रत्युवाच सुरेश्वरः । पवित्रौ पावनौ जातौ वंदनीयौ ममापि च ॥ हरिवासरकर्त्तारौ विष्णुभक्तिपरायणौ । हरिभक्तिरता ये च विष्णुव्रतपरास्तथा ॥ अस्माकमपि ते मर्त्याः पूज्या वंद्या न संशयः । रमस्व पुष्पवत्या त्वं यथाभीष्टं सुरालये । एतस्मात् कारणाद्राजन् कर्त्तव्यं हरिवासरं । जया तु राजशार्दूल ब्रह्महत्यापहारिणी । सर्वदानानि दत्तानि यज्ञास्तेन कृता नृप ॥ सर्वतीर्थेषु स स्नातः कृतं येन जयाव्रतं । कल्पकोटिशतं यावद्वैकुंठे मोदते ध्रुवं ॥ पठनाच्छ्रवणाद्राजन्नग्निष्टोमफलं लभेत् ॥ ५६ ॥

Colophon. इति श्रीपद्मपुराणे माघशुक्लैकादशी जयामाहात्म्यम् समाप्तं ॥ शुभम् ।

विवरणम् । माघमासीयकृष्णशुक्लैकादशीमाहात्म्यं यथाक्रमं ब्रह्माण्डपद्मपुराणसंगृहीतं । तत्र कृष्णैकादशी षट्तिलो नाम शुक्ला च जया नाम ।

---

No 292. पिपीतकीव्रतम् । Pipítakívratam. Substance, country-made yellow paper, 9 × 2½ inches. Folia, 4. Lines, 8-9 in a page. Character, Bengali. Date, ? Appearance, not old. Prose and verse. Generally correct. Complete.

A guide to the performance of the religious observance generally known as Pipítakívrata, performed on the white lunar twelfth day of the month of Vaiśákha. As it was first performed by a Bráhmaṇa of the name of Pipítaka, it was named after him.

**Beginning.** अथ पिपीतकीव्रतं। तत्र प्रथमं मण्डलं कृत्वा अष्टादलपद्मं निर्माय मण्डलमध्ये गणघटमारोप्य स्वस्तिवाचनपूर्व्वकं सूर्य्यसोमेति पठित्वा संकल्पं कुर्य्यात्। अद्येत्यादि वैशाखे मासि शुक्लपक्षे द्वादश्यां तिथौ चतुर्व्वर्षं यावत् अमुकगोत्रा श्रीमती अमुकीदेवी यमलोकविमुक्तत्वस्वर्गलोकगमनकामा श्रीविष्णुप्रीतिकामा वा महाभारतादिसंहितोक्तगणेशादिनानादेवतापूजापूर्व्वकविष्णुपूजासभोज्यजलपूरितघटदानतत्कथाश्रवणरूपपिपीतकीव्रतमहं करिष्ये। ततः कृताञ्जलिः पठेत्। इदं व्रतं मया देव गृहीतं पुरतस्तव निर्विघ्नं सिद्धिमाप्नोतु तत् प्रसादात् जनार्द्दन॥ ततो गणपत्यादिपञ्चदेवताः संपूज्य नवग्रहान् दिक्पालान् पूजयेत्॥ ततः गृहीतेऽस्मिन् व्रते देव यद्यः पूर्णे स्त्रिया मया। साङ्गं भवतु तत्सर्व्वं प्रसन्ने त्वयि केशव इति पठित्वा भूतशुद्ध्यादिकं कृत्वा अङ्गन्यासकराङ्गन्यासौ कृत्वा। विशेषार्घ्यं संस्थाप्य विष्णुं ध्यात्वा संपूज्य गणेशादीन् नवग्रहान् वरुणं लक्ष्मीं सरस्वतीं पूजयेत्। ततो भोज्यमुत्सृज्य कलसमुत्सृज्य कथां शृणुयात् (शृणुयात्) यथा भविष्यपुराणे। शतानीक उवाच। जलदानस्य माहात्म्यं यत्तया कथितं पुरा तदहं श्रोतुमिच्छामि कथ्यतां मुनिशत्तम (सत्तम?)॥ पुरा केन कृता पुण्या द्वादशी सा पिपीतकी। तस्याः फलञ्च मे ब्रूहि कथाञ्चैव सनातन॥ नारद उवाच॥ शृणु राजन् प्रवचा (च्या?)मि द्वादशीं तां पिपीतकीं यां कृत्वा यमलोकाद्धि प्राप्नुयात् वैष्णवं पुरं॥ पुरा पिपीतको नाम ब्राह्मणः शंसितव्रतः। तपःस्वाध्यायसंयुक्तः सर्व्वप्राणिहिते रतः॥ शान्तोदान्तः क्षमायुक्तः अग्निहोत्रपरायणः। निवसन् विजनेऽरण्ये कामधर्म्ममुपेत्य सः॥ ततः कालेन नियतः सोऽपि मृत्युवशं गतः॥

**End.** विप्र उवाच। यदि तुष्टोऽसि मे देव तज्जलं देहि मे कियत्। तत् कुरुष्व महाभाग सर्व्वप्राणेश्वर प्रभो॥ यम उवाच। सन्तुष्टोऽस्मि तवानेन स्तोत्रेण द्विजसत्तम॥ वैष्णव तद्व्रतं विप्र कुरु गत्वा निजालयम्॥ विप्र उवाच॥ किं पुण्यं किं फलं तस्य विधानं तस्य कीदृशं तन्मे ब्रूहि जगन्नाथ येन प्राप्नोति तज्जलं॥ यम उवाच॥ विधानं शृणु (शृणु?) धर्म्मज्ञ द्वादशी यद्दिशी (यादृशी?) हरेः॥ वैशाखे शुक्लपक्षस्य द्वादशी वैष्णवी तिथिः। तस्यां सुशीतलैः तोयैः स्नापयेत् केशवं शुचिः। पूजयेद् गन्धपुष्पाद्यैर्धूपदीपैर्विधानतः नैवेद्यैर्विविधैर्भक्ष्यैस्ताम्बूलैश्चैव वाससा। विष्णुमन्त्रं पठित्वैव दण्डवत् प्रणिपत्य च। इन्द्रादिभ्यः संपूज्य जलकुम्भचतुष्टयम्। नवपूर्णशरावैश्च भक्ष्येण सहितं तथा। युक्तां

यज्ञोपवीतेन काञ्चनेन सदक्षिणं । द्वितीये चाष्टकलसं भक्ष्याद्यैरन्वितं ततः । नवनीतसमायुक्तं काञ्चनेन सदक्षिणं । तृतीये द्वादशघटान् घृतिलोदकसंयुतान् चतुर्थे षोड़शघटान् शर्कराद्धिसंयुतान् ॥ चादौ संपूज्य देवेशं द्विजेभ्यः प्रतिपादयेत् । दक्षिणां शक्तितोदद्याद् मतं साङ्गं भवेत्ततः । एवं कृते द्विजश्रेष्ठ लभते वैष्णवं पदम् । यत्र विष्णुर्नरोग-क्लेश च दुःखस्य भाजनं ॥ क्षुधापि न च तस्यापि पिपासापि न बाध-ते ॥ नारद उवाच ॥ यमस्य वचनात् सोऽपि द्विजोगत्वा निजालयं । चकार द्वादशीं विष्णोः पुत्रपौत्रान्वितोऽभवत् । धनधान्यसमायुक्तो मणिरत्नविभूषितः । राजसम्मानसंयुक्तः सदा पौरजनप्रियः । कियत्-कालेन विप्रोऽसौ पञ्चत्वं प्राप्तवान् ध्रुवं । पुरं विष्णोर्गतः सोऽपि विमा-नानेकसंवृतः ॥ नारद उवाच ॥ वैशाखे द्वादशी शुक्ला कृता पिपीत-केन यत् ॥ तस्मात् पिपीतकी नाम विख्याता वैष्णवी तिथिः ॥ यः करोति नरोभक्त्या नारी वा व्रतमुत्तमं । पुत्रपौत्रसमायुक्तो धनधान्य-समन्वितः । अन्ते विष्णुपदं याति (सोऽपि ?) लभते नात्र संशयः ॥

**Colophon.** इति भविष्यपुराणोक्ता पिपीतकी व्रतकथा समाप्ता ॥ ततोऽच्छिद्रावधा-रणं कुर्य्यात् ॥ • ॥ श्रीमधुसूदनदेवशर्म्मणा लिखिता (लिखितं ?) तस्य पुस्तकोऽपि (पुस्तकमपि?) ॥ ॐ दुर्गाजयति ॥ नारायणाय नमः ॥

विवरणम् । पिपीतकद्वादशीव्रतानुष्ठानपद्धतिरूपोऽयं निबन्धः ।

---

**No. 293** यज्ञोपवीतसंस्कारविधिः । *Yajñopavíta-saṅskáravidhiḥ.* Substance, country-made white paper, 9×3¼ inches. Folia, 4. Lines, 7-9 in a page. Character, Nágara Date, ? Appearance, old. Prose. Correct. Complete.

A guide to the performance of certain ceremonies required in the preparation of the sacred thread before it is used.

**Beginning** श्रीगणेशाय नमः ॥ अद्येत्यादि एवं गुणं मम इतरेषां बंदधादितां (दीनां?) कायशुद्ध्यर्थं पंचगव्यं करिष्ये । सुवर्णादिपात्रे ताम्रपात्रे पा-लाशपत्रे पद्मपत्रे वा पंचगव्यं कार्य्यं॥ गायत्र्या गोमूत्रं । गंधद्वारेति गो-मयं । आप्यायस्वेति चीरं । दधिक्राव्ण इति दधि ॥ शुक्रमसि ज्योति-रसि देवोवः सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसो सूर्य्यस्य रश्मिभिः । शर्यं देवानामनाधृष्टं देवयजनमसीत्याज्यं । देवस्यत्वा । हस्ताभ्यामिति

कुशोदकं । आपोहिष्ठामयो । ॐ कार पूर्व्वकं या इति यज्ञियशकल-
मूलेन निर्मथ्य । प्रणवेनाभिमंत्र्य पञ्चपर्णैर्हरित् कुशैर्दंशाङ्कतीर्जुहुयात् ।
इरावती इत्यस्य मैत्रावरुणिर्वसिष्ठः पृथिवी त्रिष्टुप् । पंचगव्यहोमे
विनिः ॥ ॐ । इरावतीधेनुः । पृथिव्या इदं । इदं विष्णुर्मेधातिथि
र्विष्णुर्गायत्री । विनियोगः । प्राग्वत् । इदं विः । इदं विष्णवे इदं ।
विष्णोर्मुकं दीर्घतमा नारायणस्त्रिष्टुप् । ॐ विष्णोर्मुकं । नारायणायेदं ।
मानस्तोकेति कुत्सोरुद्रोजगती । ॐ मानस्तोके । रुद्रायेदं । ब्रह्मज
ज्ञानं गोतमो ब्रह्मत्रिष्टुप् । पंचगः । ॐ ब्रह्मजज्ञानं । ब्रह्मण इदं । ॐ
अग्नये स्वाहा । अग्नय इदं । सोमाय स्वाहा सोमायेदं । गायत्र्या विश्वा-
मित्रः सविता गायत्री । पंचगव्यः । ॐ तत्सवितुः । सवित्र इदं । ॐ
अग्नये स्विष्टकृते स्वाहा । अग्नये स्विष्टकृते इदं । यस्य त्रिशानि हस्तयोः
पंच । ॐहीति हस्तं गृहीत्वा । अंगादंगादिति सर्व्वांगे अथवा पुरुष-
सूक्तेन प्रणवेन प्राशयेत् ॥ इति पंचगव्यविधिः ॥ अथ यज्ञोपवीतसंस्का-
रविधिः । ब्रह्मजज्ञानं गोतमो वामदेवो ब्रह्मात्रिष्टुप् । यज्ञवरणे विनि
योगः ।

End. ॐ मारं प्रथमतंतुं न्यसामि । अग्निं द्वितीयं तंतुं । नागां तृतीयतंतुं ।
सोमं चतुर्थं तंतु । पितृम् पंचमं तंतुं । प्रजापतिं षष्ठं तंतुं । वायुं
सप्तमं तंतुं । सूर्य्यं अष्टमं तंतुं । विश्वान् देवान्नवमं तंतुं न्यसामि ।
ऋग्वेदं प्रथम दीपकं न्यसामि यजुर्व्वेदं द्वितीयं दीपकं न्यसामि साम-
वेदं तृतीयं दीपकं न्यसामि । उदयं तमस इत्यृचेनादित्यं दर्शयेत् ।
स्योना पृथिवीत्यृचेन भूमिं स्पृष्ट्वा । देवस्य त्वेति मंत्रेण हस्तं गृहीत्वा ।
पितृभ्यो मम इति स्विस्ताङ्कयेत् । यज्ञोपवीतमित्यस्य परब्रह्मपरमात्मा
त्रिष्टुप् । श्रौतस्मार्त्तकर्म्मानुष्ठानसिद्ध्यर्थं यज्ञोपवीतधारणे विनियोगः ।
ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत् सहजं पुरस्तात् । आयुष्यमग्र्यं
प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ इति मंत्रेण दक्षिणं बाहु-
मुत्थाप्य यज्ञोपवीतं धारयित्वाचामेत् ।

Colophon इति यज्ञोपवीतसंस्कारविधिः समाप्तः श्रीरामः ॥

विवरणम् । यज्ञोपवीतसंस्कारविधानविषयकोऽयं निबन्धः । निबन्धेऽस्मिन् यज्ञोपवीत
धारणात्पूर्व्वं नदीयस्त्रादिविशुद्धिसम्पादनार्थं यानि कर्त्तव्यानि सन्ति विनियोगमन्त्रस-
हितानि तानि सर्व्वाण्येव यथायथं प्रदर्शितानि ।

---

**No. 291.** पिपीतकीद्वादशीव्रतम् । Pipitaki-dvádaśívratam. Substance, country-made colourless paper, 15 × 2 inches Folia, 6 (of which fol. 1 is *wanting*). *Lines*, 6 *in a page*. *Character, Bengali. Date,* B. E. 1224. Appearance, very old, and worn out. Correct. Complete (except the 1st folium).

A work treating of the same subject, but in greater detail.

**Beginning.** नास्ति ।

**End.** विप्र उवाच । यदि तुष्टोऽसि मे देव येन प्राप्नोति तत्फलं । तत् कथय महाभाग सर्वप्राणिहिते रत । यम उवाच । वैष्णवं तद्व्रतं विप्र कृत्वा निशामय । विधानं शृणु धर्मज्ञ यन्नमाप्नोति दुर्लभं । वैशाखे शुक्लपक्षे तु द्वादशी वैष्णवी तिथिः । तस्यां सुशीतलैस्तोयैः स्नापयेत् केशवं शुचिः । पूजयेद्गन्धपुष्पैश्च धूपदीपैस्तथाक्षतैः । नैवेद्यैर्विविधैर्भक्ष्यैस्तन्मूर्त्तिः शुक्लवाससा । तस्या तु वैष्णवे मन्त्रं दण्डवत् निपतेद्भुवि । पश्चाद्द्विजेभ्यः सम्पूज्य कुम्भान् सलिलपूरितान् प्रथमे चतुरः कुम्भान् दद्यादक्षतसंयुतान् पुष्पदामसमायुक्तान् शीततोयप्रपूरितान् । शुक्लवस्त्रावगुण्ठान् उपवीतसमन्वितान् । द्वितीयेऽष्टौ तथा कुम्भान शर्करादधिसयुतान् । तृतीये द्वादशान् कुम्भान् मोदकैश्च समन्वितान चतुर्थे षोडशान् कुम्भान् तण्डुलैश्च समन्वितान् । दद्यात् सम्पूज्य देवेशं द्विजातिभ्यः प्रयत्नतः । दक्षिणां काञ्चनं दद्यात् विप्रेभ्योयमपूर्व्वकं । कृत्वैतत् वैष्णवं सर्वं प्रयाति वैष्णवं पुरम् । इत्युक्ता धर्म्मराजस्तं विसर्ज्ज द्विजं सुत । श्रुत्वैतद्वचनं विप्रोगत्वा चैव निजाश्रमं । चकार द्वादशीं विष्णोर्यमोक्तं तत्फलव्रतं । यथाविधानतः कृत्वा व्रतं वर्षचतुष्टयं । व्रतस्यास्य प्रभावेण जगाम वैष्णवं पुरं । पिपीतकस्य नाम्नातु विख्याता वैष्णवी तिथिः । यस्तु कुर्य्यान्नरोभक्त्या नारी वा व्रतमुत्तमम् । पुत्रपौत्रादिसंयुक्तोधनधान्यसमन्वितः । अन्ते याति परं स्थानं विष्णोर्नैवात्र संशयः ।

**Colophon** इति विष्णुधर्म्मोत्तरे पिपीतकद्वादशीव्रतं समाप्तं । ० । इति जयनारायणशर्म्मणा लिखितमेतत् । स्वाक्षरम् । ४ । शाका १२२४ साल । ।

विवरणम् । पिपीतकद्वादशीव्रतानुष्ठानपद्धत्यन्तरम् विष्णुधर्म्मोत्तरसंग्रहीतम् ।

---

कुशोदकं । आपोहिष्ठामयो । ॐ कार पूर्व्वकं या इति यज्ञियशकल-मूलेन निर्मथ्य । प्रणवेनाभिमंत्र्य पञ्चपवेदंरित् कुशैदंशाकुनीर्जुहुयात् । इरावती इत्यस्य मैत्रावरुणिर्वसिष्ठः पृथिवी त्रिष्टुप् । पंचगव्यहोमे विनिः ॥ ॐ । इरावतीधेनुः । पृथिव्या इदं । इदं विष्णुर्मेधावेति विष्णुर्गायत्री । विनियोगः । प्राग्वत् । इदं विः । इदं विष्णवे इदं । विष्णोर्नुकं दीर्घतमा नारायणस्त्रिष्टुप् । ॐ विष्णोर्नुकं । नारायणायेदं । मानस्तोकेति कुत्सोरुद्रोजगती । ॐ मानस्तोके । रुद्रायेदं । ब्रह्मज्ञानं गौतमो ब्रह्मत्रिष्टुप् । पंचगः । ॐ ब्रह्मजज्ञानं । ब्रह्मण इदं । ॐ अग्नये स्वाहा । अग्नय इदं । सोमाय स्वाहा सोमायेदं । गायत्र्या विश्वामित्रः सविता गायत्री । पंचगव्यः । ॐ तत्सवितुः । सवित्र इदं । ॐ अग्नये स्विष्टकृते स्वाहा । अग्नये स्विष्टकृते इदं । यस्य विंशानि हस्तयोः पंच । अंत्रीति हस्तं गृहीत्वा । अंगादंगादिति सर्व्वांगे अथवा पुरुषसूक्तेन प्रणवेन प्राशयेत् ॥ इति पंचगव्यविधिः । अथ यज्ञोपवीतसंस्कारविधिः । ब्रह्मजज्ञानं गौतमो वामदेवो ब्रह्मात्रिष्टुप् । यज्ञकरणे विनियोगः ।

End. ॐ कारं प्रथमतंतुं न्यसामि । अग्निं द्वितीयं तंतुं । नागां स्तृतीयतंतुं । सोमं चतुर्थं तंतुं । पितॄन् पंचमं तंतुं । प्रजापतिं षष्ठं तंतुं । वायुः सप्तमं तंतुं । सूर्य्यो अष्टमं तंतुं । विश्वान् देवान्नवमं तंतुं न्यसामि । ऋग्वेदं प्रथमं दीपकं न्यसामि यजुर्व्वेदं द्वितीयं दीपकं न्यसामि सामवेदं तृतीयं दीपकं न्यसामि । उदयं तमस इत्यृचेनादित्यं दर्शयेत् । स्योना पृथिवीत्यृचेन भूमिं स्पृष्ट्वा । देवस्य त्वेति मंत्रेण हस्तं गृहीत्वा । पितृभ्यो नम इति त्रिस्ताड्येत् । यज्ञोपवीतमित्यस्य परमब्रह्मपरमात्मा त्रिष्टुप् । श्रौतस्मार्त्तकर्म्मानुष्ठानसिद्ध्यर्थं यज्ञोपवीतधारणे विनियोगः । ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत् सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुंच शुभ्रं यज्ञोपवीतं बलमस्तु तेजः । इति मंत्रेण दक्षिणं बाहुमुत्थाप्य यज्ञोपवीतं धारयित्वाचामेत् ।

Colophon. इति यज्ञोपवीतसंस्कारविधिः समाप्तः श्रीरामः ॥

विवरणम् । यज्ञोपवीतसंस्कारविधानविषयकोऽयं निबन्धः । निबन्धेऽस्मिन् यज्ञोपवीतधारणात्पूर्व्वं तदीयसूत्रादिविशुद्धिसम्पादनार्थं यानि कर्त्तव्यानि सन्ति विनियोगमन्त्रसहितानि तानि सर्व्वाण्येव यथायथं प्रदर्शितानि ।

No 294. पिपीतकीद्वादशीव्रतम् । Pipitakí-dvádaśivratam. Substance, country-made colourless paper, 15 × 2 inches Folia, 6 (of which fol 1 is wanting). Lines, 6 in a page. Character, *Bengali*. *Date*, B E. 1224. Appearance, very old, and worn out. Correct. Complete (except the 1st folium).

A work treating of the same subject, but in greater detail.

**Beginning.** नास्ति ।

**End.** विप्र उवाच । यदि तुष्टोऽसि मे देव येन प्राप्नोति तत्फलं । तत् कुरुष्व महाभाग सर्व्वप्राणिहिते रत । यम उवाच ॥ वैष्णवं तद्व्रतं विप्र कुरु-गत्वा निजालयं । विधानं शृणु धर्म्मज्ञ फलमाप्नोति दुर्लभं । वैशाखे शुक्लपक्षे तु द्वादशी वैष्णवी तिथिः । तस्यां सुशीतलैस्तोयैः स्नापयेत् केशवं शुचिः । पूजयेद्गन्धपुष्पैश्च धूपदीपैस्तथोत्तमैः । नैवेद्यैर्विविधै-र्भक्ष्यैस्ताम्बूलैः शुक्लवाससा । जप्त्वा तु वैष्णवं मन्त्रं दण्डवत् निपते-द्भुवि । पश्चाद्द्विजेभ्यः सम्पूज्य कुम्भान् सलिलपूरितान् प्रथमे चतुरः कुम्भान् दद्याल्लवणसंयुतान् पुष्पदानसमायुक्तान् शीततोयप्रपूरितान् । शुक्लवस्त्रावृतमुखान् उपवीतसमन्वितान् । द्वितीयेऽष्टौ तथा कुम्भान् शर्करादधिसंयुतान् । तृतीये द्वादशान् कुम्भान् मोदकैश्च समन्वितान् चतुर्थे षोडशान् कुम्भान् तण्डुलैश्च समन्वितान् । दद्यात् सम्पूज्य देवेशं द्विजातिभ्यः प्रयत्नतः । दक्षिणां काञ्चनं दद्यात् विप्रेभ्यो यत्नपूर्व्वकं । कृत्वैतत् वैष्णवं सर्व्वं प्रयाति वैष्णवं पुरम् । इत्युक्त्वा धर्म्मराजस्तं विस-र्ज्जं द्विजं सुत । श्रुत्वैतद्वचनं विप्रो गत्वा चैव निजाश्रम । चकार द्वादशीं विष्णोर्यथोक्तं तत्फलाव्रतं । यथाविधानतः कृत्वा व्रतं वर्ष-चतुष्टयं । व्रतस्यास्य प्रभावेण जगाम वैष्णवं पुरं । पिपीतकस्य नाम्नातु विख्याता वैष्णवी तिथिः । यस्तु कुर्य्यान्नरो भक्त्या नारी वा व्रतमुत्त-मम् । पुत्रपौत्रादिसंयुक्तो धनधान्यसमन्वितः । अन्ते याति परं स्थानं विष्णोर्नैवात्र संशयः ॥

**Colophon** इति विष्णुधर्म्मोत्तरे पिपीतकद्वादशीव्रतं समाप्तं ॥ ० ॥ इति जयनारायणशर्म्मणा लिखितमेतत् । स्वाक्षरं ॥ ४ ॥ सन १२२४ साल ॥ ॥

विवरणम् । पिपीतकद्वादशीव्रतानुष्ठानपद्धत्यन्तरम् विष्णुधर्म्मोत्तरसंगृहीतम् ।

---

No. 295. चांद्रायणविधिः । Chándráyana-vidhih. Substance, country-made white paper, 8×4 inches. Folia, 3. Lines, 6-13 in a page. Character, Nágara. Date, ? Appearance, very old, and slightly worm-eaten. Prose. Generally correct. Complete.

A guide to the performance of Chándráyaṇa, a religious observance generally performed for purifying oneself, during a lunar month. Anonymous.

Beginning ॥ श्रीगणेशाय नमः ॥ श्री वेंकटेशाय नमः ॥ गौतमस्त्वन्यथाह । अथा-
तश्चांद्रायणं तस्योक्तो विधिः कृच्छ्र इति । कृच्छ्रे यदुक्तं तिष्ठेदहनीत्यादि
तत्सर्व्वमत्र भवतीत्यर्थः ॥ अत्र विशेषमाह श्व वपनं व्रतं चरेत् । व्रतं प्राय-
श्चित्तं तदर्थं चांद्रायणं चरेत् । तदा वपनं भवति ॥ अभ्युदयार्थिनो न
भवतीत्यर्थः ॥ तथा श्वोभूतां पौर्णमासीमुपवसेत् पौर्णमासीमाश्रित्य
चतुर्दश्यामित्यर्थः । तथा आप्यायस्व संते पयांसि नवोनव इत्येताभिस्त-
र्पणमाज्यहोमो हविषश्चानुमंत्रणं उपस्थानं चंद्रमसो यद्देवा देव हेडन-
मिति चतसृभिराज्यं जुहुयाद्देवकृतस्येति चांते समिद्भिरों भूर्भुवः स्वस्तपः
सत्यं यशः श्रीरूर्गिडोजस्तेजःपुरुषो धर्मः शिव इत्येतैर्ग्रासानुमंत्रणं
प्रतिमंत्रं मनसा नमः स्वाहेति सर्व्वानेतैरेव ग्रासान् भुंजीत । आप्याय-
स्वेत्यादिभिर्नवोनव इत्यंतैस्त्रिभिर्मंत्रैस्तर्पणं कृत्वा चंद्रमस उपस्थापनं
कृत्वा आज्यहोमं हविरनुमंत्रणं च कुर्य्यात् । चंद्रोपस्थाने मंत्रा आप्याय-
स्वेत्यादयः । यद्देवा देव हेडनमिति चतसृभिरिति पूर्वमेव चतुःसंख्यो-
पादानात् चित्तं तदप्रकरणात्त्वेच्छात् ॥ अपमते च चित्ते देवकृतस्येध्म
तस्मिन् ऋगात्मकवाक्ये अवांतरवाक्यानां षट्संख्याकत्वात् समिद्भिरिति
बहुवचनं षट्त्वे पर्य्यवस्यतीति वाक्यबलात् षडाहुतयः समिधां भवंति।
पिंडकरणात् पूर्व्वं हविरनुमंत्रणे मंत्रा आप्यायस्वेत्यादयः । पिंडकरणानं-
तरं ओंमित्येवमादयः । ओं भूः भुवः स्वः । तपः । सत्यं । यशः । श्रीः ।
ऊर्क् । इट्ओजः तेजः । पुरुषः । धर्मः । शिवः । इत्येतैर्ग्रासानुमं-
त्रणं अत्र मंत्रांते मनसा नम इति स्वाहेति वा भुंजीत तपः प्रभृतिमंत्रा-
श्चतुर्थ्यंताः । नमः स्वस्ति स्वाहेत्यादि सूत्रेण चतुर्थीविधानात् । तथा
ग्रासप्रमाणमास्याविकारेण चरुभैक्ष्यसक्तुकणयावकशाकपयोदधिघृत-
मूलोदकानि हवींष्युत्तरोत्तरप्रशस्तानि पौर्णमास्यां पंचदशग्रासान् ।
भुक्त्वैकापचयेनापरपक्षमश्नीयादमावास्यामुपोष्यैकोपचयेन पूर्वं पक्षं ॥
विपरीतमेकेषामेव चांद्रायणो मास इति । ग्रासप्रमाणमास्याविकारेणेति

यदुक्तं तत् शिख्यंडपरिमितपंचदशग्रासभोजनासमर्थबालादिविषयं । एवमेव कुक्कुटांडादामलकपरिमितमपि शक्त्यापि दद्या योज्यं ॥ चतुर्दश्यामुपवासः पौर्णमास्यां पंचदशग्रासभोजनं तत एकैकग्रासह्रास अमावास्यायामुपवासः ततः पौर्णमासीपर्यन्तं पंचदशग्रासवृद्धिरिति त्रिंशद्दिनसाध्यं चांद्रायणं ।

End. अथ सोमायनं एतदपि चांद्रायणधर्मकमेव । अथातश्चांद्रायणमनुक्रमिष्याम इति हारीतेनेतिकर्तव्यतासहितं चांद्रायणमभिधाय एवमेव सोमायनमप्युक्ति (मित्यति ?) देशात् । तच्च कृष्णचतुर्थीमारभ्य शुक्लद्वादशीपर्यन्तमनुष्ठेयं (अनुविधेयं ?) । तथाच हारीतः । चतुर्थीप्रभृति चतुःस्तनेन त्रिरात्रं त्रिस्तनेन त्रिरात्रं द्विस्तनेन त्रिरात्रमेकस्तनेन त्रिरात्रमेवमेकस्तनप्रभृतिपुनश्चतुःस्तनान्तं याते सोमचतुर्थीं तनूस्थानः पाहि तस्मै स्वाहा । याते सोमपंचमी षष्ठीत्येवं यथार्थास्तिथिषो (?) एवमाभ्रा एतेभ्यः पूर्वपंचमया सामान्यतः सप्तकामलोकानां सापत्यं च गच्छतीति चतुरस्यादिक्रमेण स्तनानां ह्रासात् पुनरेकादिक्रमेण स्तनानां वृद्धेः । कृष्णचतुर्थ्येवारंभदिनमिति गम्यते ॥ स्तनेन त्रिरात्रमित्यभिहितत्वात्मुख एव दोह इति प्रतीयते । तदनुदयमुपपन्नं (तदनुपपन्नं ?) साक्षादुक्तं न हविसाधनमपि तु तत् स्थितं पयः । अपे च सोमोऽभिहितः सोमश्च प्रथमाध्यः । तत्र प्रथमश्रद्धुग्धपरित्यागेन कल्याणसाध्यादिकं न पूज्यते । तथाच स्नानादिस्थितं दुग्धं स्वदोग्धा याते सोमेत्यादिभिर्मन्त्रैः प्रतितिथिमेकैकामाहुतिं कृत्वा पयः पिबेत् । चंद्रोदयमतिदेशाच्चन्द्रोदय एव पयः पानं । संध्योऽप्येवं कर्तव्यः । याते सोमपंचमीतनूस्थानः पाहि तस्मै स्वाहा । इति पंचम्यां । एवं षष्ठ्यां षष्ठीपदप्रयोगः । उत्तरत्रामावास्यापर्यन्तमेवमेव । पुनः प्रतिपदि प्रथमातनूरित्येवं प्रयोगः । ततो द्वितीयादिषु द्वितीयातनूरित्यादि । एतच्चतुर्विंशतिदिनसाध्यं । यथार्थास्तिथयो होमः । इत्युक्तत्वाच्चतुर्थी द्वादशीमध्ये यत्र तिथिक्षयो न भवेच्चतुर्विंशतिदिनानि भवंति तदैव कर्तव्यं । एतत् सोमाय मम शक्तविषयं । अशक्तविषये तु मार्कंडेयः । क्षीरं सप्तरात्रं तु पिबेत् स्तनचतुष्टयं । स्तनत्रयं सप्तरात्रं सप्तरात्रं स्तनद्वयम् । स्तनेनैकेन षड्रात्रं त्रिरात्रं वायुभुग्भवेत् । इति । अथ पावकव्रतम् । शंखः । गोपुरीषाद्यवान् ग्रासं तु मासं नित्यं समाहितः । व्रतं तु पावकं कुर्यात् सर्वपापापनुत्तये । अघायमर्षणव्रतं । मनुः । त्र्यहं तु पचेत् पूजाभिरक्तोऽभ्युपपत यः ॥७॥ कुर्वते वामदे. सर्वे शिजोपिमायमर्षणं । यथाश्मेधः ।

**Colophon.** इति मनुमोक्तचान्द्रायणविधिः सम्पं (समाप्तः?) ॥ शीरस्तु ॥ शुभमस्तु ॥
॥ श्रीवेंकटेशाय नमः ॥

विवरणम् । चान्द्रायणव्रतविधिविषयकोऽयं निबन्धः । निबन्धेऽस्मिन् सप्रमाणचान्द्रायणानुष्ठानपद्धतिः प्रदर्शिता, प्रसङ्गेन सौमायनयावकः कृच्छ्राणि व्रतान्यप्यभिहितानि । चान्द्रायणं प्रसिद्धमेव, सौमायनन्तु चान्द्रायणवद्व्रतविशेषः । तच व्रतं कृष्णचतुर्थीमारभ्य शुक्लद्वादशीपर्य्यन्तं चतुर्विंशतिदिनसाध्यम् । तत्र स्तनचतुष्टयेन सप्तरात्रं, स्तनत्रयेण सप्तरात्रं, स्तनद्वयेन सप्तरात्रं, स्तनेनैकेन त्रिरात्रं षड्रात्रं वा गोक्षीरं पेयम् । एवमन्यानि व्रतानि पुस्तकोद्धृतांशेभ्योऽवसेयानि ।

---

**No. 296.** वास्तुशान्तिः । Bástuśántih. Substance, country-made white paper, 12×4 inches. Folia, 12. Lines, 6-9 in a page. Character, Nágara. Date, Samvat 1868. Appearance, old, and slightly worm-eaten. Prose. Generally correct Complete.

A work entitled Bástuśánti, treating of the performance of certain auspicious rites in order to avert the evil influence of a malignant star or of an evil spirit, upon one's dwelling house, by Rámakrishṇa Bhaṭṭa, according to the Grihya sútra of Aśvaláyana.

**Beginning.** श्रीगणेशाय नमः ॥ अथ वास्तुशांतिप्रयोगः ॥ प्रागुक्तगृहप्रवेशदिनाच्छुभे पूर्व्वाह्णे सपत्नीकः शुचिः प्राङ्मुखः प्राणायानम्य (नायम्य?) देशकालौ स्मृत्वा गृहारंभादौ अस्य वास्तोः शुभतासिद्धार्थं नवगृहमखां वास्तुशान्तिं करिष्ये इति सङ्कल्प्य तानि कृत्वाचार्य्यादीनलंकारवस्त्रादिभिः संपूज्य ॥ तत्र ऋत्विजश्चत्वारस्तत्र आचार्य्यः कर्म करिष्य इति संकल्प्य सर्षपान् विकिरेदेभिर्मंत्रैः ॥ यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्व्वदा ॥ स्थानं त्यक्त्वा तु तत् सर्व्वं यत्रस्थं तत्र गच्छतु ॥ १ ॥ अपक्रामंतु भूतानि पिशाचाः सर्व्वतोदिशं ॥ सर्वेषामविरोधेन यज्ञकर्म समारभेत् ॥ २ ॥ भूतप्रेतपिशाचाद्या अपक्रामंतु राक्षसाः ॥ स्थानादस्माद् व्रजंत्वन्ये स्वीकरोमि भुवंत्विमामिति ॥ ३ ॥ तत्र पञ्चगव्यम् ।

**End.** इदानीं स्वोक्तवास्तुशांतिरभिधीयते ॥ सा च द्विजातीनां पूर्वोक्तया समुच्चार्य्यते ॥ पूर्वोक्ते च ॥ तस्याः सर्वसाधारण्ये न विधानात् ॥ अतश्च

न शूद्रमात्रविषयत्वं तस्मात् सूत्रोक्तपूर्वया समुच्चार्य्यते ॥ तत्राश्वलायनीयगृह्योक्तयोः । योगः । कोष्ठादिनिर्मितं । संपन्नं गृहं व्रीह्यादि बीजसंयुतं शोभने मुहूर्त्ते ब्राह्मणैः सह चतुर्य्यघोषं प्रविश्य भुवि देशे चतस्रः शिलाः संस्थाप्य तासु पूर्वां निधाय तत्र मणिकमंत्रं समुद्राद् (मह्नांदं ?) स्थापयदनेन ॥ पृथिव्या अधिसंभवेति पृथिव्या अधिति चरंमरोचाचदिति भेदाद्विवरणया इरामुदग्रमन्यनिरामयबाधितामिति वा ॥ ततो मणिके जलमासिंचेदनेन ॥ एतु राजावरुणोरेवतिभिरग्निस्थाने तिष्ठतु मोदमानः । इदां वर्त्तंतोष्टनगुचमाणामिमेव शाके सदसंविशंत्विति ॥ ततश्चलं पात्रांतरं आदाय तत्र गंधदूर्वांगमीशाखां उदुंबरशाखाव्रीहीन् यवान् फलं हिरण्यंच क्षिप्त्वा दूर्वाभिः शाखाभ्यां च सर्वं गृहांशमादितः ॥ दक्षिणं व्रजन् त्रिःप्रोक्षेदनेन सूक्तेन शन्न इंद्राग्नी इति पंचदशर्चस्य वसिष्ठो विश्वेदेवा त्रिष्टुप् प्रोक्षणे विनियोगः । सकृत् सूक्तपाठः । ततः प्रागादितः क्षिरविच्छिन्नामुदकधारान्दद्यादनेन मंत्रेण । आपोहिष्ठेति तिसृणां अंबरीषसिंधुद्वीप आपोगायत्री धारादि० ॥ अथापि मण्डपात्कृतीमध्ये गृहं गृह्यमग्निं प्रतिष्ठाप्य वास्तोष्पते चतुर्भिरिति प्रधानं संकीर्त्यान्वाधाय पूर्णपात्रनिधानांतं कृत्वा वास्तोष्पतये चतुःकृत्वा तूष्णीं निरूप्य तथैव प्रोक्ष्याज्यभागांतं कृत्वा वाचानयस्यैव वदापा वदापा वास्तोष्पात इति चतुर्भिर्मंत्रैः स्थालीपाकं जुहुयात् । वास्तोष्पत इति चतसृणां वसिष्ठो वास्तोष्पतिस्त्रिष्टुभोन्त्या गायत्री होमे विनियोगः । वास्तोष्पतये इदं नमेति (नम इति ?) सर्वत्र त्यागः । ततः स्त्री (स्वि ?) ष्टकृदादिहोमशेषं समाप्य शिष्टेन चरुणाज्येन पायसेन वा तदर्द्धं सामान्यपरिभाषया बहुवचनाद्यतक्षीत्वा ब्राह्मणान् भोजयेत् ॥ यरो पूर्वेति गृह्यः । पाको न कार्य्यस्ततः शिवं वास्तु शिवं वास्तु इति भवंतो ब्रुवन्त्विति ब्राह्मणाननुब्रूयात् तैः शिववास्तु शिववास्त्विन्त्युक्तः उदद्युतो भुंजीत इति विशेषश्च (पक्ष ?) मस्तीकरणेपेनदियते भाषाष्यकारिकम् ॥

Colophon. इति श्रीरामकृष्णभट्टरचितं आश्वलायनगृह्योक्तवास्तुशांतिप्रयोगः ॥ ॥ । ॥ ॥ ॥ ॥ । ॥ ॥ ॥ संवत् १८९८ श्रावण । कृष्ण । ९ । भौः । वसुरसधृति १८९८ संख्ये विक्रमे श्रावणे आसित कुजयुत तथौ श्रीदेवराजप्रयासे ॥

विवरणम् । श्रीभट्टनारायणसूरिसुतश्रीरामकृष्णभट्टविरचिता वास्तुशान्तिपद्धतिः । अत्र द्विविधा पौराणिकी वैदिकी च वास्तुशान्तिर्विद्यते । मत्स्यपुराणे, ज्योतिःसारसंग्रहे च

वैगुण्यवारणार्थं या शान्तिः कार्य्या सा चात्र प्रदर्शिता। तथाविधा शान्तिः खलु पौराणिकमार्गेण, वैदिकरीत्या चानुष्ठीयते निबन्धेऽस्मिन् तदुभयविधैव पद्धतिः सम्यक् प्रदर्शिता।

---

**No. 297.** सङ्क्रान्तिनिर्णयः। Sañkrántinirnayah. Substance, foolscap paper, $12 \times 3\frac{1}{2}$ inches. Folia, 8. Lines, 3-8 in a page. Character, Bengali. Date, ? Appearance, fresh. Prose. Not correct. Complete.

A work treating of Sañkránti or the last day of a month on which the sun passes over from one sign to the next. There are twelve Sañkrántis in a year, of which two are known by the name of Ayana, two by the name of Vishuva, four as Shadaśiti and four as Vishnupadís. Of the Ayanas, one is called the Dakshináyana, and the other the Uttaráyana, according to the sun's motion towards the south or towards the north. On the Uttaráyana Sañkránti, the sun enters the Capricorn, and on the Dakshiṇáyana, the Cancer. The Vishuvas happen in his equinoctial course, one on his entering the Tulá (Libra), and the other into the Mesha (Ares). The four Shaḍaśítis occur when the sun enters the Dhanus, Mithuna, Kanyá, and Mína respectively, and the Vishnupadis on his entering into the Vṛisha, Vṛischika, Kumbha, and the Siñha. The work contains full descriptions of these Sañkrántis, and their influence over day or night. Anonymous.

**Beginning.** श्रीदुर्गायै॥ अथ संक्रान्तिनिर्णयः॥ आदौ संज्ञां विनिर्णीय ततोराशिस्थनिर्णयं। अवस्थानिर्णयं पश्चात् करिष्यामि समासतः॥ तत्र सामान्यसंज्ञानिर्णयो यथा देवीपुराणं मन्दा मन्दाकिनी धर्म्मांक्षी घोरा चैव महोदरी राक्षसी मिश्रिता प्रोक्ता संक्रान्तिः सप्तधा नृप॥ मन्दा ध्रुवेषु विज्ञेया मृदौ मन्दाकिनी तथा। क्षिप्रे ध्वाङ्क्षं विजानीयादुग्रे घोरा प्रकीर्त्तिता। चरैर्महोदरी ज्ञेया क्रूरैः ख्यातैस्तु राक्षसी। मिश्रिता चैव विज्ञेया मिश्रितर्क्षे च सङ्क्रमे॥ उग्रः पूर्व्वमघान्तका। ११। १०। १५। १०। २। भुजगफल्गुणीमूलशराणि सम्भूः॥ १२। २१। २१। २१। ४॥ वाल्यादित्यहरिचयं चरगणः। १५। ७। १२। १२। १४। पुष्यास्विचसा

मघुः । ८ । २ । ११ । चित्रामित्रमृगान्त्यभं मृदुगणः । १४ । १० । ५ ।
१० । तीक्ष्णोऽपि रुद्रेन्दुयुक् ॥ ९ । ६ । १८ । १९ । मिश्रोऽग्निसविशाख-
भे । ३ । १६ । शुभफलाः सर्व्वे सहत्ये गणाः ॥ द्वादशसंक्रान्तीनां विशे-
षसंज्ञायोतिः शास्रोक्ता (ज्योतिः शास्त्रोक्ता) यथा ॥ अयने द्वे विषुवे द्वे
स्ततः श्र (चतस्रः ?) षड़शीतयः चतचस्रो (चतस्रो ?) विष्णुपदाख्य संक्रा-
न्त्यो द्वादश स्मृताः ॥ रशिस्थ (राशिस्थ ?) निर्णयो यथा । मृग कर्कट
संक्रान्तौ द्वे मूदक् दक्षिणायने । विष्णुभे च तुला मेषे गोलमध्ये ततो-
ऽपराः ॥ मृगोमकरः गोलोराशिचक्रं । तन्मध्ये । पराः षडशीत्यादयः ।
तद्यथाधनुर्मिथुनकन्यासु (सु ?) मीने च षड़शीतयः । वृषवृश्चिककुम्भेषु
सिंहे विष्णुपदी स्मृता । अथ दिवासंक्रान्तिनिर्णयः ॥ विषुवद्वयषड़-
शीति चतुष्टयसंक्रान्तीनां उभयावधि षोड़शदण्डानां पुण्यत्वं ॥ १ ॥
उत्तरायणसंक्रान्तेः पश्चाद्विंशतिदण्डानां पुण्यत्वं । २ । दक्षिणायनसंक्रा-
न्तेः पूर्व्वं त्रिंशतीदण्डानां पुण्यत्वं ॥ ३ ॥ विष्णुपदी चतस्रणां संक्रान्तीनां
उभयपार्श्वयोः शोड़श (षोड़श ?) दण्डानां पुण्यत्वं ॥ ४ ॥ सर्व्वसंक्रान्तीनां
पुनर्वक्ष्यमाणमहत्त्वनोक्तसंख्याभ्यन्तरविप्रविष्टनाड़िकानामपि पुण्य-
त्वं ॥ ५ ॥ तथासां सन्निहितदण्डानां पुण्यतमत्वं ॥ अत्र व्यवस्थाक्रमेण
प्रमाणं यथा । देवीपुराणं नागार्द्धं भास्करे पूर्व्वमपूर्व्वं शर्व्वरीदले । अपूर्व्वं
उभयोर्व्यवतिरेकेऽपरेऽहनि । अस्यार्थः । ज्योतिःशास्त्रे त्रिंशत् कला-
त्मको नागशब्दः । तदर्द्धं षोड़शकलात्मकपर्य्यन्तं पुण्यकालः । भास्करे
भास्करोपलक्षिते काले दिवेति यावत् तस्मिन् संक्रमणे । अत्रनस्यायं
प्रथमपादः विशेषात् दिवाविषुवद्वयं, षड़शीति चतुष्टयः (यं ?) पूर्व्वे
इत्यादि अन्यत् पादत्रयं रात्रिसंक्रान्तिविषयं ततु रात्रिसंक्रमणविवेचने
व्याख्यास्यामेः (व्याख्यास्यामः ?) ॥

End. यथा सूर्य्यस्य मिथुनसंक्रान्त्यां जन्मः कृतयुगस्य तु । वृश्चिकस्य च संक्रा-
न्त्यां द्वापरान्तस्य संज्ञया । तथाकुम्भस्य संक्रान्त्यां जन्मः कलियुगस्य तु ।
नारदः अयने विषुवे चैव शयने (शयने ?) बोधने हरेः । अनध्यायस्तु
कर्त्तव्यो मन्वादिषु युगादिषु । स्कन्दपुराणे संक्रान्तिमरा (मकरा ?) दित्ये
पुण्ये पुण्यतरे सदा । कर्त्तव्यो नियमः कश्चिद् व्रतस्थो मनीषिभिः । संक्रा-
न्त्यो वक्ष्यमाण द्वादश्यां पारणामते । वर्षं न पौड़येनत्र तत्र पारेत
योजयेत् ॥ संक्रान्त्याश्च यदोदश्यां पयाले तपोदिने ॥ मज्यां एकिका-
रे च वापमानमवैकल्पेत् । पुनरन्यानि संक्रान्त्यां पारे तदर्द्दने सदा ॥
निर्द्धाने च कर्त्तव्ये निदिदोषो न विद्यते । पोषमाच्छमसावाच्छा दा-

दशम्यां प्रदयेऽहनि । धमपुष्पकषोर्यौ (कलचार्यौ ?) शिलापिष्टं परिल्पेत् । शातातप । रविवारेऽर्कसंक्रान्त्यां यदा (यदां ?) वा सप्तमीति थौ । आयुरारोग्यकामस्तु विल्वपत्रं न भक्षयेत् ॥ हत्यविस्मामनो (थो ?) मधुरं निम्बपत्राणां योऽश्निमेयगते रवौ । अपि क्रोधान्वितस्तस्य तक्षकः किं करिष्यति । दीपिकायां नाड़ीत्रयदिवसे (नाड़ीनवकदिवसे?) रविभौमशनैश्चराः । संक्रान्तिं यस्य कुर्वन्ति तस्य लोकोऽभिजायते । गोमुत्रपंचैः स्नानं सर्व्वौषधिजलेन च । विप्राय काञ्चनं दद्यान्नाड़ीनवकशान्तये । सम्वत्सरप्रदीपे । यदादि (यदकि?) मेषसंक्रान्तिस्तत्तासंक्रमणं तदा प्रजा विवर्द्धन्ते धन्यधान्यसमृद्धिभिः । कुजार्कशनिवारेण महासंक्रमणं यदा भवेत्तदा प्रजानाशनिर्दुर्भिक्षादिभयं तथा । तस्य प्रतीकारमाह । धुस्तुराबीजसलिलैः स्नायात् । तथा सर्वौषधीय विष्णु मन्त्राच संजपेत् । भीमपराक्रमे यस्तु भाद्रपदस्याम्ते उदिते कलशोद्भवे । अर्घं दद्यादगस्त्याय सर्वान् कामान् लभेत सः ॥ मुसवंसे (?) चैत्रे मासि च संपूर्णौ (र्थ्यो ?) घपहाकर्षौ घटायक) (?) । आरोग्याय स्वचीमूलं संक्रान्त्यां तत्र कारयेत् । स्मृतिः मेषादौ शक्तवो देया वारिपूर्णा च गर्गरी । महार्णवे । योऽदात्ति हि मेषादौ शक्तूनम्बुघटान्वितान् । पितृनुद्दिश्य विप्रेभ्यः सर्वपापैः प्रमुच्यते । विप्रेभ्यः पादुके छत्रे पितृभ्यो विषुभे शुभे । पितृभ्य· पितृनुद्दिश्य अत्र विषुवस्य पुण्यविशेषजनकत्वात् । मेषाभि (मेषाभिधानं ?) विषुवसंक्रान्तिपुण्यकालपरः । अन्यथा कालद्वयकल्पनापत्तिः स्यात् । • ॥

**Colophon.** इति संक्रान्तिनिर्णय(यः) समाप्तः । • । • ८

विवरणम् । संक्रान्तिनिर्णयोनाम द्वादशसंक्रान्तिनामसंक्रमणसमयतद्घटितपुण्यकालादिनिरूपणविषयकः कश्चिन्निबन्धविशेषः ।

---

No 298 घट्टोत्सर्गसूचनिका । Ghaṭṭotsarga-súchaniká Substance, country-made white paper, 10×4½ inches. Folia, 5. Lines, 8-9 in a page. Character, Nágara. Date, ? Appearance, old, and torn. Prose Not correct. Complete.

A work, treating of the offering of a ghát or steps on the banks of a river, for public use, and the religious merit of the act. Anonymous.

**Beginning.** श्रीगणेशाय नमः । अथ नवकुंडी विधानेन घटोत्सर्ग सूचनिका क्रियते । तत्रादौ नंदिपुराणोक्तानि मूलवाक्यानि । अग्निष्टोम सम· कूपः

**Beginning.** श्रीकृष्णाय नमः ॥ वेदान्तवेद्यं श्रीरामं प्रणम्य
द्वादशमासेषु कृत्यमत्र प्रवक्ष्यते ॥
श्रीयुमकृष्णदेवः । प्रणम्य रामस्य पदारविन्दं
तिथिमत्स्येषु मन्थेयं प्रमाणवाक्य कोविदैः ।
न निबध्यते ॥ अथ वैशाखकृत्यम् ॥ पद्मपुराणम् ॥
स्नानं विधीयते ॥ भविष्यं प्रक्षुपर्यं च
शवामहंग्रहतानां स्वर्चं दद्यात् यत्फलं । तत्फलं
स्यात् जाह्नवीं । पितामहः । कार्तिकस्य तु
विशेषतः । कृच्छ्रादिनियमानाञ्च चान्द्रायणप्रमाणतः ।

**End.** अथ चैत्रकृत्ती । भविष्ये चैत्रे शुक्लत्रयोदश्यां मदनं
संपूज्य विधिवदीजयेद्राजनेन तु ॥ तत्र मन्तुचिन्तः
इनः ॥ कामदेवत्रयोदश्यां पूजनीयोयथाविधिः
अशोकमाल्यभूषितः ॥ सिन्दूररजनीवक्षो
अयन्तस्य विलिख्य सधनुःशरं । अशोकतरुमूले वा
प्रीतिश्च दक्षिणे तत्र रतिर्वामे च सुन्दरी । मध्य
श्रेष्ठ प्रावरेः ॥ मन्तुचिन्तः प्रीचितः रजनीहरिद्रा ।
त्रयोदशीं प्राप्य उद्याने हविषे शुभे ॥ परतिं
परेऽहनि । मधौ मासि सिते पक्षे कामक्रीडातिथिश्रये
विद्धा भवेत्पूज्या चतुर्दशी । तिथिचय इति ।
अस्मायस्यापन परेऽहनि चतुर्दशीयुक्तायां त्रयोदश्यां
तत्परेऽहनि चतुर्दश्यां प्रातः कर्मादिभि
त्रयोदश्यां मध्याह्ने स्नात्वा
सधनुःशरं दक्षिणे प्रीतियुक्तं वामे रतिमन्वितं
लिख्य गन्धपुष्पधूपदीपनैवेद्यादिभिर्मंत्रोपचारैः
पुष्पाञ्जलित्रयं दत्त्वा प्रणमेत् ॥ तत्र मन्त्रः ॥
मीनकेतन । मुनीनां लोकपालानां धैर्य्यच्युतिकृते नमः ॥
कन्दर्प शम्बरारे रतिप्रिय । नमस्तुभ्यं जितारोषभुवनाय
योमम नश्यन्तु व्याधयश्च शरीरजाः । सम्पद्यतामभीष्टं
स्थिरः । नमोरामाय कामाय देवदेवस्य मूर्त्तये । ब्रह्म
मनःक्षोभकराय ते ॥ एवं यः कुरुते पूजामनङ्गस्य भक्त्या
नापदस्तस्य जायन्ते कदाचन ॥ सिध्यन्ति तत्र तत्रापि
भवेत् । सर्व्वसम्पत्युतः श्रीमो देवमन्मोदते भुवि ॥ १

मासे तु संप्राप्ते शुक्लपक्षे चतुर्दशी । प्रोक्ता मदनभञ्जीति त्रिशाल्मकम श्रोतव्या । पूजयिष्यन्ति ये मर्त्यास्तद्दुलनवपल्लवैः । ते यास्यन्ति परं स्थानं मदनस्य प्रभावतः । पूजयन्ति काममिति शेषः तद्दुलनवपल्लवैः । तस्य मदनकस्य चक्रैः प्राणाभिः शरभिर्गुच्छैः पल्लवैरित्यर्थः । तथा चैत्रे- मासि चतुर्दश्यां मदनस्य महोत्सवः । कुर्वितोत्तिभिश्चैव गीतवाद्यादिभि- र्यथा । प्रातः प्रहरमात्रन्तु कर्दमैः क्रीडनं भवेत् । भगवांस्तुष्यते कामः पुत्र- पौत्रसमृद्धिदः । ततः स्नात्वा च मध्याह्ने विरच्य च मनोगृहम् । चा- त्मानं भूमये (भूपये ?) वस्त्रैर्गन्धमाल्यानुलेपनैः । व(न ?) पालयन्ति ये चैवं मासनं (मादनं ?) मानवाधमाः । तेषां पुण्यफलं दत्तं मया ते चैत्र- मासिकं । हे कामदेव तेषां चैत्रमासजं पुण्यं मया तुभ्यं दत्तमिति शद्ध- रोक्तिः स्तो नित्यमिदं । तथा चैत्रपक्षौ तदा देवं पूजयित्वा सदाशिवं । सप्तजन्मकृतैः पापैर्मुच्यते नात्र संशयः । कुङ्कुमेन तथाभ्यर्च्य देवदेवं महेश्वरं । यत् प्राप्यते फलं सम्यक् न तत् क्रतुशतैरपि । देवीपुराणे पौर्णमास्यां तथा कार्य्या सर्वकामसमृद्धये । इन्द्राय चैव शच्या तु पूजा सर्वफलप्रदा । मन्दे वार्के गुरौ वापि वारेष्वेतेषु चैत्रकी । तत्राश्वमेधजं पुण्यं स्नानस्य लभते नरः । मन्दे शनिवारे इत्यर्थः ॥ ० ॥

**Colophon.** इति वन्द्यघटीयश्रीकृष्णभट्टाचार्य्यविरचितः संवत्सरप्रयोगसारः समाप्तः ॥

विवरणम् । सौरवैशाखादिमासचैत्रान्तसम्वत्सरकर्त्तव्ययावत्धर्म्मकर्म्मानुष्ठानप्रयोगरूपोऽयं निबन्धः वन्द्यघटीयनारायणभट्टाचार्य्यात्मजश्रीकृष्णभट्टाचार्य्यविरचितः ।

---

No. 300. दोलयात्रा । Dolayátrá. Substance, country-made yellow paper, 18×3 inches. Folia, 3. Lines, 8-9 in a page. Character, Bengali. Date, ? Appearance, not old. Prose. Generally correct. *Complete.*

*A guide to the performance of the festival known as* Dolayátra in Bengal, performed for three or five days from the full moon of the month of Phálguna. It is observed also in other parts of India under the name of Hôli festival. Anonymous.

**Beginning.** ॐ नमो गणेशाय । अथ दोलयात्रा । स्कान्दे । फाल्गुने मासि कुर्व्वीत दोलारोहणमुत्तमं । यत्र क्रीडति गोविन्दो लोकानुग्रहकारकः । फल्

**Beginning.** श्रीकृष्णाय नमः ॥ वेदान्तवेद्यं श्रीरामं प्रणम्य मम्मुदे मया । क्रमाद् द्वादशमासेषु कृत्यतत्त्वं प्रवक्ष्यते ॥ नारायणोवन्द्यकुलाग्रजन्मा तस्यात्मजः श्रीयुतकृष्णदेवः । प्रणम्य रामस्य पदारविन्दं प्रयोगसारं कुरुतेऽसमभवं ॥ तिथितत्त्वेषु सन्त्येयं प्रमाणशास्त्र कोविदैः । वैशाखादिक्रमेणैव प्रयोगो-ऽत्र निबध्यते ॥ अथ वैशाखकृत्यम् ॥ पद्मपुराणम् ॥ तुलामकरमेषेषु प्रातः स्नानं विधीयते ॥ हविष्यं ब्रह्मचर्य्यं च महापातकनाशनम् ॥ वैष्णवाम्बवे । गवामर्बुदप्रसूतानां स्वर्णं दत्त्वा तु यत्फलं । तत्फलं लभते राजन् मेषे स्नायात्तु जाह्नवीं । पितामहः । कार्त्तिकस्य तु यत् स्नानं माघे मासि विशेषतः । कृच्छ्रादिनियमानाञ्च चान्द्रायणप्रमाणतः ।

**End.** अथ चैत्रकृत्यं । भविष्ये चैत्रे शुक्लत्रयोदश्यां मदनं चन्दनात्मकं कृत्वा । संपूज्य विधिवद्वीजयेद्व्यजनेन तु ॥ तत्र सन्धुचितः कामः पुत्रपौत्रविवर्द्धनः ॥ कामदेवस्त्रयोदश्यां पूजनीयोयथाविधिः । रतिप्रीतिसमायुक्तो ऽशोकमाल्यभूषितः ॥ सिन्दूररजनीवर्द्धो रतिप्रीतिसमन्वितं कामदेवं वसन्तञ्च विलिख्य सधनुःशरं । अशोकतरुमूले वा चित्रे वापि प्रपूजयेत् ॥ प्रीतिश्च दक्षिणे तत्र रतिर्वामे च सुन्दरी । मध्याह्ने पूजयेद्भक्त्या भक्ष्यैर्भैश्च प्रावरैः ॥ सन्धुक्षितः प्रीणितः रजनीहरिद्रा । श्रीरमार्त्तण्डे । रात्रौ त्रयोदशीं प्राप्य उद्याने कृत्रिमे शुभे ॥ सरतिं मन्मथं स्थाप्य पूजयेद-परेऽहनि । मधौ मासि सिते पक्षे कामक्रीडातिथिस्त्रयं । तस्मात्त्रयोदशी-विद्धा भवेत्पूज्या चतुर्दशी । तिथिस्त्रय इति । द्वादशीदिने रात्रौ मन्मथस्थापनं परेऽहनि चतुर्दशीयुक्तायां त्रयोदश्यां कामपूजामहोत्सवः तत्परेऽहनि चतुर्दश्यां प्रातः कर्दमादिभिर्ज्जुगुप्सितोक्तिभिश्च क्रीडेति । तत्र त्रयोदश्यां मध्याह्ने स्नात्वा सिन्दूरहरिद्रावर्द्धैरशोकतरुमूले चित्रपटे वा सधनुःशर दक्षिणे प्रीतियुक्तं वामे रतिसहितं कामदेवं वसन्तं च विलिख्य गन्धपुष्पधूपदीपनैवेद्यादिभिर्महोपहारैः पूजयेत् । एवं संपूज्य पुष्पाञ्जलित्रयं दत्त्वा प्रणमेत् ॥ तत्र मन्त्रः ॥ पुष्पधन्वन्नमस्तेऽस्तु नमस्ते मीनकेतन । मुनीनां लोकपालानां धैर्य्यच्युतिकृते नमः ॥ माधवात्मज-कन्दर्प शम्बरारे रतिप्रिय । नमस्तुभ्यं जिताशेषभुवनाय नमोऽभुवे ॥ आध-योमम नश्यन्तु व्याधयश्च शरीरजाः । सम्पद्यतामभीष्टं मे सम्पदः सन्तु मे स्थिराः ॥ नमोरामाय कामाय देवदेवस्य मूर्त्तये । ब्रह्मविष्णुशिवेन्द्राणां मनःक्षोभकराय ते ॥ एवं यः कुरुते पूजामनङ्गस्य महात्मनः । भवन्ति-नापदस्तस्य तस्मिन्नब्दे कदाचन ॥ सिध्यन्ति तत्र तत्रासा नारीणां वल्लभो भवेत् । सर्व्वसम्पत्युतः सुखी देववन्मोदते भुवि ॥ स्मृतिसारे ॥ मधु-

माघे तु संप्राप्ते शुक्लपक्षे चतुर्दशी । प्रोक्ता मदनभञ्जीति मिथ्यात्मकस्य चोत्सवा । पूजयिष्यन्ति ये मर्त्यास्तद्दृतस्पल्लवैः । ते यास्यन्ति परं स्थानं मदनस्य प्रभावतः । पूजयन्ति काममिति प्रोक्तं तद्दृतस्पल्लवैः । तस्य मदनकस्य चर्च्चैः गाथाभिः सर्वमिर्मुच्छैः पक्वैर्पेत्यर्थः । तथा चैत्रे-मासि चतुर्द्दश्यां मदनस्य महोत्सवः । गुगुच्चितोक्तिभिश्च गीतवाद्यादिभिः-स्तथा । प्रातः प्रहरमात्रन्तु कर्द्दमैः क्रीड़नं भवेत् । भगवांस्तुष्यते कामः पुत्र-पौत्रसमृद्धिदः । ततः स्नात्वा च मध्याह्ने विदृश्य च मनोभुवम् । चा-त्मानं भूमये (भूषये ?) दक्षैर्गन्धमाल्यानुलेपनैः । व(न ?) पालयन्ति ये पर्वं मासवं (मादनं ?) मानवाधमाः । तेषां पुण्यफलं दत्तं मया ते चैत्र-मासिकं । हे कामदेव तेषां चैत्रमासजं पुण्यं मया तुभ्यं दत्तमिति मद्द-रोक्तिः फलो नित्यमिदं । तथा चैत्रपक्षां तदा देवं पूजयित्वा सदाशिवं । सप्तजन्मकृतैः पापैर्मुच्यते नात्र संशयः । कुङ्कुमेन तथाशिवा देवदेवं महेश्वरं । यत् प्राप्यते फलं सम्यक् न तत् क्रतुशतैरपि । देवीपुराणे पौर्णमास्यां तथा कार्य्या सर्वकामसम्पदये । इन्द्राय सह शच्या तु पूजा सर्वफलप्रदा । मन्दे वार्के गुरौ वापि वारेष्वेतेषु चैत्रकौ । तत्राश्वमेधजं पुण्यं स्नानस्य लभते नरः । मन्दे शनिवारे इत्यर्थः ॥ ० ॥

**Colophon.** इति वन्द्यघटीयश्रीकृष्णभट्टाचार्य्यविरचितः संवत्सरप्रयोगसारः समाप्तः ।

विवरणम् । गौरवैशाखावधिकचैत्रान्तसम्वत्सरकर्त्तव्ययावत्धर्म्मकर्म्मानुष्ठानप्रयोगरूपोऽयं निबन्धः वन्द्यघटीयनारायणभट्टाचार्य्यात्मजश्रीकृष्णभट्टाचार्य्यविरचितः ।

---

No. 300. दोलयात्रा । Dolayátrá. Substance, country-made yellow paper, 18×3 inches. Folia, 3. Lines, 8-9 in a page. Character, Bengali. Date, ? Appearance, not old. Prose. Generally correct. Complete.

A guide to the performance of the festival known as Dolayátra in Bengal, performed for three or five days from the full moon of the month of Phálguna. It is observed also in other parts of India under the name of Hôli festival. Anonymous.

**Beginning.** ॐ नमोगणेशाय । अथ दोलयात्रा । स्कान्दे । फाल्गुने मासि कुर्व्वीत दोलारोहणमुत्तमं । यत्र क्रीड़ति गोविन्दो लोकानुग्रहकारकः । चतु

मूहर्त्तं प्रकुर्व्वीत पञ्चाहानि त्र्यहाणि वा । प्रत्यर्च्चां देवदेवस्य गोविन्दा-
ख्यस्य कारयेत् ॥ फाल्गुन्याः पूर्व्वतोऽपिशाचचतुर्द्दश्यां निशामुखे वह्न्युत्सवं
प्रकुर्व्वीत दोलमण्डपपूर्व्वतः । प्रत्यर्च्चा प्रतिमा एतेन श्रीकृष्णप्रतिमाया
एव यात्राविधानमुपपन्नं । यत्र क्रीडति इति हेतुनिर्द्देशात् कुर्व्वीत-
कारयेदित्यादौ कर्त्तृविशेषणानुपदेशेन नरमात्राधिकारः । तथा सनत्-
कुमारतन्त्रे श्रीकृष्णोपासकं प्रति यात्राप्रकरणमुपदिष्टं । तथैकदेशे भक्त्य-
ङ्गतया भगवतीयात्रामात्रस्य विहितत्वात् यथायात्रावलिविधानस्येति
एवञ्च जगन्नाथप्रतिमाप्रसङ्गेन उक्तत्वेऽपि यात्राया न तन्मात्रपरत्वमिति
दोलक्रीडाया वृन्दावनलीलान्तर्गतत्वेन तन्निमित्ततया प्रतिमात्र एव तत्-
करणस्य न्यायसिद्धत्वादिति एवञ्च फाल्गुण (ने ?) मासि गोविन्दस्य
दोलयात्रां कुर्य्यादित्येवं विधिः कल्प्यते । अत एव पुरुषोत्तमक्षेत्रेऽपि जग-
न्नाथप्रतिमायां नैतद्यात्राकरणं किन्तु गोविन्दप्रतिमायामेव । फाल्-
गुन्याः पूर्व्वत इत्यस्य उभयदिने निशामुखे चतुर्द्दशीलाभे परदिने प्रदोषा-
य सार्थक्यं (?) फाल्गुनीपूर्व्वदिने निशामुखे चतुर्द्दश्यलाभे तत् पूर्व्वदिने
निशामुखे चतुर्द्दशीलाभे पूर्व्वदिने वह्न्युत्सवं कृत्वा परदिने सायमधिवास
येत् चतुर्द्दश्यामित्युक्तत्वात् यदा चोभयदिने न निशामुखे चतुर्द्दशीलाभस्तदा
परदिने वह्न्युत्सवः फाल्गुन्याः पूर्व्वत इत्युक्तत्वादिति केचित् । वस्तुतस्तु
फाल्गुनीपूर्व्वदिने निशामुखे वह्न्युत्सवः सर्व्वैव कार्य्यः न तु कदाचिदपि
निशामुखे चतुर्द्दश्यनुरोधेन ततपूर्व्वदिने फाल्गुन्याः पूर्व्वत इत्युक्तत्वात्
कृत्वा वह्न्युत्सवं तत्र प्रातर्गोविन्ददोलनमिति । वराहसंहितायां वह्न्युत्स-
वदिन एवारुणोदयकाले दोलस्य विधानाच्च ।

**End.** ॥ सनत्कुमारतन्त्रे । पौर्णमास्यां महापूजा सन्ध्यौ च दोलयेत् प्रभुं ।
त्रयोदशाक्षरेणैवं चाष्टादशाक्षरेण वा । फाल्गुन्याञ्च प्रकर्त्तव्या पूजा पूर्व्वो-
क्तवर्त्मना । तथा मन्त्रः । प्रजप्तव्यश्चाष्टाधिकसहस्रकः । अत्र त्रयोदशाक्ष-
राष्टादशाक्षरयोरुपादानं दशाक्षरादेरप्युपलक्षकम् । कृष्णमन्त्रोपासक-
मात्रमुद्दिश्य तत्रैव यात्राविधानात् पूर्व्वोक्तवर्त्मना प्रागुक्तनित्यपूजापरि-
पाट्या । तथा फलकामस्तु गोविन्दं दोलारूढं जगत्पतिं । पूजयेद्विधिव-
द्भक्त्या मण्डले च समाहितः । ऋग्यजुःसामयुक्तैश्च मन्त्रैः पौराणिकैरपि ।
मन्त्रैरागमिकैश्चैव वैष्णवैः कीर्त्तयेद्धरिं । तद्गुणोत्कीर्त्तनैश्चैव दिवारात्रिं
नयेद्बुधः । अष्टोत्तरसहस्रैस्तु कृत्वा देवं विसर्ज्जयेत् । कृत्वैवं कृतकृत्य-
स्यात् सत्यं सत्यं मतिर्म्ममेति । एवञ्च वैदिकतान्त्रिकाद्येकतरविधिना वैदि-
कतान्त्रिकमिश्रितविधानेन वा पूजादिकं कार्य्यमित्यवगम्यते । वैदिक-

चान्द्रिकोमिथ इति मे विविधिघोमथ इत्येकदेशायेति। पौर्णमास्यां पूजामित्यत्र कालविशेषेत्यपादानादरुणोदयकाले पूजनासमर्थे पूर्वाह्णे महापूजनमिति केचित्। ब्रह्मवैवर्ते। प्रकृतिखण्डे यो नरो भारते वर्षे दोहनं कारयेद्धरेः। पूर्णिमारजनीयोगे जीवन्मुक्तो भवेद्ध्रुवं। फाल्गुन्युत्तर-फल्गुन्यां ततोऽपि द्विगुणं भवेदिति। इदञ्च पौर्णमास्यामुत्तरफल्गुनी-योगे फलातिशयबोधकं। अथ केवलायामपि उत्तरफल्गुन्यां दोलविधा-यकं तदप्यरुणोदयकाल एव मुख्यं।०।०।

Colophon. नास्ति।

विवरणम्। श्रीश्रीकृष्णस्य दोलयात्राविधानविषयकोऽयं निबन्धः।

---

No. 301. यमद्वितीयाकथा। Yamadvitíyákathá. Substance, Kášmíri paper, 10×4 inches. Folia, 5. Lines, 10–11 in a page. Character, Nágara. Date, Samvat, 1890. Appearance, not old, but slightly worm-eaten throughout. Verse. Generally correct. Complete.

Extracts from the Padmapuráṇa on the birth of Chitragupta, the *progenitor of the Káyasthas, and the manner of his* worship, which is to be performed on the white lunar second day of the month of Kártika.

Beginning. श्रीगणेशाय नमः। दत्तात्रेय उवाच। त्रिकालज्ञं महाप्राज्ञं पुलस्त्यं मुनिपुङ्गवम्। पप्रच्छ उपसंगम्य भीष्मः शस्त्रभृतां वरः॥१॥ भीष्म उवाच। चतुर्णामपि वर्णानामाश्रमाणाम्यथैव च। संभवः शंकरादीनां श्रुतोविस्त-रतो मया॥२॥ भूय एव महाप्राज्ञ श्रोतुमिच्छामि तत्वतः। कायस्था इति ये लोके ख्याताश्चैव महामुने॥३॥ वैष्णवा दानशीलाश्च विष्णुभक्ति-परायणाः। सुधियः सर्व्वशास्त्रेषु चाचारव्यवहारबोधकाः॥४॥ पोहारो निजधर्मस्थ ब्राह्मणानां विशेषतः। मानवं श्रोतुमिच्छामि कथ्यतां च महामुने॥५॥ एतन्मे संशयं विप्र बहुमर्मंप्रयोजनः। इति श्रुत्वा मुनिः प्राह भीष्मं प्रतिविषदः॥६॥ पुलस्त्य उवाच। शृणु भीष्म वक्ष्यामि कायस्थोत्पत्तिकारणं। न श्रुतं यत्तया पूर्वं तन्मे वदतः शृणु॥७॥

End. दत्तात्रेय उवाच। सुमेधंवनमाकर्ण्य भीष्मः प्रयतमानसः चकार पूजनं तस्य चित्रगुप्तस्य वै द्विज॥१८॥ कार्त्तिके शुक्लपक्षस्य द्वितीया या तु संज्ञिता यजेत एवमुख्यैव एतच्चंदनपात्रतः॥१९॥ कुन्दपुष्पादुपैव

गन्धैः पुष्पैर्विशेषतः । नैवेद्यैर्विविधैश्चैव फलैश्च विविधैरपि ॥ ७० ॥ त्रिया सह समुत्पन्नः समुद्रमथनोद्भवः ॥ चित्रगुप्त महाबाहो ममायुर्वरदो भव । ७१ ॥ चित्रगुप्तस्तु संतुष्टो भीष्माय प्रददौ वरम् । मत्प्रसादान्महाबाहो मृत्युस्ते न भविष्यति ॥ ७२ ॥ स्मरिष्यसि यदा मृत्युं समवाप्स्यसि भारत । इति तस्मै वरं दत्त्वा विचरन्वै जगाम ह । ७३ । अनेन विधिना यस्तु चित्रगुप्तस्य पूजनं करिष्यति महाबुद्धिस्तस्य पूजाफलं शृणु ॥ ७४ । इहैव विपुलान् भोगान् भुक्त्वा चैव मनोरमान् अंत्ये च वैष्णवं लोकं यत्र गत्वा न शोचति । ७५ । चित्रगुप्तकथां दिव्यां कायस्थोत्पत्तिसंज्ञकां मनसा भक्तियुक्तेन ये शृण्वंति नरोत्तमाः । ७६ । दीर्घायुषो भविष्यन्ति सर्वव्याधिविवर्ज्जिताः पठनाच्छ्रवणाद्‌ ब्रह्मन् गोसहस्रफलं लभेत् ॥ ७७ ।

**Colophon.** इति श्रीपद्मपुराणे यमद्वितीयाकथा समाप्ता । खनंदवसुभूवर्षे १८९० वैक्रमे कार्त्तिके सिते । द्वितीयायां बुधे लेखि श्रीलक्ष्मणेन पयासिना लिखितं जयकृष्णपयासिमिश्रेण ।

विवरणम् । यमद्वितीयाकथा पद्मपुराणसंग्रहीता । अत्र कायस्थवंशप्रवर्त्तकचित्रगुप्तोत्पत्तिस्तत्प्रभावस्तत्पूजनफलादिकं सर्वं विवृतमस्ति ।

---

**No. 302** मण्डपप्रतिष्ठा । Mandapa Pratishṭhá. Substance, country-made white paper, 10×4 inches Folia, 6. Lines, 14–17 in a page. Character, Nágara. Date, ? Appearance, very old, and worn out. Prose. Generally correct. Incomplete.

Though entitled Mandapa PratisLthá, or a work on the consecration of a temple or building for the service of a deity, it treats of several rites besides this, such as, Añkurárpanavidhi, or a ceremony performed in planting sprouts of some sacred trees as the Vilva, Aśvattha, &c.; Prokshaṇa-pratisaravidhi, or a ceremony performed in wearing an auspicious string round the hand; Mátrikápújá, or the worship of the goddesses known as Mátṛikás. Hence it ought to be entitled Prayogasára, or something of the same import. Anonymous.

**Beginning.** ॥ श्रीगुरुभ्यो नमः ॥ अथ मंडपप्रतिष्ठा ॥ अद्येत्यादि श्रवणांते अमुककर्मकर्तुमादौ मण्डपदेवताप्रतिष्ठापूजनं करिष्ये इ[ति] संकल्प्य पूजनं

कुर्यात् । नंदिनी नलिनी मैत्री उमा च पद्मवर्द्धिनी ॥ अचतैः प्रादौ नंदिन्यै नम इति आग्नेयस्तंभे षोडशोपचारैः पूजयेत् । निकामे निकामे नः पर्जन्यो वर्षतु । कांडात् कांडात् प्ररोहंती सवेन च यावती ष्वोषधीः सर्वाः । अच्छन्तयशाः स्थिताः सर्वास्ता इष्टकाः कृता । उपकामदुघा इषे । इषि- श्रावृषः । स्थिरोभव । इभिरुपचारैर्मंडपदेवता नंदिनी प्रीयतां ॥ ११ ॥ एवं नैर्ऋत्यां स्तूपायां नलिनीं पूजयेत् । एवं वायव्यां मैत्रीं । ऐशान्यां पद्मवर्द्धिनीमुमां पूजयेत् ॥ मध्ये उपरि मध्याचा प्रच्छन्नानमिति ॥ अधोवास्तुपुरुषं वास्तोष्पते इति मंत्रे पूजयेत् ॥ वास्तुपुरुष नमस्तेऽस्तु सर्वदेति प्रार्थयेत् । इति मंडपप्रतिष्ठा ॥

End. ( नास्ति ) ॥

Colophon. ( नास्ति ) ।

विवरणम् । मण्डपप्रतिष्ठेति नाम्ना परिकल्पितेऽस्मिन् पुस्तके मण्डपप्रतिष्ठाङ्कुरार्पणविधि प्रोक्षणप्रतिसरविधिकङ्कणमोचनमातृकापूजा इत्यादयनाभ्युदयिकाग्निमुखप्रमुखकर्मणामनुष्ठा- नप्रयोगोऽवर्ण्यते । ननयाज्य प्रयोगसार इत्येवंविधं किञ्चिन्नामैवोपचितम् । इत्यलम् ।

---

No. 303. भीष्मपञ्चकव्रतकथा । Bhíshma Pañchakavratakathá. Substance, country-made yellow and white paper, 10×4 inches. Folia, 4. Lines, 8–10 in a page. *Character, Nágara.* *Date, Samvat, 1907.* Appearance, fresh. Verse. Generally correct. Complete.

Extracts from the Náradíyapurána on a religious observance known as *Bhíshma Pañchaka*, performed by *Bhíshma* for five days from the white eleventh lunar day of the month of Kártika, under the advice of Krishna.

Beginning. श्रीगणेशाय नमः ॥ हेमाद्रिमतपच्चे भीष्मपञ्चकव्रतम् ।नारदीयपुराणात् नारद उवाच यदेतदमलं पुण्यं जनानां परमव्रतम् कार्त्तिके कार्त्तिके- मासि प्रथमाद्भीष्मपञ्चकम् पावनं सर्व विस्पष्टं पञ्चांच हरसत्तम कथयस्व प्रसादाम्मे मुनीनां हितकाम्यया सनौकाच प्रवक्ष्यामि महापुण्यं व्रतं व्रतवतामर भीष्मेन तद्यतः प्राप्तं व्रतं पञ्चदिनात्मकम् सकाशाद्वासुदे- वस्य तेनोक्तं भीष्मपञ्चकम् ॥ व्रतमस्य गुणान् वक्तुं कः क्षमः केशवा- हते व्रतमेतन्महापुण्यं महापातकनाशनम् । ऋषीभिः प्रदेशेन कर्त्तव्यं भीष्मपञ्चकम् । कार्त्तिकस्यामले पक्षे स्नात्वा सम्यग्यतो द्विजः । एकाद- श्यां तु गृह्णीयाद्व्रतं पञ्चदिनात्मकम् ।

End. इदं भीष्मेण कथितं शरतल्पगतेन मे यदेतत्ते मया ख्यातं दुष्करं भीष्मपञ्चकम् व्रतं नृपराजशार्दूल प्रवरं भीष्मपञ्चकम् । यस्तस्मिन्नोपयेद्भक्त्या तस्मै मुक्तिप्रदोऽच्युतः ब्रह्मचारी गृहस्थो वा वानप्रस्थो यथा यतिः प्राप्नोति वैष्णवं स्थानं यत्कृत्वा भीष्मपञ्चकम् ब्रह्महा मद्यपस्तेयी गुरुगामी सदान्वितौ कृत्वा पूजां तथा भक्त्या विप्राणां देवतादिनां मुच्यते पातकात् सम्यक् कृत्वैकं भीष्मपञ्चकं यथास्मिंस्तोषितो विष्णुर्येषां मुक्तिप्रदोभवेत् शृण्वैतत् पठ्यमानं तु पवित्रं भीष्मपञ्चकं मुच्यते पातकान्मर्त्यः पाठको विष्णुलोकभाक् धन्यं पुण्यं पापहरं युधिष्ठिर महाव्रतं सर्वोत्तं ब्रह्महा-गोघ्नः सर्वपापैः प्रमुच्यते यद्भीष्मपञ्चकमिति प्रथितं पृथिव्यामेकादशी-प्रभृतिपञ्चदशीनिरुद्धं उत्पन्नभोजनपरस्य नरस्य नमिमिष्टं फलं दिशति पाण्डव शार्ङ्गधन्वा कार्त्तिके मार्गशीर्षे च माघे वैशाखसंभवे पञ्चभीष्माणि कुर्वीत एकादश्यां दिनात्मके ।

Colophon इति श्रीनारदीयपुराणभीष्मपञ्चकव्रतकथा विधिः समाप्त (समाप्तः?) लिखितमिदं पुस्तकं प्रतापनारायणपयाशिमिश्रेण गणेशद्विवेदेन स्व स्वपित्राज्ञया सम्वत् १९०७ मार्गशीर्षकृष्ण १२ रवौ शुभमस्तु श्रीः रामः ।

विवरणम् । श्रीनारदपुराणसंगृहीता भीष्मपञ्चकव्रतकथा ।

---

No. 304. दशकर्म्मदीपिका । Daśakarmadípiká Substance, country-made yellow and white paper, 18 × 2½ inches. Folia, 17. Lines, 2–5 in a page with a blank space of about a quarter of an inch in the middle. Character, Bengali. Date, ? Appearance, old. Prose. Generally correct. Incomplete (A part only.)

A guide to the performance of the ten purifying ceremonies under the name of Daśakarma Dípiká by Paśupati. The codex under notice contains only the Viváha Prakarana, or the chapter on marriage, and a portion of the Chaturthí homa, a rite required to be performed on the night of the fourth day of the wedding.

Beginning. ॐ नमो गणेशाय । अथ दशकर्म्मपद्धतिः ॥ तत्र विवाहदिवसे प्रातर्निर्व्वर्त्तितनित्यकृत्यौ कन्यावरपितरौ गौर्य्यादिमातृकापूजां वसुधारां वृद्धिश्राद्धं कुर्य्यातां ॥ गौरी पद्मा शची मेधा सावित्री विजया जया । देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥ शान्तिः पुष्टिर्धृतिस्तुष्टि

एतौ देवतया सह । आदौ विनायकः पूज्यो अन्ते च कुलदेवता ॥ अथ पटादिषु लिखितासु अक्षतपुञ्जेषु वा प्रथमं गणपतिं संपूज्य ॐ भूर्भुवः स्वः गौरीमातरः अत्रमारोपयामि गौरी (रि) मातरिहागच्छ इह तिष्ठ एतत्पाद्यं ॐ गौर्य्यै मात्रे नमः । इति पाद्यादिदूर्व्वाक्षतपञ्चवासान्तं दद्यात् ।

End. नास्ति ।

Colophon. नास्ति* ।

विवरणम् । पुस्तकेऽस्मिन् पशुपतिकृतदशकर्मदीपिकायाः सम्पूर्णविवाहप्रकरणं, चतुर्थीहोमस्यांशमात्रञ्च विद्यते ।

---

No. 305 दशकर्म्मव्याख्या । · Daśakarmavyákhyá. Substance, palm-leaf, 18 x 1½ inches. Folia, 104. Lines, 5 in a page, having a blank space of about an inch square in the middle. Character, Bengali. Date, ? Appearance, old, and slightly worm-eaten in parts. Prose. *Generally correct* Complete.

An explanatory gloss on the Grihya aphorisms on the ten purifying ceremonies by Haláyudha. In fact, it forms a part of his voluminous work called Bráhmana-sarvasva. Haláyudha *was a minister in religious matters of King Lakshmana Sena* of Bengal, and brother of *Paśupati.*

Beginning. ॐ नमोगणेशाय ॥ दरितवदद्यतु यस्य प्रथमो मुखं प्रकाशदृप्तय । ध्वनिरभिविततः शास्त्रार्थवेदाश्छन्दांसि पत्राणि ॥ स जयति कुमतितमिस्रं विधुरभिभविता सुतेजसा महसा । अविकलगणकलपदार्थः प्रभवति पुरःप्रसादतो यस्य ॥ निर्घण्टं प्रसभीक्ष्य शास्त्रगर्भं व्याख्यास्वर्व ब्राह्मणम् । व्याख्याभिः गुणविष्णुसर्व्वनिपुणान् शिष्यैकदीक्षागुरुन् । विद्वान् वासमुपास्य संप्रदमिमं षट्कर्मणां प्रीतये मिश्रामन्द महाव (महाय एव?) यजुषां व्याख्यानमिच्छाम्यहम् ॥ शास्त्रेषु भारहारः किल्वाभूदधीत्य वेदं न जानाति योऽर्थम् । अर्थज्ञ इत् सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ॥ तस्मात् अन्तर्गतानि अविज्ञाय । तथा योऽक्षरदरविषच्छन्दो विनियोगेन दैवतमिन्द्राग्निमिति मन्त्रेण ब्राह्मणेन वा यजति, याजयति वा अधीते अध्यापयति वा सो

* The following note occurs at the end of the Viváha Prakarana इति राजपण्डित पशुपतिकृतायां दशकर्मदीपिकायां विवाहप्रकरणं समाप्तम् ॥

कर्म्मण्यन्तर्जले वा स पापीयान् भवति यातयामान्यस्य छन्दांसि भवन्ति अथयोमन्त्रे मन्त्रे तानि वेद स श्रेयान् भवति अयातयामान्यस्य छन्दांसि भवन्ति। इति श्रुते ऋषिच्छन्दोदैवतविनियोगज्ञाने यतितव्यं यजूंषि पवित्रपरिमिताक्षराणि अपरिमितपदानि च न तत्र छन्दःसम्भवः। इत्यादि श्रुतिवचनाद्वेदार्थादिज्ञाने ब्राह्मणानामवश्यकता।

**End.** अथ कन्यायाः स्थालीपाकप्राशने परीकरः अथैनां स्थालीपाकं प्राशयति ॥ प्राणैस्ते प्राणान् ॥ मन्त्रो यथा। ॐ प्राणैस्ते प्राणान् सन्दधाम्यस्थिभिरस्थीनि मांसैर्मांसानि त्वचा त्वचं। हे कन्ये ते तव प्राणान् प्राणैः सन्निहितत्वाद्योग्यत्वाच्च मदीयैरिति बोद्धव्यम्। सन्दधामि योजयामि तथा तेऽस्थीनि अस्थिभिः सन्दधामि तथा मांसैर्मांसानि संदधामि। अनेन स्थालीपाकप्राशनकर्म्मणा मया सह तवैकप्राणत्वमेकास्थित्वमेकमांसत्वमेकत्वानि करोमीति वाक्यार्थः।

**Colophon.** इत्यावसथिक धर्म्माधिकृतश्रीहलायुधकृतौ ब्राह्मणसर्वस्वे दशकर्म्ममन्त्रव्याख्या समाप्ता। *। शुभमस्तु। श्रीगोपीनाथशर्म्मणा लिखितोऽयं ग्रन्थः॥०॥०॥०॥।

विवरणम्। हलायुधकृतब्राह्मणसर्वस्वस्यांशमात्रभूतोऽयं निबन्धः। अत्र दशकर्म्मविषयकप्राचीनसूत्राणान्तदुपयोगिनां वेदमन्त्राणाञ्च व्याख्यानं वर्त्तते।

---

No. 306 दशकर्म्मपद्धतिः। Daśakarma Paddhatiḥ. Substance, country-made white paper, 14×5 inches. Folia, 50. Lines, 6–11 in a page. Character, Nágara. Date, Samvat 1855. Appearance, very old, and worn out. Prose. Not correct. Complete.

A guide to Daśakarma or the ten purifying ceremonies as performed by the followers of the Vájasaneyí S'ákhá of the S'ukla Yajurveda, by Ráma Datta, a Paṇḍita of Mithilá. Hence this work is regarded as of high authority by the Bráhmanas of Mithilá. Some of the Vaidika Bráhmanas in Bengal also perform their domestic ceremonies according to the directions of this work.

**Beginning.** श्रीगणेशाय नमः। अथाभ्युदयिकश्राद्धम्। तत्र प्रथमं तद्दिवसकृत्यो मातृपूजाविधिः। प्रातःकाले स्नातः कृतनित्यक्रियः कुड्ये पट्टके वा स्थापितरचिकायां वा गणपतिसहितषोडशमातृः पूजयेत्॥ तदभावे रचिकायामेव पूजयेत्॥ मातरश्च गौरी, पद्मा, शची, मेधा, सावित्री,

विजया, जया, देवसेना स्वधा स्वाहा मातरो लोकमातरः । हृष्टिः पुष्टिस्तथा तुष्टिरात्मकुलदेवता ॥ तत्र क्रमः । आचम्य प्राङ्मुख उपविश्य । अक्षतकुशान् गृहीत्वा ॥ ॐ अद्यामुकगोत्रस्यामुकमाणवकस्यामुककर्मणि गणदुर्गागौरीसहितगौर्य्यादिषोडशमातृवर्गं पूजयिष्ये ॥

End. सर्व्वाञ्जनं । वृत्रस्यासि कनीनकचक्षुर्दा असि चक्षुर्मे देहि इति मंत्रेण तत आदर्शे आदर्शनं । ॐ रोचिष्णुरसि इति मंत्रेण ॥ ततश्छत्रधारणं । बृहस्पते छदिरसि पाप्मनो मामंतर्द्धेहि तेजसो यशसो मामंतर्द्धेहि इति मंत्रेण ॥ ततः पादुकामुपानहौ गृह्णाति । ॐ प्रतिष्ठे स्थो विश्वतो मायात । इति मंत्रेण ततो वैणवदण्डधारणं ॥ ॐ विश्वाभ्यो मा नाष्ट्राभ्यः परिपाहि सर्व्वतः इति मंत्रेण ॥ तत आचार्य्याय वरदक्षिणां दद्यात् । तत ॐ मूर्द्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आजातमग्निं । कविᳬ सम्राजमतिथिं जनानामासन्ना पात्रं जनयंत देवाः स्वाहा ॥ इति मंत्रेण । फलपुष्पसमन्वितघृतपूर्णस्रुवेण माणवकदक्षिणकरस्पृष्टेन उत्थाय पूर्णाहुतिमाचार्य्यः कुर्य्यादिति । तत उपविश्य स्रुवेण भस्मानीय दक्षिणानामिकाग्रगृहीत त्र्यायुषं कुर्य्यात् । ॐ त्र्यायुषं जमदग्नेः । ॐ कश्यपस्य त्र्यायुषं । ॐ यद्देवेषु त्र्यायुषं तन्नो अस्तु त्र्यायुषमिति मंत्रेण । ॐ त्र्यायुषं जमदग्नेः इति ललाटे । ॐ कश्यपस्य त्र्यायुषमिति ग्रीवायां । ॐ यद्देवेषु त्र्यायुषं इति दक्षिणबाहुमूले । ॐ तन्नो अस्तु त्र्यायुषमिति हृदि । इति हृदि (?) त्र्यायुषं कुर्य्यात् । अनेनैव क्रमेण माणवकललाटादावपि । तत्र तन्नो इत्यस्य स्थाने तत्ते इति विशेषः । ततो दूर्व्वाञ्चनादि ॥ इति महामहत्तमसहासामंताधिपतिश्रीरामदत्तविरचिता वाजसनेयिनां विवाहादिकर्म्मपद्धतिः समाप्ता ॥ शुभमस्तु । संवत् १८५५ ॥ पौषे मासि शुक्लपक्षे शनिवासरे । राम राम राम राम राम राम राम राम राम राम राम राम राम राम राम राम राम राम राम राम राम राम राम राम राम राम राम राम राम राम राम राम राम ॥ जय सिताराम ।

विवरणम् । रामदत्तविरचिता वाजसनेयिशाखिनां विवाहादिदशकर्म्मपद्धतिः ।

*Note.*—This codex has also a complete guide to the performance of the *Abhyudyaika Sráddha*, and some fragments of a guide to the performance of the marriage ceremony and Kuśaṇḍiká, &c., written in the Bengali character on foolscap paper.

तत्राभ्युदयिकश्राद्धविषयकं पुस्तकमेकमन्यविषयाणि कतिपयपत्राणि सन्ति ।

No. 307. दशपुत्राह्निकम् । Daśaputrâhnikam. Substance, country-made white paper, 7×3 inches. Folia, 33. Lines, 10–12 in a page. Character, Nágara. Date, ? Appearance, very old, written by different hands, worn out, torn, and worm-eaten in parts. Prose. Generally correct. Incomplete.

A guide to the performance of the daily religious observances of a Hindu by Ánanda, son of Prabhákara of the Daśaputra family.

Beginning. श्रीगणेशाय नमः ॥ श्रीविघ्नगणपतये नमः ॥ उन्निद्रनीलांबुजकान्तिमुग्धः श्रीरामचंद्रः करुणासमुद्रः । सीतामुखांभोरुहधर्मरश्मिः पायादपायादिह माधवो नः ॥ १ ॥ श्रीभैरवं चंद्रकलावतंसं काशीनिवासिद्विजमुक्तिहेतुं ॥ वंदे सदानंद चिदंबुधिं तं प्रपन्नविघ्नार्तिहरं पुरारिं । जगदंबामवलंबे यद्दोषेऽपि स्थिते वेदः । दुर्लक्ष्यामपि मार्ग्यैः सम्यक् लक्ष्यामिव विपश्चितः ॥ दशपुत्रान्ववायी यः प्रभाकरसुतो द्विजः । नानानिबंधान् संगृह्यात्यानंदोह्याह्निकाख्यया ॥ तत्र पूर्व्वमनुष्ठेयकर्म्मणः कालविभाग उच्यते येनाह दक्षः । उक्तकर्मोभोक्तो न कालो मुनिभिः स्मृतः । द्विजातीनां हितार्थाय दक्षः स्वयमिहाब्रवीत् ॥ दिवसस्याद्यभागे तु कृत्यं तस्योपदिश्यते । द्वितीये च तृतीये च चतुर्थे पंचमे तथा ॥ षष्ठे च सप्तमे चैव अष्टमे च पृथक् पृथक् ॥

End. नास्ति ।

Colophon नास्ति ।

विवरणम् । दशपुत्रीयप्रभाकरात्मजानन्दविरचितमाह्निककृत्यमसम्पूर्णम् ।

---

No 308 दशश्लोकीव्याख्या । Daśaślokívyákhyá Substance, country-made colourless paper, 8×4 inches. Folia, 25 (of which the first two are wanting). Lines, 10–17 in a page. Character, Nágara. Date, Saka 1500 * Appearance, very old, worn out, torn, and worm-eaten throughout, with writing by different hands. Prose. Generally correct. Complete.

A work consisting of explanatory notes or a gloss on the famous work entitled Daśaślokí or ten verses, treating of Aśauchas or impurities caused by death, under the name of Daśaslôki-vyákhyá by Raghunátha Bhaṭṭa, son of Mádhava Bhaṭṭa.

* This is the date of the work, and not of the present copy.

*Beginning* नास्ति ।

End. तदीयमधिके सापेक्षयाधिके चाधिके वर्षे सपिंडे जाते मृते च तदीयमधिकरणाशौचं कुर्य्यात् । तथाच विष्णुः । हीनवर्णानामधिकवर्णेषु तदाशौचव्यपगमे शुद्धिरिति । शूद्रैः समाः सङ्कराः । सङ्कराः प्रतिलोमजाः सूतादयः । शूद्रैः समाः । यस्मिन्निमित्ते शूद्रस्य यदाशौचमुक्तं तस्मिन्नेव निमित्ते संकराणां तदेवेत्यर्थः । तथाच ब्रह्मपुराणे । शौचाशौचे प्रकुर्वीरंश्शूद्रवद्वर्णसंकरा इति । चतुर्विंशतिमतेऽपि प्रतिलोमानां चाशौचाभाव एवेत्युक्तं तद्वचनविरोधादुपेक्षणीयं । प्रतिलोमा धर्म्महीना इत्येतत्तु पाकयज्ञाद्यभिप्रायमिति सर्व्वं समंजसं ॥ १० ॥ पिताम्बुनारायणबोधितेन ग्रंथो मयायं विहितोऽवलोक्य । स्मृतीर्निबंधांश्च बहुननेन रघूद्वहस्तुष्यतु धूर्जटिश्च ॥ ११ ॥ खवेषु भूमिप्रमिते प्रयाति शकेऽजपूर्य्यां नृपविक्रमस्य वर्षाब्दभागानुमताविषाय समाप्तिमेषा दशश्लोकटीका ॥

Colophon. इति श्रीमत्पदवाक्यप्रमाणज्ञविद्वद्वृन्दमूर्धन्योपाध्यायभट्टमाधवात्मजोपाध्यायभट्टरघुनाथोन्नीता दशश्लोकविवृतिः समाप्ता । वेणुपुर्य्यां लिखितमिदं पुस्तकं फणिभट्टेन । शु । ॥ ११ ॥

विवरणम् । माधवभट्टात्मजरघुनाथभट्टविरचिता दशश्लोकीव्याख्या । सर्वाशौचानां निर्णयो विद्यते ।

---

, No. 309. जलाशयोत्सर्गविधिपद्धतिः । Jalāśayotsargavidhipaddhatiḥ. Substance, country-made white paper, 16 × 6 inches. Folia, 41 Lines, 12-15 in a page. Character, Nágara. Date, Samvat 1953. Appearance, fresh. Prose. Not correct. Incomplete.

A guide to the performance of certain ceremonies performed at the consecration of a tank, well, &c., for public use by Náráyana Bhaṭṭa, son of Rámesvara Bhaṭṭa. The codex has been recently copied from an old MS., as noticed below, at the instance of Babu Nílmaṇi Mukherji, Principal of the College. It contains also a guide to the performance of Arkaviváha or marriage with an Arka plant, which is performed before one marries for the third time.

**Beginning.** (नास्ति) ।

**End.** ततो यानमप्यमंत्रेण पूर्णाहुतिं ततोऽग्निं सम्पूज्य प्रणिपत्य विसर्ज्जयेत् । अनवकाशे त्वादादिन एव चतुर्थीकर्म्मेति शिष्टाः शक्ता (क्तया ?) ऋत्विग्भ्यो दक्षिणा देया द्विगुणाचार्य्याय भूरिपूजा उत्तरपूजा देवताविसर्ज्जनं तड़ागादियज्ञोपकरणानां गुर्व्वादित्यो (भ्यो ?) दानं कार्य्यं भवमष्टो- त्तरमं (मष्टोत्तरशतं) पञ्चाशद्वा शक्त्या वा ब्राह्मणान् भोजयेत् दक्षिणा- दानादिवाक्ये आरामोत्सर्गे इत्यत्रेपः (उत्क्रमः ?) एवमेकदर्शोत्सवेऽपि दक्षिणादानानंतरं गुरवे दातुमिदं वस्तु संकल्प दद्या (संकल्प्य दद्यात् ?) ततो ब्राह्मणाशिषो गृह्णीता (ब्राह्मणाशिषो गृह्णीता ?) दुष्टः (हृष्टः ?) सुहृद्भुजिवेति (भुञ्जीतेति ?) एवं मुख्यसंकल्पः आशक्तस्तु (अशक्तस्तु) पयोदशभिर्व्वलिभिरेकेन वा गुरवैकाग्निविधानेन कुर्य्यात् इति सर्व्वं- मभमयां (सर्व्वमवदातम् ?) भट्टरामेश्वरसुतोभट्टनारायणः सुधीः । यदत्तनुचिरां (यदत्र ऋषिवान् ?) काम्या (`?) आरामोत्सर्गपद्धतिं ॥ इति भट्टरामेश्वरसुतभट्टनारायणकृता आरामोत्सर्गपद्धतिः तृतीयादि- विवाहार्थं तृतीये के समुद्वभेत् (तृतीयार्कं समुद्वहेत् ?) तद्विधिस्तु वरः संकल्प्य स्वस्तिवाचनं नांदीश्राद्धं कृत्वा आकृष्टेनेति सूर्य्यं ध्यायन् अर्कं संपूज्य शर्करोदनं दद्यादर्केण तंतुभिरावेष्ट्य, त्रिलोकवासिन् सप्ताश्व छायया सहितो रवेः । तृतीयोद्वाहजं दोषं निवारय सुखं कुरु । इति अर्कशाखां संप्रार्थ्य जलेन नि.सिंचेत् । मम प्रीतिकरा येयां मया सृष्टा पुरातनी ॥ अर्कजा ब्रह्मणा सृष्टा अस्माकं प्रतिरक्षतु । नमस्ते मंगले देवि नमः सवितुरात्मजे । त्राहिमां कृपया देवि पत्नी त्वं मे इहागता । अर्के त्वं ब्रह्मणा सृष्टः सर्व्वप्राणि हिताय च । वृक्षाणामादि- भूतस्त्वं देवानां प्रीतिवर्द्धन । तृतीयोद्वाहजं दोषं मृत्युनाशं विनाशय नत.॥ आचार्य्यकाश्यपगोत्रां आदित्यप्रपौत्रीं सवितुः पौत्रीं मम पुत्रीं अर्क- कन्यां अमुकगोत्राय वराय तुभ्येति (इत्येति ?) वाग्दानं कृत्वा वरस्य मधुपर्कं दत्त्वा अतः पटं धृत्वा स्वस्ति न इति सूक्तं जप्त्वा पूर्व्ववत् गोत्रोच्चारणपूर्व्वकं अर्ककन्यामिमामप्रत्यूहेन कन्यां दत्त्वा दक्षिणां दद्यात् ततो गायत्र्यावेष्टितसूत्रेण इदन् सामेति कङ्कणं बद्ध्वा अर्कस्य चतुर्दिक्षु कुंभेषु विष्णुं सम्पूज्य अग्निं प्रतिष्ठाप्य अघोरावाजनागोऽकृत्वा बृहस्पतये यस्मै त्वां कामकामये स्वाहा अग्नये व्यस्तसमस्ताव्याहृतिभिः आज्यं हुत्वा आचार्य्याय गोद्वुग्धं दद्यात् । मया कृतमिदं कर्म्म स्थावरेषु वरेषु च । अर्कापत्ये शुभं देहि ममसर्व्वं चतुर्दर्शपि ॥ १ ॥ इति अर्कविवाहः ॥

Colophon. इति भट्टरामेश्वरसुतभट्टनारायणभट्टकृति जलाशयोत्सर्गपद्धतिरचिता इति भट्टरामेश्वरसुतभट्टनारायणभट्टकृतः (ता?) जलाशयोत्सर्गविधि-पद्धतिः समाप्तं (समाप्ता?) शुभं भवतु समतु (सम्वत्?) १८११ का मिति मार्गशिर कृष्णाप्रतिपदि शनिवारे लिखितं इदं पुस्तकम् विश्वे-श्वरेणेदम् । किलकिला पुरीमध्ये । गौरस्तु: (?) । यादृशं पुस्तकं दृष्टा (दृष्टं?) तादृशं लिखितं मया यदि शुद्धमशुद्धं वा मम दोषो न दियते (दीयते?) ॥ १ ॥

विवरणम् । भट्टरामेश्वरसुतभट्टनारायणविरचिता जलाशयोत्सर्गपद्धतिरत्रास्ते हलोप-दारपरिग्रहावसरे प्रथममर्कस्यैव सह यया रीत्या विवाहः कर्तव्यः सापि रीतिः प्रदर्शिता ।

---

No. 310. जलाशयोत्सर्गविधिपद्धतिः । *Jalásayotsargavidhipaddhatiḥ.* Substance, country-made colourless paper, 11 × 3½ inches. Folia, 51. (of which fol. 1 is wanting). Lines, 10–11 in a page. Character, Nágara. Date, Saka 1622. Appearance, very old, worn out, torn, and writing effaced in parts. Prose. Not correct. Incomplete.

Another copy of the same work. This is the original copy from which the codex noticed above, has been recently copied.

Colophon. शीशाके १६११ माघ शुक्लतिथौ १७ शुभम् ।

विवरणमुक्तपूर्वम् ।

---

No 311. जलाशयोत्सर्गविधिः । Jalásayotsargavidhiḥ. Substance, country-made white paper, 11 × 4½ inches Folia, 13. Lines, 7–13 in a page Character, Nágara. Date, Samvat 1804. Appearance, very old, worn out, and slightly worm-eaten throughout. Prose. Not correct. Complete.

Another work on the same subject. Anonymous.

Beginning. ॥ ॥ सर्वसंभारो (संभारसंभारो?) यजमानोऽधिवासनदिनात् पूर्वेद्यु निरामिषं सहकृत्वाऽधिवासनदिने तु धौतवासः शुक्लाम्बरधरः इत निस्क्रियः कुशपाणिः कुशासने प्राङ्मुखमुपरि—सजातु (भुवपरिजन-जातु?) रायश्च प्राणानायाम्य मङ्गलपाठमभ्यहाय देवताभ्यो कृत्वा वा कर्म—जलाशयोत्सर्गं (कर्तव्य तडागोत्सर्ग) पद्धतिविधिपरिसमाप्तिकामो विनायकं सम्पादिदयापि पूर्वदिने इति ।

End. ततो द्वादशपंचदशविंशत्यन्यतमारत्निमिता यज्ञीयहस्ता यष्टिं पार्थिवे मतो जलान्तिके प्रागप्रागामने संस्थाप्य नागयष्ट्यै नम इति संपूज्य पाद्यगंधादिभिरलंकृत्य तदीयदुग्धशुष्कमस्तके शूले क्षौद्रं चक्रं समारोपयेत् चक्रं सुदर्शनाप्य (?) स्वं नागदंडशिरोगतं । थव वि ॥ । द । । द ।
संमत् (संवत् ?) १८०४ मिति जे वदि चौमि । । । द । ।

विवरणम् । जलाशयोत्सर्गविधिर्नाम तड़ागाद्युत्सर्गविषयकोऽयं निबन्धः ।

---

No. 312. जलाशयोत्सर्गतत्त्वम् । Jaláśayotsargatattwam. Substance, foolscap paper, 16×4 inches. Folia, 12. Lines, 4–8 in a page Character, Bengali. Date, ? Appearance, fresh. Prose. Generally correct. Complete.

Another work on the same subject under the name of Jaláśayotsargatattwa, by Raghunandana. It is a section of his 28 tattwas.

Beginning. ॥ अथ जलाशयोत्सर्गप्रयोगः । शुभलग्ने कृतनित्यक्रिय आचार्य्यो यजमानः पश्चिमद्वारे मण्डपं प्रविश्य विष्णुं संस्मृत्य । ॐ तद्विष्णोरित्यादि प्राङ्मुखस्तिलकुशजलान्यादाय अद्येत्यादिचतुर्वर्गमहीदानजन्यफलसमफलप्राप्तिकामो विष्णुप्रीतिकामो वा पुष्करिणीजलाशयोत्सर्गमहं करिष्ये ।

End. ततः कूर्म्मादीन् कूपे निःक्षिपेत् । ॐ कूपजलाशयाय नमः इति त्रिः पूजयेत् एतदधिपतये वरुणाय नमः एतत् सम्प्रदान सर्व्वभूतेभ्यो नमः कुशतिलजलान्यादाय ॐ अद्येत्यादि एतत् कूपजलाशयाधिकरणकप्रत्येकजलबिन्दुसमसंख्यएतवर्षावच्छिन्नस्वर्गप्राप्तिकामः श्रीविष्णुप्रीतिकामो वा कूपजलाशयं वरुणदैवतं सर्व्वभूतेभ्योऽहमुत्सृजे । इत्युत्सृजेत् । ॐ देवपितृमनुष्याः प्रीयन्तां ॐ सर्व्वभूतेभ्यो उत्सृष्टं मयैतज्जलसत्तमं रमन्तु सर्व्वभूतानि स्नानपानावगाहनैः । ॐ येन केचिद्विपद्यन्ते स्वकर्म्मफलभोजनाः । तेषां दोषैर्न लिप्येऽहं स्वयं स्वर्गमवाप्नुयात् । इति पठित्वा ॐ अद्येत्यादिकृतैतत्कूपजलाशयोत्सर्गकर्म्मणः प्रतिष्ठार्थं काञ्चनमूल्यं अग्निदैवतं अमुकशर्म्मणेऽहं संप्रददे । ततो आपोहिष्ठेति तिसृभिर्ऋग्भिर्गव्यं तीर्थोदकञ्च जलाशये निःक्षिपेत् आचार्य्यो यजमानश्च पात्रावस्थितदुग्धधारया जलाशये ॐ आपोहिष्ठेति ऋक्त्रयेण प्रदक्षिणत्रयं कुर्य्यात् अच्छिद्रावधारणं शान्तिञ्च कृत्वा विंशान्यूनब्राह्मणान् भोजयेत् ॥ । * ॥

Colophon. इति वन्द्यघटीयश्रीहरिहरभट्टाचार्य्यात्मजश्रीरघुनन्दनभट्टाचार्य्यकृते स्मृतितत्त्वे कूपजलाशयोत्सर्गतत्त्वं समाप्तम् । ० । ० ।

विवरणम् । स्मार्त्तश्रीरघुनन्दनभट्टाचार्य्यविरचितं कूपजलाशयोत्सर्गतत्त्वं तदीयस्मृतितत्त्वान्तर्गतम् ।

---

No. 313. गृहप्रतिष्ठातत्त्वम् । *Grihapratishthátattwam.* Substance, foolscap paper, 16×4 inches. Folia, 25. Lines, 8 in a page. Character, Bengali. Date, ? Appearance, fresh. Prose. Generally correct. Complete.

A work treating of the rites or ceremonies performed before a new house is used by the owner, or is consecrated to a god.

Beginning. ॐ नमः श्रीकृष्णाय । अथ वास्तुप्रयोगः । शुभदिने यजमानः कृतस्नानादिः कृतनित्यक्रियः । ॐ तत्सदित्युच्चार्य्य अद्येत्यादि एतद्दिग्वेश्मवास्तुसर्व्वदोषोपशमनकामो वास्तुयागमहं करिष्ये । एवं वास्तुयागवास्त्वादिप्रयोग । इति सङ्कल्प्य मातृकापूजावसोर्धारासम्पातनायुष्यसूक्तजपाभ्युदयिकश्राद्धान्यहं करिष्ये इति सङ्कल्पान्तरं विधाय तत्तत्कर्म्म यथाविधि समाप्य प्रकृतं कर्म्म कुर्य्यात् ।

End. । योगियाज्ञवल्क्यः । ध्यायेन्नारायणं नित्यं स्नानादिषु च कर्म्मसु । तद्विष्णोरिति मन्त्रेण स्नायादप्सु पुनः पुनः । गायत्री वैष्णवी ह्येषा विष्णोः संस्मरणाय वै । ध्यायेत् । स्मरेत् । वामनपुराणे । सर्व्वमङ्गलमाङ्गल्यं वरेण्यं वरदं शिवम् । नारायणं नमस्कृत्य सर्व्वकार्य्याणि कारयेत् । यमः । पुष्पाद्यर्च्चनमप्येव प्राङ्मुखस्य विधीयते । व्यासः संपूज्य गन्धपुष्पाद्यैर्ब्राह्मणान् स्वस्ति वाचयेत् । भोजयेद्वा यथाशक्त्या पश्चाद्गृहाय विंशतिम् । ० ।

Colophon. इति गृहप्रतिष्ठातत्त्वं समाप्तम् । ० । ० ।

विवरणम् । देवप्रतिमादिस्थापनार्थनिर्म्मितनूतनगृहप्रतिष्ठाविषयकोऽयं निबन्धः ।

---

No 314. ग्रहयज्ञप्रयोगः । *Grahayajña Prayogah.* Substance, country-made yellow paper, 16×2 inches. Folia, 13. Lines, 4-5 in a page, having a blank space of about half an inch square in the middle

Character, Bengali. Date, ? Appearance, not old. Prose. Generally correct. Complete.

A guide to the performance of a rite intended to avert the evil influence of a star or planet. By Raghunandana, the author of the Smrititattwa.

**Beginning.** ॐ नमो गणेशाय ॥ प्रणम्य कमलाकान्तं यज्ञरूपिणमीश्वरम् । प्रयोगं ग्रहयज्ञस्य वक्ति श्रीरघुनन्दनः ॥ रविसोमबृहस्पतिवारेषु चित्रानुराधा मृगशिरोरेवतीपुष्याश्विनीहस्तारोहिणीश्रवणोत्तरात्रयेषु शुभलग्ने यागः कार्य्यः ॥ तत्र बालग्रहनराधिपप्रबलतरशत्रुदुःसहरोगाभिभवाङ्कितदुःस्वप्नग्रहवैगुण्य-दोषादिनिमित्तं मलमासादावपि नवग्रहं विनायेवस्तु(?) इत्यायुः पुत्रश्रीकामादिपौष्णिकन्तु मलमासादितरस्मिन् कार्य्यम् ॥

**End.** अथेत्यादि पठित्वा बृहस्पतियज्ञे पीतवस्त्रं दक्षिणां । पीतवस्त्राभावे अन्यवस्त्रमपि । ॐ विष्णुस्त्वमस्मरूपेण (अश्वरूपेण?) यस्मादमृतसम्भवः । चन्द्रार्कयोर्वाहनस्त्वमतः शान्तिं प्रयच्छ मे ॥ इत्युच्चार्य्य अथेत्यादि-पठित्वा शुक्रयज्ञे अश्वं तन्मूल्यं काञ्चनम्वा दक्षिणां दद्यात् ॥ ॐ यस्मात्त्वं पृथिवी सर्व्वा धेनुः केशवसम्भवा । सर्व्वपापहरा नित्यमतः शान्तिं प्रयच्छ मे ॥ इत्युच्चार्य शनियज्ञे अथेत्यादि कृष्णां गां अभावे अन्यवर्णाम्वा दक्षिणां दद्यात् ॥ ॐ यस्मादायसकर्म्माणि तदधीनानि सर्व्वदा । मङ्गलाद्यायुधादीनि अतः शान्तिं प्रयच्छ मे ॥ इत्युच्चार्य्य राहुयज्ञे अथे-त्यादि लौहं दक्षिणां दद्यात् । ॐ यस्मात्त्वं सर्व्वभूतानां मङ्गलं व्यवस्थितः । छागोविभावसोर्नित्यमतः शान्तिं प्रयच्छ मे । इत्युच्चार्य्य केतुयज्ञे अथेत्यादि पठित्वा छागं दक्षिणां दद्यात् ॥

**Colophon.** इति ग्रहयाग. समाप्तः ॥ ० ॥ भीमस्यापि रणे भङ्गो मुनीनाञ्च मति-भ्रमः । यथादृष्टं तथा लिखितं लेखके नास्ति दूषणम् ॥

विवरणम् । स्मार्त्तश्रीरघुनन्दनभट्टाचार्य्यविरचितग्रहयज्ञानुष्ठानविषयकोऽयं निबन्धः ।

---

**No. 315.** उत्सर्गमयूखः । Utsarga-mayúkhah Substance, country-made white paper, 10×6 inches. Folia, 21. Lines, 12 in a page. Character, Nágara. Date, ? Appearance, not old, but slightly worm-eaten throughout. Prose. Generally correct. Complete.

A work treating of the ceremonies performed on the occasion of offering a well or a garden, &c., for public use, under

Character, Bengali. Date, ? Appearance, not old. Prose. Generally correct. Complete.

A guide to the performance of a rite intended to avert the evil influence of a star or planet. By Raghunandana, the author of the Smrititattwa.

**Beginning.** ॐ नमो गणेशाय ॥ प्रणम्य कमलाकान्तं ग्रहरूपिणमीश्वरम् । प्रयोगं ग्रहयज्ञस्य वक्ति श्रीरघुनन्दनः ॥ रविसोमबृहस्पतिवारेषु चित्रानुराधाश्रवणमृगशिरोरेवतीपुष्याश्विनीहस्तारोहिणीषूत्तरात्रयेषु शुभलग्ने यागः कार्य्यः ॥ तत्र बालपञ्चनराधिपप्रबलतरगदुःस्थग्रहरोगाभिभवाद्भुतदुःस्वप्नगणग्रहदोषादिनिमित्तं मलमासादावपि नवग्रहं विनायकञ्च (?) इष्टायुःपुत्रश्रीकामादिपौष्टिकन्तु मलमासादितरस्मिन् कार्य्यम् ॥

**End.** अद्येत्यादि पठित्वा बृहस्पतियज्ञे पीतवस्त्रं दक्षिणां । पीतवस्त्राभावे अन्यवस्त्रमपि । ॐ विष्णुस्त्वमश्वरूपेण (अश्वरूपेण ?) यस्मादमृतसम्भवः । चन्द्रार्कयोर्व्वाहनस्त्वमतः शान्तिं प्रयच्छ मे ॥ इत्युच्चार्य्य अद्येत्यादि पठित्वा शुक्रयज्ञे अश्वं तन्मूल्यं काञ्चनम्वा दक्षिणां दद्यात् ॥ ॐ यस्मात्त्वं पृथिवी सर्व्वा धेनुः केशवसम्भवा । सर्व्वपापहरा नित्यमतः शान्तिं प्रयच्छ मे ॥ इत्युच्चार्य्य शनियज्ञे अद्येत्यादि कृष्णां गां अभावे अन्यवर्णाम्वा दक्षिणां दद्यात् ॥ ॐ यस्मादायसकर्म्माणि तदधीनानि सर्व्वदा । लाङ्गलाद्यायुधादीनि अतः शान्तिं प्रयच्छ मे ॥ इत्युच्चार्य्य राहुयज्ञे अद्येत्यादि लौहं दक्षिणां दद्यात् । ॐ यस्मात्त्वं सर्व्वभूतानां मङ्गलं व्यवस्थितः । बाह्लोविभावसोर्नित्यमतः शान्तिं प्रयच्छ मे ॥ इत्युच्चार्य्य केतुयज्ञे अद्येत्यादि पठित्वा छागं दक्षिणां दद्यात् ॥

**Colophon.** इति ग्रहयाग. समाप्त. ॥ • ॥ भीमस्यापि रणे भङ्गो मुनीनाञ्च मतिभ्रमः । यथादृष्टं तथा लिखितं लेखके नास्ति दूषणम् ॥

विवरणम् । स्मार्त्तश्रीरघुनन्दनभट्टाचार्य्यविरचितग्रहयज्ञानुष्ठानविषयकोऽयं निबन्धः ।

---

No. 315. उत्सर्गमयूखः । Utsarga-mayúkhah. Substance, country-made white paper, 10×6 inches. Folia, 21. Lines, 12 in a page. Character, Nágara Date, ? Appearance, not old, but slightly worm-eaten throughout. Prose. Generally correct. Complete.

A work treating of the ceremonies performed on the occasion of offering a well or a garden, &c., for public use, under

the name of Utsarga-mayúkha, by Nílakaṇṭha Bhaṭṭa. It forms a part of his series entitled *Bhagavanta Bháskara.*

**Beginning.** श्रीगणेशाय नमः । उक्त्वा दानविधिं नाम्नं नाममाराद्भास्करम् । उत्सर्गविषयं भट्टनीलकंठो वदत्यथ ॥ १ ॥ आज्ञप्तेन राज्ञा विबुधकुलमणिदीक्षितात्यावतंसोभट्टः श्रीनीलकंठः स्मृतिषु दृढमतिर्मीमांसेऽद्वितीयः आज्ञामादाय मूर्ध्ना सविनयममुना तस्य सर्व्वार्थसंधान् दृष्ट्वा सम्यग्विविच्य प्रविततकिरणस्तन्यते भास्करोऽयं सतारकैराहतमत्र किंचिन्मयात्र निर्मूलतया सदुज्झितं । अमोज्झितातो नहि तेन कश्चित् अनुप्यहीनापचितिर्मं दीयते । संस्काराचारकालाः समुचितरचना श्राद्धनीतिर्विवादोदानोत्सर्गप्रतिष्ठा जयति जयकराः मंगलायानुबद्धाः प्रायश्चित्तं विशुद्धिस्तदनुनिगदिता शांतिरेवं क्रमेण ख्याता ग्रंथेऽत्र मयूखे बुधजनसुखदा द्वादशैवे मयूखाः भगवन्तभास्कराख्ये ग्रंथेस्मिन् शिवसंभवे + + + ततः उत्सर्गविधिमयूखः प्रतन्यते नीलकंठेन तत्र जलाशयोत्सर्गप्रशंसा विष्णुधर्मोत्तरे । उदकेन विना वृत्तिर्नास्ति लोकद्वये सदा । तस्माज्जलाशयाः कार्या पुरुषेण विपश्चिता । यमः कूपारामप्रपाकारी तथा वृक्षावरोपकः । कन्याप्रदः सेतुकारी स्वर्गं प्राप्नोत्यसंशयम् । तथा तडागे यस्य पानीयं सततं खलु तिष्ठति । स्वर्गे लोके सतिष्ठस्य नात्र कार्या विचारणा । नंदिपुराणे । यो वापीमथवा कूपं देशे तोये विवर्जिते । खानयेत् स नरो याति स्वर्गे प्रेत्य. शतं समाः ।

**End.** इदं सकलसत्वनिवहतिंतिडीकपित्थबिल्वामलकाम्रदाडिमादिनाना वृक्षयुतं वनस्पतिदैवताकं सौवमर्त्यपापदयपूर्व्वकमतीतानागतपितृकुलतारणकामो भगवत्प्रीतिकामो वा सर्व्वसत्वेभ्यस्तदुत्सृजे । तत्र चाद्दिनं मंत्रद्वयं पठेत् । सर्व्वभूतेभ्य उत्सृष्टं मयैतद्वनमर्जितम् । रमंतु सर्व्वभूतानि स्नानपानावगाहनादिभिः । ततो वृक्षमूलान्यपि सत्वरैः । पुनर्यजमानमभिषिंच्य स्नापयेयुः । तत्र मंत्रमंत्रः । सुराम्त्वाभित्यादयश्च ततो यजमान उपविश्यापेत्यादि ब्राह्मणदारामतत्रिकर्म्म मधुपर्कार्थमधुकपर्कोपेभ्य दद्याः कृतं माः । अष्टाविंशं पंचाशतं वाविंशतिं पंचविंशतिं वा यथाशक्ति वाद्देवताः । दक्षिणासहित सुवर्णं सुवर्णनिष्कं संप्रददे । इति दत्वा वेदमयूखवटकाद्युपीयतां । अथ्यापादुकादुपस्करान् अविमोक्षणो गुरवे वा दद्यात् । तत्र चापरिकेऽपि अर्घं जपहविश्चिव्रदुग्धधारया सर्वं त्रिः परिषिच्य वृक्षं त्रिरं पर्ध्यं दुग्धे

धाययेत् ततो गुरुर्लोकपालेभ्यः प्राग्बलिं दत्त्वा दिनचतुष्टयं। इदमुर्वेषु क्षीराभिषेचनं ग्रहादिपूजनं वेदविद्याविशेषार्थनं वानस्पत्यहोमादि-वैश्यकर्महोमांतं च कृत्वा चतुर्थे दिने होमसमापनांते जलाशयोत्सर्गोक्तं चतुर्थी कर्म कुर्यात्। पूर्वोक्तविहोमोऽत्र वनस्पतिमंत्रेणेति विशेषः नात्र नागयष्टिः। न तीर्थप्रवेशनमिति रूपनारायणः। इयमिति कार्य्य-मित्यन्ये। ततोऽभिषेकग्रहपूजाविसर्जनशय्यादानमंडपाद्युपस्करप्रतिपत्ति विप्रभोजनभूयसीदानकर्मेश्वरार्पणानि जलाशयोत्सर्गवत्। धर्मरत्नो-नरसिंहा शुभसंगमस्य सान्निध्यभाजि कृतशालिनि मध्यदेशे ख्याता भवेद्दनमरी किल तत्र राजा राजीवलोचनरतो भगवतदेवः॥ १॥

Colophon. इति श्रीमत्सामंतचक्रचूडामणि सेंगर (सागर?) वंशावतंस श्रीभगवत् देवादिष्टेन मीमांसकशंकरभट्टाचार्य्यात्मजभट्टनीलकंठेन कृते भगवंत-भास्करे उत्सर्गमयूखः समाप्तः शुभं भवतु ॥ ॥ ॥ ॥ ॥

विवरणम्। श्रीशङ्करभट्टात्मजश्रीनीलकण्ठभट्टविरचित उत्सर्गमयूखोनाम नानाविध-वापीकूपाद्युत्सर्गविषयकोऽयं निबन्धः। प्रबन्धोऽयं भगवद्भास्करान्तर्गतमयूखविशेषः।

---

No. 316. ऋषिपञ्चकम्। Ṛishi-pañchakam. Substance, country-made colourless paper, 14×3½ inches Folia, 7. Lines, 10–11 in a page. Character, Nágara. Date, ? Appearance, very old, worn out, torn, and writing effaced in most parts. Prose and verse Not correct Complete.

A work containing extracts from the Bhavishyottara Purána on the religious observance known as Ṛishi-pañchamí, performed on the white lunar fifth day of the month of Bhádra.

Beginning. श्रीगणेशाय नमः॥ एवं गणविशेषेण विशिष्टायां पुण्यतिथौ मम प्रथम-ऋतुदर्शनादारभ्य शरीरावसानपर्य्यंतं ज्ञाताज्ञातसंसर्गिकमकलत्रजदोष-जनिताशेषकल्मषविनाशनार्थं सप्तर्षिपूजनोक्तयथावत्फलप्राप्त्यर्थं प्राप्त-श्रीरक्षणार्थं धनकामसमृद्ध्यर्थं ब्रह्मऋषिलोकप्राप्त्यर्थं यथामीलितो-(मिलितो?)पचारैः सप्तर्षिपूजनमहं करिष्ये॥ १॥

End. इमे सप्तर्षयः सर्व्वे सर्व्वपापप्रणाशनाः॥ ८३॥ यस्माकं तु हितार्थाय सर्वेहितफलप्रदाः। एवं कृते महाराज ऋषिपंचमी उत्कले॥ ८४॥ व्रतेन तु कुरुश्रेष्ठ सर्व्वकामफलं लभेत्। मानसं वाचिकं पापं कायिकं

तु तृतीयकम् । ९५ । तत्सर्वं विलयं याति व्रतस्यास्य प्रभावतः । संसर्गं यो नरः कुर्य्यान्नार्य्याः संमूढचेतसः । ९६ । धनं यशश्च सर्वं च पुत्रप्राप्तिर्युधिष्ठिर । सर्व्वपापविमुक्तात्मा विष्णुलोके महीयते । ९७ । श्रीकृष्ण उवाच । य इदं पठेद्भक्त्या शृणोति श्रद्धयान्वितः । सर्व्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति । ९८ । ये कुर्व्वंति व्रतं नित्यं माघि माघि मुनिव्रतम् । ते सर्व्वपापनिर्मुक्ताः स्वर्गलोकं व्रजंति वै । ९९ ।

Colophon. इति श्रीभविष्योत्तरे श्रीकृष्णयुधिष्ठिरसंवादे ऋषिपंचमीकथा-उद्यापनं समाप्तम् । राउतपद्मनाभनीपोथी ॥

विवरणम् । भविष्योत्तरसंग्रहीतर्षिपञ्चमीव्रतविषयकोऽयं निबन्धः ।

---

*No.* 317. कार्त्तिकमाहात्म्यम् । *Kártiká Máhátmyam. Substance*, country-made white paper, 10 × 4 inches. Folia, 76. Lines, 7–10 in a page. Extent, about 1370 ślokas. Character, Nágara. Date, Samvat 17 (?). Appearance, very old, worn out, and writing effaced in the last page. Verse. Generally correct. Complete.

Extracts from the Padma Purána, Uttara Khanda, on the sacredness of the month of Kártika.

Beginning. । । श्रीगणेशाय नमः ॥ ऋषयो नैमिषारण्ये श्रुत्वा नामसहस्रकम् । मुख्यं शिवरहस्यं च भूयोदेवर्षिमब्रुवन् ॥ १ । स्वायम्भुवसुतायाः स त्वमनुपश्चतोधयम् । यद्रहस्यं हरेर्नाम श्रुतं त्वन्मुखपङ्कजात् ॥ २ ॥ इदानीमीदृशं धर्म्मं हरेरत्यंततोषणम् । व्रतं किंचिद्वदास्माकं दृढाभक्तिर्यथा हरौ । ३ ॥

End. मंडले साधनं कार्य्यं देवतानां ततः परम् । अष्टाक्षरेण गायत्री सन्यूक्षय पदादिकैः । मंत्रैस्तथामतैः स्नानं पंचभिश्च ततो हरेः । पूर्णाहुतिं ततः कृत्वा देवान् सर्व्वान् विसर्ज्जयेत् । अभिषेकं च तिलकं कृत्वा चाच्छिद्रवाचनं । ब्राह्मणान्भोजयित्वादौ परमान्नेन चाशिषः । ततः संस्कृत्य सन्देयं भुंजीत सह बंधुभिः । कृत्वा व्रतमेवं मुनिवर कार्त्तिकस्य यथाविधिः कथितमिराधमर्थं भुक्त्वा चेहिकफलं सर्व्वनः । स वैकुंठे हरिसन्निधौ प्रयाति ।

Colophon. । इति पद्मपुराणे उत्तरखंडे कार्त्तिकमाहात्म्ये शौनकादिनारदसंवादे सप्तदशोऽध्यायः । १७ ॥ समाप्तं कार्त्तिकमाहात्म्यम् । भैरवाय नमः ।

संवत् १०? समय पुस्तद्दि षष्ठि पुस्तकं कार्त्तिकमाहात्म्यं समाप्तम् ॥ लीखीतं संसोकाय ॥ ॥ सुभमस्तु (शुभमस्तु?) व्यास ऋषीश्वर सुन्दरजी-सुतस्येदं पुस्तकमिदं स्वार्थं परार्थं च ॥ ग्रंथसंख्या १६०० ॥

विवरणम्। पद्मपुराणोत्तरखण्डीयकार्त्तिकमाहात्म्यरूपोऽयं निबन्धः।

---

No. 318. कात्यायनीशान्तिः। Kátyáyaní-śántiḥ. Substance, foolscap and country-made white paper, 6×5 inches. Folia, 15. Lines, 9–10 in a page. Character, Nágara. Date, ? Appearance, old Verse. Not correct. Complete.

A manual treating of auspicious rites according to the rules of Kátyáyana.

Beginning. ॥ ६० ॥ श्रीगणेशाय नमः ॥ अथ कात्यायनीशांतिर्लिख्यते ॥ आदौ गणपतिं पूज्यं(?) ॥ वंदे विघ्ननाशं विनायकं ऋषिच देवजननीपद-स्थापनमारभेत् ॥ १ ॥ मंडलं च ततः कुर्य्यात् सर्व्वतोभद्रमुच्यते। ततोपनयने चूडे यत्र शांतिश्चदाहृता ॥ २ ॥

End. ततोऽग्नौ फलपुष्पसहितां पूर्णाहुतिं दद्यात् तेन मंत्रेण ॐ मुद्धनं दिवो अरतिं पृथिव्यां वैश्वानरमृत आजातमग्निं कविꣳ संम्राजमतिथिं नाना-मासन्नापात्रं जनयंत देवाः स्वाहा सुभमस्तु (शुभमस्तु?)।

Colophon. इति कात्यायनीसांति(शान्ति?)कर्म्मणी (कर्म्म?) संपूर्णं समाप्तं मांगल्यं ददाति।

विवरणम्। चूडोपनयनविवाहादिपूर्व्वकर्त्तव्यशान्तिकर्म्मपद्धतिः कात्यायनमतानुयायिनी।

---

No. 319. काशीसेतुः। Káśisetuḥ. Substance, country-made white paper, 16×4½ inches Folia, 148. Lines, 6–9 in a page. Character, Nágara. Date, Samvat 1884 Appearance, not old, but worm-eaten throughout. Prose. Generally correct. Complete.

A work treating of the greatness of Benares and its power of offering salvation to one dying within its precincts, under the name of Káśisetu, by Náráyana Bhaṭṭa, son of Rámeśwara Bhaṭṭa. It forms a section of the author's larger work entitled Tristhalí-setu, or a guide to three sacred places.

**Beginning.** श्रीगणेशाय नमः ॥ अथ काशीप्रकरणम् ॥ भवानीशंकरौ नत्वा भट्टरामेश्वरात्मजः । भट्टनारायणः काशीं विविनक्ति सदुक्तिभिः ॥ १ ॥ तत्र माहात्म्यज्ञानस्य प्रवृत्त्यौपयिकत्वेन तत्रावश्यवक्तव्यत्वात्तदेव प्रथमं निरूप्यते ॥ अतएव पद्मपुराणे पातालखंडे भृगुं प्रति ऋषिकृतेषु पंचप्रश्नेषु प्रथमं माहात्म्यप्रश्न एव कृतः ॥ किं माहात्म्यं कथं वेद्या सेव्या कैश्च द्विजोत्तम । परिमाणं च तस्याः किं केनोपायेन लभ्यत इति ॥ तत्र स्कांदे ॥ वाराणसी महापुण्या त्रिषु लोकेषु विश्रुता । अंतरीक्षे पुरी सा तु मर्त्यलोकस्य बाह्यतः ॥ पंचक्रोशांतरे राजन् ब्रह्महत्या न सर्पति । अष्टविंशतिकोट्यस्तु लिंगानां तत्र भारत ॥

**End.** ॥ तदुक्तं पाद्मे ॥ चतुर्धाविसृते क्षेत्रे सर्वत्र भगवान् शिवः । व्याचष्टे तारकं वाक्यं ब्रह्मात्मैक्यप्रबोधकम् ॥ तथापि तत्तत्सामर्थ्यात् तत्र तत्र मृतस्य हि । भोगपूर्वापवर्गोऽस्ति जीवन्मुक्तिर्द्वयैव सा ॥ अन्तर्गेहे विपन्नस्तु साक्षात् कैवल्यमाप्नुयात् । चतुर्विधेऽपि क्षेत्रेऽस्मिन् प्रमीतो गर्भयातनाम् ॥ नैवाप्नोति मुनिश्रेष्ठा विशेषोऽयं ब्रवीमि वः । काश्यां मृतस्तु सालोक्यं साक्षात् प्राप्नोति सत्तमाः ॥ न तस्य रूपतां याति न तत्सान्निध्यमश्नुते । ततो ब्रह्मैकतां याति न परावर्तते पुनः ॥ वाराणस्यां मृतो जंतुः साक्षात् सारूप्यमश्नुते । ततः सान्निध्यमायाति ततो ब्रह्मैकतामियात् ॥ अविमुक्तविपन्नस्तु साक्षात् सान्निध्यमाप्नुयात् । ततश्चिदानंदमये ब्रह्मण्येव विलीयते ॥ सलोकतां च सारूप्यं सान्निध्यं चापि सत्तमाः । कल्पकल्पमवाप्नोति ततो ब्रह्मात्मको भवेत् इति ॥ यद्यपि,— कीटाः पिपीलिकाश्चैव ये चान्ये पक्षिणस्तथा । कालेन निधनं प्राप्ता अविमुक्ते वरानने ॥ चंद्रार्धमौलयः साक्षान्महावृषभवाहनाः । शिवे मम पुरे देवि जायंते तत्र मानवा इति ॥ तत्र सारूप्यविषयं ॥ अविमुक्ते त्यजन् प्राणान् मम लोके महीयते । आदेहपतनाद् यत्तु क्षेत्रं सेवन्ति मानवाः ॥ ते मृता हंसयानेनादित्यं यांति कुतोभयाः । इत्यादीनि तु सलोकतात्विषयानीति सर्वमनवद्यम् ॥

**Colophon.** इति श्रीमद्विद्वन्मुकुटमाणिक्यदाक्षिणात्यालंकारश्रीमद्भट्टरामेश्वरसूरिसूनुनारायणभट्टविरचितत्रिस्थलीसेतौ काशीप्रकरणे तन्मरणान्मुक्तिविचारः समाप्तः ॥ श्री शुभं भूयात् ॥ कार्तिककृष्ण ११ बुधवार ॥ श्रीसंवत् १८८४ ॥ ॥ ॥

विवरणम् । श्रीनारायणभट्टविरचितत्रिस्थलीसेतुनामकनिबन्धान्तर्गतकाशीसेतुनाम काशीक्षेत्रमाहात्म्यप्रकाशकः कश्चिन्निबन्धविशेषः ।

No. 320. कुण्डोद्योतदर्शनम् । Kundódyóta-darśanam. Substance, country-made white paper, $16 \times 4\frac{1}{2}$ inches. Folia, 30. Lines, 4-9 in a page. Character, Nágara. Date, 1748 (Śaka or Samvat?).* Appearance, very old, worn out, and worm-eaten throughout. Prose and verse. Generally correct Complete.

An explanatory gloss on a work entitled Kundódyóta, treating of several kinds of kundas or sacrificial tanks by Nílakantha Bhaṭṭa, the gloss being by Sañkara Bhaṭṭa, Nílakantha's son.

Beginning. श्रीगणेशाय नमः ॥ यतः सर्व्वं विश्वं भवति निजसत्ताश्रयमिदं य आत्मा सर्व्वेषां स्थिरचयजङ्गानामपि विभुः ॥ नमेतं भास्वंतं विधि हरिमहेशानवपुषं नमस्यामः कामं परमकमनीयं सुकृतिनां ॥ १ ॥ तमोघ्नानप्रदत्तारं कर्त्तारं श्रुतिसंपदः । आनंदामृतदातारं सवितारं भजामहे ॥ २ ॥ श्रीनीलकंठं पितरं परिचिंत्य काश्यां वर्षे गते हि द्व्यैकयुते महार्घे ॥ व्याख्या कृता सगणितं सफलं च कुंडोद्योते मया पिष्टकृते किल भास्कराख्या ॥ ३ ॥ गणितं येन जानंति न जानंति च तां तु ते । अतस्तस्यादिविस्पष्टं कुंडोद्योतस्य दर्शनम् ॥ ४ ॥ बालकानां निबोधाय हृदि सूर्यं निधाय वै । करोमि शंकरो वर्षे गजाब्ध्यश्वैक-संयुते ॥ ५ ॥ श्रीभास्करतेज उपासनारूपं मंगलमाचरन् शिष्यशिक्षार्थं-मनुषंगतो व्याख्यातृश्रोतृप्रतिपत्तये च ग्रंथे निबध्नात्यनुष्टुप्श्रिपुलया ॥ देवर्षि रक्षः संघानामवाङ्मनसगोचरम् । प्रत्यक्षमपि तद्धाम सर्व्वदा समुपास्महे ॥ १ ॥

End. अथ सप्तास्रं वृत्तं यच्चतुरस्रकं भवति तन्मध्यस्य सूत्रं लमदंदेनाथ लवस्य चार्द्धलवतः संबद्धां वृत्तं चरेत् ॥ कर्णाग्रान्मुनिसंमितान्नाद्भिमत् सूत्राणि सप्त क्रमात् दद्यात्तेन मनोहरे समभुजं सप्तास्रकुंडं भवेत् ॥ १ ॥ इष्टचतु-रस्रमध्यसूत्रस्य च चतुर्विंशतिभागान् कृत्वा तत्सूत्रभागद्वयैकभाग-स्यार्द्धभागेन च प्राच्यां प्रतीच्यां च संबद्धां तदर्द्धं कर्कटेन वृत्तं कुर्य्यात् । तस्मिन् वृत्ते सप्तांशान् कृत्वा सप्तसूत्राणि दद्यादिति सप्तास्रमिति दिक् ॥ इह पंडितदुर्व्विगाहशास्त्रे यदलेखि धिया मया किंचित् ॥ अवलंब-नमेकमेव तस्मिन्ममगंगाम्बुनीलकंठपादौ ॥ ॥ १ ॥

* This is the date of the work: see the *Beginning*. गजाब्ध्यश्वैकसंयुते ।

**Colophon.** । इति श्रीमन्मीमांसकभट्टनीलकंठात्मजभट्टशंकरभट्टविरचितं कुंडोद्योतदर्शनं समाप्तिमगमत् ।

विवरणम् । कुंडोद्योतदर्शनं नाम भट्टनीलकण्ठकृतकुण्डोद्योताभिधकुण्डविषयकग्रन्थविशेषस्य विशदव्याख्यारूपोऽयं निबन्धः नीलकण्ठात्मजशङ्करभट्टविरचितः । अत्र नानाविधकुण्डानां स्वरूपं परिमाणादिकञ्च सम्यग्विवृतमस्ति ।

---

No. 321. कुण्डार्णवः । Kuṇḍárṇavaḥ. Substance, country-made white paper, 9×3 inches. Folia, 14. Lines, 9-11 in a page. Character, Nágara. Date, S'aka 1661; Samvat 1796. Appearance, very old, worn out, and worm-eaten in parts. Verse. Not correct. Complete.

*A work, treating of the same subject under the name of* Kuṇḍárṇava, written in verse in Sanskrit and Hindi by Srídhara Agnihotrin, son of Srísúrya and grandson of Nágeśa.

**Beginning.** श्रीगणेशाय नमः । नमस्कारमाझा असो मोरयाला मदाकालिके सुंदरे परदेशा । मति वंदिले सर्वदा सद्गुरुचें कियातील व्याख्या पुनरादि जगाते । १ । अनेकग्रंथार्थ वहतंगुंफिलिं शब्दरत्नें । यासांगकुंडें अमती प्रमाणं लिंबोलिं साधुनि श्रीधराख्यः ।

**End.** वरीलते येतकवविसेखलामधीलरक्षा मध्ये विराजा । इतीयते इथ्य कममञ्जायात्यावाळिली भूमिदि पीतवर्णा । वरीनुवरची दर्पसमानवर्णा सर्व ची भूमि सुवर्णवर्णा । ९१ । दि मेखला पंचवर्णजाणे दि मेखला येत सुरत्नवर्णे'' । पदंगकें उप दि नंदमेखला ते दैतवर्णावरचीनि माला । ९४ । श्रीरामभट्टात्मजश्रीसधुर्जा निवाडगो तनूपर सर्वदा ओः । त्याला असे पुत्र ची इयभट्ट । तत्पुत्र नागेश दि सर्वदेव । ९५ । तत्पुत्रश्रीसूर्य दि नारगोवी तत्पुत्रजो श्रीधर अग्निहोत्री । तेषें असे मंदमतीमकेला संपूर्णकुंडार्णव निबन्ध । ९६ ।

**Colophon.** शके १६६१ सं सं १७९६ मिति पौषसंवत्सि दैवज्ञांनमानक निदमादर्शदं पुस्तकं संपूर्णम् । श्र श्र श्र श्र श्र ।

विवरणम् । कुण्डार्णवनामकनानाविध यज्ञकुण्डस्वरूपादिकवर्णनविषयकविशिष्टः श्रीधराग्निहोत्रिविरचितः संस्कृतहिन्दीपद्यमयः ।

---

**No. 322** गङ्गावाक्यावली । Gañgávákyávalí. Substance, country-made yellow paper, 18×4 inches. Folia, 56. Lines, 6 in a page. Character, Bengali. Date, ? Appearance, fresh. Prose and verse. Not correct. Incomplete.

A work treating of the sacredness, manner of worship, and some other particulars of the river Ganges, under the name of Gañgávákyávalí by Viśvásadeví, wife of Rájá Padma Siñha of Mithilá. Padma Siñha was the son of Śiva Siñha, grandson of Deva Siñha, and great grandson of Bhava Siñha. See Dr. Mitra's Notices of S. MSS., Vol. vi., p. i.

**Beginning** ॐ नमो गङ्गायै ॥ स्वस्त्यस्तु वसुद्दिनरश्मिश्चन्द्रः प्रसादादेकं वपुः विभ्रमतो हरिणा समेत्य । नम्राभिपङ्कज सद्देव (?) स्वधालिवीनामाविष्करोति हृदि यस्य भुजङ्गराजः ॥ यावद्गङ्गा विभाति त्रिपुरहरजटामण्डलं मण्डयन्ती मञ्जीमालासुमेरोः शिरसि सित महावैजयन्ती जयन्ती । याता पातालमूलं स्फुरदमलवचिः शेषनिर्मोकयन्ती । तावन्निवासदेवा (तावद्विश्वासदेव्या ?) जगति विजयतां गङ्गावाक्यावलीयं ॥ अथ स्मरणप्रकरणम् ॥ अथ भक्तिश्रद्धापुरःसरमेव सर्वकर्मविशेषमाह ॥

**End.** नास्ति ।

**Colophon.** नास्ति ।

विवरणम् । विश्वासदेवीकृता गङ्गावाक्यावलीनाम धर्मशास्त्रीयनिबन्धविशेषः प्रसिद्ध एव । विश्वासदेवीयं मिथिलाधिपतेः पद्मसिंहस्य महिषी आसीत् । तया अन्येऽपि निबन्धाः संस्कृतभाषया सङ्कलिता अभवन् ।

---

**No 323.** गङ्गाभक्तितरङ्गिणी । Gañgábhakti-tarañginí Substance, country-made white paper, 11×4½ inches, bound in book form. Folia, 81. Lines, 8-9 in a page. Character, Nágara. Date, Samvat 1766, Śaka 1631. Appearance, very old, worn out, and worm-eaten throughout. Prose and verse Generally correct Complete.

A work treating of the sacredness of the river Ganges with quotations of authorities from the several Puránas, complete in three chapters called Tarañgas, by Ganapati, son of Víreśvara.

**Beginning.** ॥ श्रीगणेशाय नमः ॥ रूपं साक्षात्प्रागमेशं द्रवत्वं पुंजीभूतं मदं-गीर्वाणतेजः व्यक्तीभूतं महाविश्वविश्वन्यादारभेषिन् गंगसंभोऽमदोयम् ॥ १ ॥ भक्तिप्राकृतपोविशेषमखिलं विज्ञाय नाम्ना ददौ इति यस्य पितामहाय निखिलं भूमंडलाखंडलः श्रीवीरेश्वरसूनुरम्बदमप्रावभस्य भाई मतं गंगाभक्तितरंगिणीं गणपतिर्कुर्वे सतां प्रीतये २ प्रमादभावं प्रथमं व्यवस्था तदनंतरं ततः प्रयोगः संक्षेपात्तरंगेषूपवर्णितं ३ तत्रादौ प्रभवप्रकारणम् । ततः प्रभृति सा ब्रह्मन् सर्वपापहरा सरित् गंगादेवी गतांगानामनुलेपनपिंजरा विष्णुपादविनिष्क्रान्ता प्लावयंतींदुमंडलं समं-ताद्ब्रह्मणः पुण्या गंगापतति वै दिवि ।

**End.** अद्य कन्यादानभूम्यन्नदानस्वर्णदानरथाश्वगजदानजन्यफलागतसुखफलप्राप्तिकामो गंगाजलदानमहं करिष्ये अद्य देवगंधर्वमहर्षिपूजनकामो गंगातीरे वासमहं करिष्ये । सर्वेष्येतदेव । यत्र यत्फलं श्रुतं तदेव तत्र संकल्पवाक्ये योज्यं सुगममन्यदिति ॥ ७ ॥ श्रीशोमेश्वरसंभवस्य कृतिनः कौशिंप्रलब्धनन्दनो विद्वद्भिः परिशीलिता कृतिरियं कल्पांतर-स्थायिनी । एवं नित्यमुपासनाभिरमलश्चित्तं प्रसन्नासि चेत् मय्यं देवि तदा कृताञ्जलिरहं त्वामद्य याचे वयम् । यद्यप्य गौरवभयात्र कृतः प्रपञ्चादिक्रमात्मतदुपशिक्षितमित्यमेव विद्विर्विचिंत्य वचनान्तरसूक-नीयम् ॥

**Colophon.** इति श्रीगंगाभक्तितरंगिण्यां सप्तमस्तरंगः ॥ ॥ समाप्ता चेयं गंगाभक्तितरंगिणी । शुभमस्तु । यादृशं पुस्तकं दृष्टा ( दृष्ट्वा ? ) तादृशं लिखितं मया । यदि शुद्धमशुद्धं वा मम दोषो न दीयते ॥ संवत् ( संवत् ? ) १७५५ शाके १६२१ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

*विवरणम् । गङ्गाभक्तितरङ्गिणी नाम गङ्गामाहात्म्यविषयकोऽयं निबन्धविशेषः, सुप्रसिद्ध* एव वीरेश्वरपुत्रगणपतिविरचितस्त्रिभिस्तरङ्गैस्सम्पूर्णः ।

---

No 324. गङ्गाभक्तितरङ्गिणी । Gaṅgábhaktitaraṅgiṇí. Substance, country-made white paper, 16×8 inches. Folia, 38. Lines, 21 *in a page*. Character, Nágara. Date, Samvat 1755. Appearance, very old, worn out, torn, worm-eaten, and writing effaced in parts. Prose and verse. Correct. Complete.

Another copy of the same work with a comprehensive index of the contents.

**Colophon.** इति श्रीगंगाभक्तितरंगिण्यां तृतीयस्तरंगः ॥ समाप्ता चेयं गंगाभक्तितरंगिणीति ॥ शिवम् ॥ संवत् १७१५ वर्षे मार्गशीर्षशुक्लपक्षे चतुर्थ्यां प्रयागस्थाने लेखः ॥ कृताभिलाषिता दृष्टा स्पृष्टा पीतावगाहिता गंगा तारयते पुंसामुभयवंशी भवार्णवात् ॥ १ ॥

विवरणमुक्तपूर्व्वम् ।

---

No. 325. ग्रहपूजा । Grahapújá. Substance, country-made yellow paper, 16 × 3 inches. Folia, 4. Lines, 6 in a page. Character, Bengali. Date, ? Appearance, not old Prose Generally correct. Complete

A guide to the performance of the worship of the Grahas (planets). Anonymous.

**Beginning.** अथ नवग्रहपूजाप्रयोगः ॥ तत्र रविसोमबुधगुरुशुक्रवारेषु चित्रानुराधा मृगशिरोरेवती पुष्याश्विनी हस्ता रोहिण्युत्तरात्रयेषु चन्द्रताराऽनुकूले शुभलग्ने पूजा कार्य्या । तत्र यजमानः कृतस्नानादिः गोमयेनोपलिप्तदेशे सदर्भासनोपविष्ट उदङ्मुखः स्वस्तिवाच्ये सूर्य्यः सोम इति पठित्वा फलपुष्पतिलदर्भयवसहितजलपूर्णपात्रं गृहीत्वा ॐ तद्विष्णोरिति विष्णुं संस्मृत्य ॐ तत्सदित्युच्चार्य्य अद्येत्यादि अमुकगोत्रः श्रीअमुकदेवशर्म्मा रव्यादिनवग्रहसंसूचितसंसूच्यमानसंसूचयिष्यमानारिष्टप्रशमनपूर्व्वकरव्यादिनवग्रहप्रीतिकामो रव्यादिनवग्रहपूजाकर्म्माहं करिष्ये ।

**End.** घटस्थजलेन यजमानमभिषिञ्चेत् ॥ ॐ सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः । वासुदेवो जगन्नाथस्तथा सङ्कर्षणो विभुः ॥ प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते । आखण्डलोऽग्निर्भगवान् यमो वै नैरृतस्तथा ॥ वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः । ब्रह्मणा सहितः शेषो दिक्पालाः पान्तु ते सदा ॥ कीर्त्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्षमा मतिः । बुद्धिर्लज्जा वपुःशान्तिस्तुष्टिः पुष्टिश्च मातरः ॥ एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः । आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः ॥ ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः । देवदानवगन्धर्व्वा यक्षराक्षसपन्नगाः ॥ ऋषयो मुनयो गावो देवमातर एव च । देवपत्न्योऽप्सरा नागा दैत्याश्चाप्सरोगणाः ॥ अस्त्राणि सर्व्वशस्त्राणि राजानो वाहनानि च । औषधानि च रत्नानि कालस्यावयवाश्च ये ॥ सरितः

सागराः शैलाश्चौर्याणि सलदा नदाः । एतास्तामभिषिञ्चन्तु धर्मकामार्थसिद्धये ॥ श्री ईश्वरचन्द्रशर्मण पुस्तकमिदं ।

Colophon. ( नास्ति ) ।

विवरणम् । नवग्रहपूजाविषयकोऽयं निबन्धः ।

---

No. 326. ग्रहयज्ञप्रयोगः । Grahayajña Prayógaḥ. Substance, country-made colourless paper, 10×3½ inches. Folia, 8. Lines, 4-11 in a page. Character, Nágara. Date, ? Appearance, old, and worn out. Prose. Correct. Complete.

A guide to the performance of the rite known as Grahayajña to avert the malignant influence of a planet on a person's health or any other condition, according to the rules of *Áśvaláyana*. It is a part of the Prayoga Párijáta of Nrisiñha.

Beginning. ॥ श्रीगणेशाय नमः ॥ अथ ग्रहयज्ञप्रयोगः ॥ यजमानः स्नात्वा नित्यकर्म निर्वर्त्य दैवोक्ते मुहूर्ते प्राणानायम्य देशकालौ संकीर्त्य जन्मचन्द्रादिनित्यकालेषु ग्रहानुकूल्यसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं ग्रहयज्ञं करिष्ये इति सङ्कल्पं कुर्यात् ।

End. ब्राह्मणान् भोजयित्वा तेभ्यः शान्तिः पुष्टिरस्त्विल्याशिषोगृहीत्वा नाम संप्रार्थ्य प्रणिपत्य यस्य स्मृत्या चेति श्लोकं पठित्वा । प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ॥ स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥ इत्युक्त्वा न्यूनातिरिक्तापरिहारार्थं । अच्युतानंदगोविंदेति नाम मंत्रं जपं ग्रहयज्ञफलं विप्रभ्यो समर्प्य स्वयं हृष्टमना बंधुभिः सह भुंजीत । अयं च आश्वलायनगृह्यपरिशिष्टोक्तो ग्रहमन्त्रः । आर्त्ताग्निमतामाश्वलायनानामेव । बहूनां च गृह्योक्तं दम्र कर्म प्रयोगिनम् । तत्र तावति शाखार्थे कृते सर्वः कृतोभवेत् ॥ इति वचनात् इदमन्येषामपि यदि शाखान्तरादानुक्तमदा स एव । येषां ग्रहादौ मोक्षः मैत्रायणीयादिसूत्रोक्तमतपुराणोक्तो वामुद्देयः । मुत्स्याद्यैः शाखान्तरादिति दिक् ।

Colophon. इति ग्रहयज्ञः समाप्तः ॥ ॥ ॥ प्रयोगपारिजाते आश्वलायनः ॥ एकमेवाशक्तो विप्रं कोमित्येनैव भोजयेत् । तत्पापो यथमपापि विप्रैकेपक्षाशक्तो । ग्रहयज्ञाशक्तैर्विप्रमेकं अपन्योऽपि भोजयेत् । तथाहारात्-

मशक्तोयो दक्षिणां दातुमेव च । जपैः प्रणामैः स्तोत्रैश्च तोषयेत्तर्पयेद्‌-
यत्नात् । श्रीगणेशाय नमः ॥ अशक्तोपद्रवश्चैव महानपि न शोभते ।
पूजयंति नरा नागान् न ताक्ष्यं नागभीतितः ॥

विवरणम् । आश्वलायननियमानुगतपञ्चयज्ञप्रयोगरूपोऽयं निबन्धः । स्मृतिदर्शनप्रयोग-
पारिजातान्तर्गतः ।

---

**No. 327** पञ्चविधानम् । Pañchavidhánam. Substance, country-made white paper, 11 × 4 inches. Folia, 2 Lines, 5-14 in a page. Character, Nágara Date, ? Appearance, very old, worn out, torn, worm-eaten, and writing effaced. Prose Generally correct. Complete.

A work treating of five kinds of ceremonies, *viz.*, (1) Sañskáras or purifying ceremonies, (2) Adhivása, (3) Udvásana, (4) Pañchágnisádhana or the performance of devotion among five fires, (5) Jalavásavidhi or the penance of staying in water in the morning of the white eighth lunar day in the month of Kártika, as explained by Paráśara to Vámadeva.

**Beginning.** अथ संस्काराः । ते चाष्टचत्वारिंशत् । तथाच गौतमः । गर्भाधानं पुंसवनसीमंतोन्नयनजातकर्मनामकरणान्नप्राशनचौडोपनयनं चत्वारि वेद-व्रतानि स्नानं सहधर्मचारिणीसंयोगः पञ्चानां यज्ञानामनुष्ठानमष्टका-पार्व्वणश्राद्धं श्रावण्याग्रहायणी चैत्री आश्वयुजीति सप्तपाकसंस्थाः अग्नि-होत्रं दर्शपूर्णमासौ चातुर्मास्यान्याग्रयणेष्टिर्निरूढपशुबंधः सौत्रामणीति सप्तहविर्यज्ञसंस्थाः अग्निष्टोमो ह्यग्निष्टोमसुक्थाः षोडशी वाजपेयोति-रात्राप्तोर्याम इति सप्तसोमयज्ञसंस्था इत्येते चत्वारिंशत् संस्काराः ।

**End.** अथ जलवासः ॥ अतःपरं प्रवक्ष्यामि जलवासस्य लक्षणम् । कार्त्तिके शुक्लपक्षे तु अष्टम्यां पूर्वयामिको । यथा विभवतः पूज्या जलदुर्गा यथाविधि । अघोरमंत्रेण घोररुद्रप्रपूजनकर्म च ॥ द्विजार्चनं च होमं च प्रकुर्व्वीत यथाविधि ततो जलप्रवेशकाले मंत्रः । ओं ह्रीं जल-दुर्गायै नमः । रोधं कुरु कुरु अमुं मंत्रमष्टोत्तरशतवारं जप्त्वा पुष्पा-ञ्जलिं दत्त्वा खेचरीमुद्रां प्रदर्श्य जले प्रविशेत् । अष्टलग्ने जले तिष्ठेत् पद्मासनसुसंस्थितः । जपेदघोरमंत्रं च अरुणोदयावधि । ततः काले समुत्थाय नित्यकर्मोद्यतो भवेत् । एवं क्रमाच्चतुर्थं प्रमं[illegible]संपूर्णमाच-

रेत् । यथोरकदष्ट्याग्रे सोमतर्पणभोजनम् । दक्षिणा च यथाशक्त्या-नुद्वासनविधिक्रमः ।

Colophon. इति पाराशरोक्तजलवासविधिः । शुभमस्तु ।

विवरणम् । पञ्चविधानं नाम संस्काराधिवासोद्वासनपञ्चाग्निसाधनजलवासविधिविषयकोनिबन्धविशेषः पराशरेण वामदेवायोपदिष्टः ।

---

No 328. मुक्ताभरणसप्तमीव्रतकथा । Muktábharana-saptamí-vrata-kathá. Substance, country-made white paper, 11 × 5 inches. Folia, 3. Lines, 10–12 in a page. Character, Nágara. Date, Samvat 1897. Appearance, fresh. Verse. Generally correct. Complete

*Extracts from the Bhavishyottara Puráṇa on a religious* observance called Muktábharaṇa Saptamí performed on the white lunar seventh day of every month commencing from the month of Bhádra.

Beginning. श्रीगणेशाय नमः । श्रीयुधिष्ठिर उवाच । भगवन् श्रीमहाबाहो श्रुतास्ते मुखपङ्कजात् । कथितानि च बह्वन्यव्रतानभ्रापि केशव ॥१॥ श्रीकृष्ण उवाच । मुनीन्द्रो लोमशो नाम मथुरायां गतः पुरा । मोचितो वसुदेवेन देवक्या च युधिष्ठिर ॥१। उपविष्टः कथाः पुण्याः कथयित्वा मनोरमाः । ततः कथयितुं भूयः कथामेतां प्रचक्रमे ।१॥

End. श्रीलोमश उवाच । भद्रे भाद्रपदे मासि सप्तम्यां शुक्लपक्षके ॥ ३७ ॥ ध्यात्वा शिवं मंडलके लेखयित्वा सहाम्बिकाम् । तत्र संपूज्य सकलं कुर्याद्भक्तार्चने शुभम् ॥ ३३ ॥ यावज्जीवं मयात्मा वै शिवस्य विनिवेदितः । इत्येवं समयं कृत्वा ततः प्रभृति डोरकम् ॥ ३४ ॥ सौवर्णं राजतं वापि सौत्रं वा धारयेत् करे । सप्तकाम्येष्टिकान्दद्यान्माषैः पचेत्तत्वा तूभे (?) ॥ ३६ ॥ स्वयं तावेव भोक्तव्या सप्तमंडलमपात्रुभे । प्रतिमासं तु सप्तम्यां शुक्लपक्षे विशेषतः ॥ ३७ ॥ कुर्यादेवं व्रतं भद्रे वर्षे वर्षेऽपि च देवकि । कारिता मुद्रिका वज्री हैमी रौप्या स्वशक्तितः ॥ ३८ ॥ ताम्रपात्रोपरि स्थाप्य संपूज्य च यथाविधि । देहविनाश दातव्या मुक्ताहारसमन्विता ॥ ३९ ॥ आचार्याय विशेषेण दुर्वर्णस्यादुर्लक्षम् । पुष्प कुंकुमसंपुष्पैर्धूपवस्त्रसुदर्पणैः ॥ ४० ॥ वर्णांश्चैव संतोष्य ततोऽन्ते

होममाचरेत् । एवं रीत्या च कर्त्तव्यं व्रतं संततिवर्द्धनम् ॥ ५१ ॥ सर्व्व-पापविनिर्मुक्ता भुक्ता सौख्यं मनोरमां (सौख्यं मनोरमम् ?) । संतानं वर्द्धयित्वा च शिवलोके महीयते ॥ ५२ ॥ एतत्ते सर्व्वमाख्यातमाख्यान-व्रतमुत्तमम् । कृष्ण देवकि यत्नेन यदुक्तं ते मयाऽनघे ॥ ५३ ॥ श्रीकृष्ण उवाच ॥ इत्युक्त्वा तु मुनिश्रेष्ठ तत्रैवान्तरधीयत । चकार सर्व्वं यत्नेन यदुक्तं तेन धीमता ॥ ५४ ॥ व्रतस्यास्य प्रभावेन (च?) देवकीमामजी जनत् । तस्मात् पार्थ नरैः कार्य्यं स्त्रीभिः कार्य्यं विशेषतः ॥ ५५ ॥ व्रतं पापप्रशमनं सुखसंततिवर्द्धनम् । एवं यः शृणुयाद्भक्त्या यश्चैतत् प्रतिपादयेत् ॥ ५६ ॥ व्रतमाख्यानसहितं सोऽपि पापैः प्रमुच्यते । एवं या कुरुते नारी व्रतं संततिवर्द्धनम् ॥ ५७ ॥ साख्यानकं व्रतमिदं सुखसौख्य-कामा या स्त्री करिष्यति शिवं हृदये निधाय । दुःखं विहाय बहुशः कृत कल्मषौघान् सा स्त्री भवत्यद्भवति शोभनजीववत्सा ॥ ५८ ॥

**Colophon** इति भविष्योत्तरे हेमाद्रौ मुक्ताभरणसप्तमीव्रतकथा समाप्ता ॥ सप्त-नंदाष्टचंद्रेऽब्दे वैक्रमे १८९७ श्रावणे सिते ॥ सप्तम्यां भौमवारे चालेखि श्रीकृष्णमिश्रकैः ॥ १ ॥ लिखितं जयकृष्णमिश्रेण रामः ।

विवरणम् । भविष्योत्तरपुराणसंगृहीतमुक्ताभरणसप्तमीव्रतविषयकोऽयं निबन्धः ।

---

**No. 329. त्रिंशच्छ्लोकीभाष्यम् ।** Triñśachchhokí Bháshyam. Substance, country-made white paper, 16 × 4½ inches. Folia, 14, Lines, 8–11 in a page Character, Nágara. Date, Samvat 1851. Appearance, old, and slightly worm-eaten in the margin throughout. Verse and prose Generally correct. Complete.

A gloss on a work entitled Triñśachchhloki, or thirty verses on Aśaucha or impurity caused by birth or death of one of the same family, together with the text. Anonymous.

**Beginning.** ॥ श्रीमहागणपतये नमः ॥ नत्वा गणेश्वरं देवं शारदां गुरुमात्मनः । अशौचसंग्रहत्रिंशच्छ्लोक्या व्याख्यां करोम्यहम् ॥ १ ॥ तत्र स्मार्त्तं क्रम मनुल्लंघ्य लोकप्रसिद्धक्रममनुसरन् गर्भविपातनिमित्ताशौचक्रमेण अशौचं प्रतिपादयति ॥ षण्मासाभ्यंतरेषु स्वपुरुषनिरिते गर्भमात्रे विनष्टे माता तन्मासंख्यासमदिनसंख्याभिः स्नानमात्राः सपिंडाः ॥ अंत्ये मासद्वये तु त्रिदिनमाश्चयोऽतः परं स्वनिवत् स्वाचातुर्वर्ण्यस्य तुल्यं भवति यच्चि यदुच्यते शौचमात्रं ॥ १ ॥ अस्यायमन्वयः ॥ षण्मासाभ्यंतरेषु षष्ठ मासानां

अर्भेऽगर्भेऽपि सध्यानि तेषु स्वपुत्रपनिचिते अर्द्धनिर्दिष्टे गर्भस्रावे अपूर्णावयवे गर्भे विनष्टे च्युते माता जननी तन्माससंख्यासमदिनैरशुचिः तेषां मासानां गर्भधारणादारभ्य प्रत्येकं या या संख्या तया समानि दिनानि यत्र तद्यथा भवति तथा अशुचिः अशुद्धा स्यात् अत्र स चासौ मासश्च तन्मासस्तस्य संख्या तया समानि दिनानि यस्मिन्निति समासः । तथाचायमर्थः गर्भधारणमासमादिं कृत्वा यन्मासाभ्यंतरे गर्भो नष्टः तन्माससंख्यया समदिनानीति । अत्र यद्यप्यविशेषेणोक्तं तथापि चतुर्थमासमारभ्य षण्मासपर्यन्तं द्रष्टव्यं । आद्ये मासत्रये त्रिरात्रमेव मातुरविशेषेण सपिंडानां नाशौचम् ।

End दत्त्वा पिंडं सपिण्डाः परस्नानवस्त्रापकाय व्रजित्वा तदेशद्वारि चाश्म प्रशमितमनसो निंबपत्रं विदश्य । आचम्याग्न्यंबुदूर्वांकुरवरवृषभानक्षतान् गोमयं च स्पृष्ट्वा सिद्धार्थतैलान्वय दृषदि पदं न्यस्य सर्वे विशेयुः ॥ १० ॥ अथ शवं दग्ध्वा आगतानां प्रेतस्वगृहप्रवेशनविधिमाह । दत्त्वेति । सपिंडाः पूर्वोक्तास्तथा परस्नानवापकाः । असपिंडाश्च सर्वे पिंडं दत्त्वा दशपिंडे सदेश्म तस्य प्रेतस्य संबंधि गृहं गत्वा अस्य वेश्मनोद्वारि प्रशमितमनसः अवहितचित्ताः सन्तः निंबपत्राणि विदश्य चर्वयित्वा यथादाचम्यानंतरमग्न्यंबुप्रभृतीन् प्रसिद्धान् स्पृष्ट्वा दृषदि पाषाणे पदं च न्यस्य दत्त्वा गृहं (गृहं?) प्रविशेयुरिति संबंधः । तथाच स्मृतिः । इति संस्कृत्य गच्छेयुर्गृहं बालपुरःसराः । विदश्य निंबपत्राणि नियता द्वारि वेश्मनः । आचम्याग्न्यादिसलिलं गोमयं गौरसर्षपान् । प्रविशेयुः समालभ्य कृत्वाश्मनि पदं शनैः ॥ १० ॥

Colophon. इति श्रीत्रिंशच्छ्लोकी समाप्ता ॥ १ ॥ सं १८११ श्रीपद्भ्य ।

विवरणम् । त्रिंशच्छ्लोकीति प्रसिद्धाशौचनिर्णयविषयकोऽयं निबन्धः सभाष्यः ।

---

No. 330. त्रिंशच्छ्लोकीभाष्यम् । Triñśachchhlóki Bháshyam. Substance, country-made white paper, 10×4 inches. Folia, 29. Lines, 7-9 in a page. Character, Nágara. Date, ? Appearance, very old, worn out, and torn. Prose and verse. Generally correct. Complete.

Another complete copy of the same work.

Colophon. इति त्रिंशच्छ्लोकीभाष्यं समाप्तम् ॥ ॥

विवरणमुक्तपूर्वम् ।

---

**No. 331.** तीर्थचिन्तामणिः । Tírthachintámaṇih. Substance, foolscap paper, 15×9 inches, bound in book form. Folia, 123 (of which the first two and half are wanting). Lines, 4–19 in a page. Character, Bengali and Nágarı. Date, ? Appearance, very old, worn out, torn, worm-eaten throughout, and written by different hands; some of the folia are so closely packed that they cannot be easily separated. Prose and verse. Generally correct. Incomplete.

A work treating of the sacred character of Tírthas or places of pilgrimage, with quotations of authorities from the several Puránas. This codex contains also some 31 folia on the sacredness of the month of Mágha, written in the Devanágara character. Anonymous.

Beginning. श्रीगणेशाय नमः । कनकनलिनलक्ष्मीस्पर्द्धिराधाकुचाग्रस्थितनयनद्वन्द्वः स्मेरवक्त्राम्बुजश्रीः नवगगनतमालश्यामलश्यामगात्रः क्षपयतु मम कर्म्मक्रूरमक्रूरमित्रः ॥ शैवकल्पद्रुमपारिजातरत्नाकरादीनवलोक्य यत्नात् । प्रणम्य मूर्द्ध्ना मधुसूदनाय वाचस्पति + + + । अथ तीर्थविधिः ।

End ( नास्ति ) ।

Colophon. ( नास्ति ) ।

विवरणम् । तीर्थचिन्तामणिर्नाम तीर्थमाहात्म्यविषयकः कश्चिदसम्पूर्णो निबन्धविशेषः पुस्तकेऽस्मिन् माघमाहात्म्यं सम्पूर्णं नागराक्षरलिखितमतिजीर्णमस्ति ।

---

**No 332** तीर्थसारः । Tírthasáraḥ. Substance, country-made white paper, 24×9 inches. Folia, 16. Lines, 13–16 in a page. Character, Nágara, Date, Samvat 1832. Appearance, very old, and slightly worm-eaten throughout. Prose and verse. Not correct. Complete.

A compendium on the same subject consisting of verses compiled from the Puránas by Mahárájádhiràja Śridalapati, king of Devagiri and Prime Minister of the Nizam of Hyderabad. It forms a part of his series entitled Nṛisiñha Prasáda.

Beginning. श्रीगणेशाय नमः अथ सेतुबंधमाहात्म्यम् ॥ तत्र प्रशंसा स्कंदपुराणे । श्रीरामवाक्यम् । एष सेतुर्मया बद्धः सागरे लवणाम्भसि । तव हेतोर्विशालाक्षि नलेन तु सुदुष्करः ॥ सेतुबन्ध इति ख्यातस्त्रैलोकेनैव पूजितः । एतत्तीर्थमतुलं महापातकनाशनम् ॥

End. अथ मलप्रहर ( प्रहारिणी ? ) माहात्म्य । स्कंदपुराणे । मलप्रहारिणी नाम नदी सह्योद्भवामला । निर्म्मिता वरकल्याणि ब्रह्मण्या सुटभांतयो ( ब्रह्मणोवधशान्तये ? ) । तस्यास्तु सलिलं सद्यः पापं हरति किल्बिषम् । तदाश्रिताय ये मर्त्याः प्रयांति परमां गतिम् ॥ तस्याश्च संगमं तेषु पवित्रं पापनाशनम् । रुद्रं पशुपतिं स्नात्वा तत्र स्नात्वा नमस्कुरु ॥ मनुष्यलोके ये मर्त्या देवत्वं यांति ते किल ॥

Colophon. इति श्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरसकलभूरि (मि ?) मंडलमंडनसमस्तयवनाधीश्वरश्रीनिजामसाहसमस्तसाम्राज्यधुरंधरश्रीमन्महाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे तीर्थसारे मलप्रहर ( प्रहारिणी ? ) माहात्म्यं ॥ शुभं सिंहवदुग्रमांगमुररीकुर्व्वन्नपि श्रेयसः ॥ कारुण्यादभयप्रदाननिपुणैरालोकमानाक्रमैः ॥ साक्षाद् निजपादपंकजसुधा यः कल्पयत्युत्वदं ( त्युत्वचं ? ) प्रह्लादप्रणयी स नो वितनुतां भद्रं परः पूरुषः । १ ॥ यो लोकस्य गुरुर्विशारदजना यं भावयंते गुरुं येनैतद्गुरुणोद्धारि गुरवे तस्मै नमः सर्व्वदा । यस्मादेष्यपः स्थिरोऽभनि अगे यस्य प्रसादा इति यस्मिन् सर्व्वगुणा गुणेहादेसदाने ( गुणोघसदनं ? ) तं त्वां नृसिंहं भजे ॥ २ । श्रीदृश्रीद्विजराजवराणतिलकालंकारवीरः प्रभुर्भारद्वाजकुलानुगः प्रथमया यः शाखयालंकृतः । श्रीमद्वल्लभसन्नुरात्मनिरतः सत्संप्रदायाग्रणीः सारं सांजिक ( सात्त्विक ? ) सुत्तमं विषतुरं श्रीमान् दलाधीश्वरः । ३ । श्रीनिजामाहिमासाम्राज्यधुरंधरमहीपतिः । श्रीनृसिंहप्रसादेऽस्मिन् संपूर्णं कुरुते शुभम् । इति श्रीमचतुर्दशभुवनैकनाथमहेंद्रादिदेवगणपूजितचरणकमलमटाटंधरव्याघ्रभुवनभक्तानुग्रहकारिप्रसन्नवदनप्रह्लादप्रणयवरकरभासकरदानेकराजाभयकरजगदेकसुंदरश्रीलक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरसूर्यवंशतिलककोङ्कलकैरभुक्तभोरगुर्ज्जरमालवमागधपांचालकार्णाटाद्यंकेष प्रौढराजस्तवनीयकीर्त्तिसकलभूमंडलाखंडलदिक्मंडलीमंडनीयनिजभुजार्ज्जितप्रतापासादितसकलसाम्राज्यपरमवैभवस्वपदच्युतसंस्थापितानेकमंडलाधीश्वरसकलसामंतचक्रचूडामणिकिरणरंजितचरणारविंदे सकलभूमंडलश्रीमत्प्रौढप्रतापमहाराजाधिराजसर्वपुरीसुंदरिदेवगिरिपुरीवराधीश्वरसमस्तयवनाधीश्वरसकलविद्याविशारदयाज्ञवल्क्यीयसुप्रसाखाप्रवर्तकद्विजराजकुलालंकारहरिवैष्णवधर्मप्रवर्तकश्रीविठ्ठभात्मजश्रीवल्लभपंडितप्रसादासादितश्रीसूर्यपंडितभिषग्गुणसम्वादिप्रणीत श्रीतिशास्त्राभिज्ञमहाप्रभुस्तकार्थ्यसंपत्प्रतिनिधीकृत श्रीमन्महाराजश्रीदलपतिविरचिते श्रीनृसिंह-

प्रसादे तीर्थसारः सम्पूर्णः । । शुभमस्तु । संवत् १८७१ मासे कार्त्तिक शिवानीदासचंदकायस्थवनारसमध्ये लालाकाशमीरिमल लालाबो-जीरिमलके इहा पोथि लिखिगइ । ॥ श्रीविश्वेश्वरजी सहाइ । श्रीगंगाजी सहाइ । ह । ह । ह । ह ॥

विवरणम् । तीर्थसारो नाम विविधतीर्थमाहात्म्यविषयकोऽयं निबंधो महाराजाधिराजश्रीनिजामसाहसाहाय्यधुरन्धरदलपतिसिंहविरचितस्तदीयश्रीनृसिंहप्रसादाभिधधर्मशास्त्रीयनिबन्धान्तर्गतः ।

---

**No 333** तृणषष्ठीव्रतम् । Triṇashashṭhívratam. Substance, country-made white paper, 12×4 inches. Folia, 3. Lines, 7-10 in a page. Character, Nágara Date, Samvat 1871. Appearance, new but slightly worm-eaten throughout. Verse. Generally correct. Complete.

Extracts from the Sántiparvan of the Mahábhárata on the religious observance called Triṇashasthí performed on the dark lunar sixth day of the month of Bhádra.

Beginning. श्रीगणेशाय नमः । श्रीयुधिष्ठिर उवाच । भगवन् देवकीपुत्रो लोकानुग्रहकारक । जातोसि भूतले देव तथाप्येऽनुग्रहं कुरु । १ । अभिमन्यौ हते बाले सुभद्रा शोकदुःखिनी । जीवितं नाभिजानाति शोकेन परिपीड़िता । २ ॥

End. यः करोति व्रतं राजन् सोऽपि तत्फलमाप्नुयात् । ५९ । विप्राय दक्षिणां दद्यात् कथां श्रुत्वा सखीसह । सद्रते श्यामकैर्भक्तं भुक्त्वा शाकैश्च कामकैः ॥ ६० ।

Colophon. इति श्रीमहाभारते शांतिपर्वणि तृणषष्ठिव्रतकथा समाप्ता ॥ संवत् १८७१ भाद्रपदकृष्णसप्तम्यां ७ लिखितं जयकृष्णमिश्रेण । श्रीरामः ।

विवरणम् । महाभारतीय शान्तिपर्वोद्धृततृणषष्ठीव्रतविषयकोऽयं निबन्धः । व्रतस्यास्य विधानम् ॥ दुर्व्वासोवाच । यथा भाद्रपदे मासि कृष्णषष्ठी शुभप्रदा । १८ ॥ एतस्यां प्रतिवर्षञ्च नद्यां स्नात्वा समाहितः । व्रतस्य नियमं कुर्य्यात् क्रोधलोभविवर्ज्जितः । सखीभिः सह मध्याह्ने स्नात्वा देवं प्रपूजयेत् । पलाशकुशयोर्मूले कृत्वा मूर्त्तिचतुष्टयम् । शिवं शिवां स्कंदविघ्नौ मन्त्रैरेभिः प्रपूजयेत् । इति ।

---

*No.* 334. दुर्गापूजापद्धतिः । *Durgápújá Paddhatiḥ.* Substance, palm leaf, 20 × 1½ inches. Folia, 55. Lines, 1–4 in a page. Character, Bengali. Date, ? Appearance, very old, worn out, torn, worm-eaten throughout, and writing effaced in parts. Prose. Generally correct. Complete.

*A guide to the performance of the worship of the goddess* Durgá as celebrated in autumn according to the Vṛihannandikeśvara Purána. Anonymous. To the codex is appended a guide to the performance of Adhivása, Balidána and Homa.

**Beginning.** बृहन्नन्दिकेश्वरपुराणोक्तदुर्गापूजा लिख्यते ॥ अथ बोधनविधिः ॥ भाद्रकृष्णनवम्यां आर्द्रायुक्तायां केवलायां वा कृतनित्यक्रियोयजमानः बिल्ववृक्षसमीपं + + + + न्यं कुर्यात् । यथा । विष्णुरोम् तत्सदद्याश्विने मासि कृष्णे पक्षे नवम्यां तिथौ अमुकगोत्रः श्रीअमुकदेवशर्म्मा श्रीदुर्गाप्रीतिकामो वार्षिकशरत्कालीन + + + + देव्या बोधनकर्माहं करिष्ये ॥ परार्थे करिष्यामीति वदेत् । इति संकल्प्य संकल्पसूक्तं पठेत् ।

**End.** देव्याः पादे पुष्पं दत्वा पठेत् । ॐ उत्तिष्ठ देवि चामुण्डे शुभां पूजां प्रगृह्य च । कुरुष्व मम कल्याणमष्टाभिः शक्तिभिः सह ॥ गच्छ २ परं स्थानं यत्र देवो निरञ्जनः । मम आनुग्रहार्थाय पुनरागमनाय च ॥ गृहीत्वा शारदीं पूजां समस्तां शङ्करप्रिये । गच्छ देवि महाभागे अष्टाभिः शक्तिभिः सह ॥ यथाशक्ति कृता पूजा भक्त्या कमललोचने । सार्थं भवतु तत्सर्वं त्वत्प्रसादान्महेश्वरि ॥ गच्छ २ परं स्थानं स्वस्थानञ्च निजालये । गच्छन्तु देवताः सर्व्वे दत्वा मे वाञ्छितं वरम् ॥ ॐ उत्तिष्ठ देवि चामुण्डे शुभां पूजां प्रगृह्य च । व्रज स्रोतोजले वृद्ध्यै स्थीयतामत्र जले त्विह ॥ निमज्जामि देवि त्वं प्रतिमा पत्रिके शुभे । पुत्रायुर्धनवृद्ध्यर्थं स्थापितासि जले मया ॥ ततो गीतवाद्यादिकं कृत्वा ॥ अच्छिद्रावधारणं कुर्यात् यथा अद्यैतस्मिन् कृतैतत्वार्षिकशरत्कालीनश्रीदुर्गापूजाकर्म्माच्छिद्रमस्तु ॥ ततः कर्म्मफलं विष्णवे समर्पयेत् ॥

**Colophon.** इति बृहन्नन्दिकेश्वरपुराणोक्तदुर्गापूजापद्धतिः समाप्ता ॥ ० ॥

विवरणम् । बृहन्नन्दिकेश्वरपुराणोक्तश्रीदुर्गापूजापद्धतिरूपोऽयं निबन्धः । पुस्तकस्यान्त्यभागेऽधिवासबलिदानहोमपद्धतयश्च सन्ति ।

---

No. 335. दुर्गोत्सवविवेकः । Durgotsavavivekaḥ. Substance, white and yellow papers, 18×3 inches. Folia, 17. Lines, 5–6 in a page. Character, Bengali. Date, S'aka 1771. Appearance, old. Prose. Correct. Complete.

A work containing a full discourse on the worship of the goddess Durgá by S'úlapáṇi, the famous author of the Viveka series.

Beginning. ॐ नमः शिवाय ॥ महेशानीपदाम्भोजं भ्रमद्भ्रमरशोभितम् । दुर्गोत्सवविवेकस्तु क्रियते शूलपाणिना ॥ निन्दाश्रवणात् दुर्गापूजा नित्या । यो मोहादथवालस्यात् देवीं दुर्गां महोत्सवे न पूजयति दम्भाद्वा द्वेषाद्वाप्यथ भैरव । क्रुद्धा भगवती तस्य कामानिष्टान्निहन्ति वै । इति कालिकापुराणात् ॥ विधिसमभिव्याहृतफलश्रुतेः काम्या च । तत्रैवं परमाभाप्तुर्निर्दिष्टेति चिदिवौकसः । एवमन्यैरपि सदा देव्याः कार्यं प्रपूजनम् ॥

End. सिताष्टम्यान्तु चैत्रस्य पुष्पैस्तत्कालसम्भवैः । अशोकैरपि यः कुर्यान्मन्त्रेणानेन पूजनम् ॥ न तस्य जायते शोको रोगो वाप्यथ दुर्गतिः । इति कालिकापुराणवचनात् केवलाष्टमीकल्प उक्तः ॥ चैत्रे च शुक्लपक्षमधिकृत्य देवीपुराणम् ॥ नवम्यां पूजयेद्देवीं महिषासुरमर्द्दिनीम् । कुङ्कुमागुरुकस्तूरि धूपान्नध्वजतर्पणैः ॥ दमनैर्मरुपत्रैश्च विजयाख्यपदं लभेत् ॥ इत्यनेन नवमीकल्प उक्तः । व्यवस्था तु शारदीयप्रकरणोक्ता ग्राह्या । विशेषस्त्वत्र बोधनक्रिया नास्ति ॥ बोधिताया बोधनाभावात् इति प्रागिवष्टतं ॥ होमादिकन्तु पूर्ववत् ज्ञेयमिति दिक् ॥ ० ॥

Colophon. इति श्रीमहामहोपाध्याय श्रीशूलपाणिभट्टाचार्य्यविरचितो दुर्गोत्सवविवेकः समाप्तः ॥ ० ॥ ० ॥ ० ॥ मितास्वोदधिमैचमे शाके कन्यास्थिते रवौ । दुर्गोत्सवविवेकं श्रीराघवेन्द्रोऽलिखत् स्वयम् ॥ ० ॥

विवरणम् । महामहोपाध्यायश्रीशूलपाणिविरचितदुर्गोत्सवविवेकस्तदीयविवेकग्रन्थान्तर्गतः ॥

---

No. 336. दुर्गोत्सवप्रमाणतत्त्वम् । Durgotsava-pramáṇatattwam. Substance, foolscap paper, 17×5 inches. Folia, 20 Lines, 8–11 in a page. Character, Bengali. Date, S'aka 1782. Appearance, fresh. Prose. Correct. Complete

A work treating of the authorities for the worship of the *goddess Durgá, under the name of Durgotsava-pramána by* Raghunandana. The copy was presented to the Sanskrit College Library by the descendants of the late Professor Jayanáráyana Tarkapañchánana.

**Beginning.** ॐ नमो दुर्गायै ॥ प्रणम्य जगदीशानीं दुर्गां तत् प्रीतये बुधः । शरद-
र्चाविधिं नत्वा वक्ति श्रीरघुनन्दनः ॥ व्यवस्थायाः प्रपञ्चस्तु विज्ञेयस्तिथि-
तत्त्वके । पूजाविधेय सम्यक्त्वं ज्ञातव्यं कोविदैरिह ॥ अथ दुर्गार्चा-
तत्त्वम् । तत्र मार्कण्डेयपुराणम् ॥ शरत्काले महापूजा क्रियते या च
वार्षिकी । तत्र ममैतन्माहात्म्यं श्रुत्वा भक्तिसमन्वितः ॥ यक्षनारा-
यणीयसंहितापि । शरत्काले महापूजा क्रियते या च वार्षिकी ।
सा कार्य्योदयगामिन्यां न तत्र तिथियुग्मता ॥

**End.** शिवरहस्ये । दशम्यां दीयते यत्र बलिदानन्तु मानवैः । तद्राष्ट्रं नाश-
मायाति मरकोपद्रवैः स्फुटम् । यात्राकाले विशेषत इति प्रागुक्तवच-
नात् देवीचालनानन्तरं पिष्टप्रदीपादिना नीराजनं कार्य्यं ॥ ज्योतिषे ॥
द्विशरीरे चरे वापि लग्ने केन्द्रगते रवौ । वर्षे वर्षे विधातव्यं स्थापनञ्च
विसर्ज्जनम् ॥ ज्योतिषे हस्तागते तु मित्रे यथा खञ्जनं त्वत्यन्तं यान्तं
पश्येत्तथा प्रयातस्य चिप्रं नरपतिर्वशमुपैति । मित्रः सूर्य्यः । तथा
कृत्वा नीराजनं राजा बलवृद्ध्यै यथाक्रमम् । शोभनं खञ्जनं पश्येज्जल-
गोकोष्ठसन्निधौ नीलग्रीवः शुभग्रीवः सर्व्वकामफलप्रदः । इथियामत-
नीर्णोऽसि खञ्जरीट नमोऽस्तु ते ॥ वसन्तराजे ॥ दृष्टोदितेऽगस्त्यमुनौ सुदेशे
सुचेष्टितं खञ्जनको विदध्यात् इत्युपक्रम्य त्वं योगयुक्तोमुनिपुङ्गवस्त्वं
यद्दृश्यतामेषि शिखोद्गमेन । संदृश्यतां प्रावृषि निर्गतायां त्वं खञ्जना-
यर्थमयो नमस्ते ॥ दर्शनफलम् ॥ अब्जेषु गजराजिमहोरगेषु राज्यप्रदः
कुशलदः शुचिशाद्वलेषु । भस्मास्थिकेशनखलोमतुषेषु दृष्टो दुःखं ददाति
बहुशः खलु खञ्जरीटः ॥ वर्षंहत्ये विनं नद्यपि कार्य्यसिद्धिरतुला शक्र
हुताशे भयं याम्यामग्निभयं सुरद्विषि कलिलाभः समुद्रालये । वायव्यां
वरवस्त्रगन्धसलिलं दिव्याङ्गना चोत्तरे ऐशान्यां मरणं ध्रुवं निगदितं
दिग्लक्षणं खञ्जने ॥ अशुभं खञ्जनं दृष्ट्वा देवब्राह्मणपूजनम् । दानं
कुर्व्वीत कुर्य्याच्च स्नानं सर्व्वौषधिजलैः ॥ ० ॥

**Colophon.** इति वन्द्यघटीयहरिहरभट्टाचार्य्यात्मजश्रीरघुनन्दनभट्टाचार्य्यविरचितं
दुर्गोत्सवप्रमाणतत्त्वं समाप्तम् ॥ ० ॥ शुभमस्तु शकनरपतेरतीताब्दाः ॥
१७८१ ॥ श्रीजयनारायणशर्म्मणः पुस्तकमिदं स्वाक्षरञ्च ॥ * ॥

विवरणम् । श्रीमच्छ्रीरघुनन्दनभट्टाचार्य्यविरचितं दुर्गोत्सवप्रमाणतत्त्वम् । पुस्तकमिदं कलिकातारा्जकीयसंस्कृतपाठशालीयभूतपूर्व्वदर्शनाध्यापकजयनारायणतर्कपञ्चाननस्वहस्तलिखितम् ।

---

No. 337. देवप्रतिष्ठातत्त्वम् । Devapratishthátattwam. Substance, country-made yellow paper, 18×3½ inches. Folia, 8. Lines, 6-7 in a page Character, Bengali. Date, ? Appearance, fresh. Prose. Generally correct. Complete.

A work treating of the consecration of an image of a deity under the name of Devapratishthátattwa by Raghunandana of the Bengal school. It gives a complete list of things required in the performance of the ceremony. This codex also originally belonged to the late Professor Jayanáráyaṇa Tarkapañchánana.

**Beginning** अथ देवप्रतिष्ठाप्रयोगः । तत्र शिल्पिनं परितोष्य शुभे दिने स्वस्तिवाचनादि कारयित्वा । ॐतत्सदित्युच्चार्य्य अद्येत्यादि अमुकगोत्रः श्रीअमुकदेवशर्म्मा तत्तत्सायुज्यकामः प्रीतिकामो वा अस्यां प्रतिमायां अमुकदेवप्रतिष्ठामहं करिष्ये इति सङ्कल्पः । सकामत्वे अमुकलोकगमनकामः इत्युल्लेखः । ततो गौर्य्यादिषोडशमातृकापूजावसोर्धारासम्पातमायुष्यसूक्तजपाभ्युदयिकश्राद्धानि कृत्वा ॐ साधु भवानास्तां । ॐ साध्वहमासे इति प्रतिवचनं । ॐ अर्च्चयिष्यामो भवन्तं ॐ अर्च्चय ॥ इति प्रतिवचनम् । ॐ अद्येत्यादि मत्सङ्कल्पितामुकदेवप्रतिष्ठाकर्म्माङ्गहोमकर्म्मणि ब्रह्मकर्म्मकरणाय अमुकगोत्रं अमुकदेवशर्म्माणं एभिः गन्धादिभिरभ्यर्च्य भवन्तमहं वृणे ॐ वृतोऽस्मीति प्रतिवचनं । एवं स्वयं होमासामर्थ्ये होतृवरणं एवं आचार्य्यादिवरणं कृत्वा ततः स्वयं कृताचार्य्यो वा प्रतिमां समानीय तोरणादियुक्ते मण्डपेऽस्मिन्वेद्यन्वासनं संस्थाप्य घटानारोप्य मण्डले शालग्रामे जले वा गणेशशिवादिपञ्चदेवता आदित्यादिनवग्रहान् इन्द्रादिदशदिक्पालान् प्रत्येकमेकैककुम्भेषु कुशचयेषु वा पूजयेत् ॥

**End.** कालिकापुराणे प्रतिमायाः कपोलौ द्वौ स्पृष्ट्वा दक्षिणहस्तेन प्राणप्रतिष्ठां कुर्व्वीत तस्यां देवत्वसिद्धये । दक्षिणपाणिना स्पृष्ट्वा तत्तद्देवताया अङ्गन्यासमन्त्रं मूलमन्त्रञ्च पठित्वा हृदये दक्षिणपाण्यङ्गुष्ठं दत्त्वा अस्यै प्राणाः

प्रतिष्ठन्तु अस्मै प्राणाः क्षरन्तु च । अस्यै देवत्वसंख्यायै स्वाहा देवी प्रतिमायां अस्मै इत्युक्त्वं ॐ मनोज्योतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञं समिमं दधातु विश्वेदेवा न इह मादयन्ताम् ओम्प्रतिष्ठ इति पठित्वा देवस्य मस्तके मूलं वारत्रयं जपित्वा आचार्याय स्वर्णदक्षिणां दद्यात् ततोऽच्छिद्रावधारणं कुर्य्यात् मालायां ॐ तद्विष्णोः परमं पदं इत्यनेन विष्णुं स्मरन् नामानि च कारयेत् ॥ ततः प्रदीपयवधान्यसर्षपैर्यथालाभ उपपन्नैराचारतो वस्त्रपाणिभ्यां गृहीत्वा शिरःप्रभृतिपादपर्य्यन्तं निर्मञ्छयेत् विंशत्यन्यूनब्राह्मणान् भोजयेत् । दीनानाथेभ्यः किञ्चिद्दद्यात् । अत्यन्ताशक्तानां वृद्धिश्राद्धहोमावनावश्यकौ यथाशक्त्यभिधानात् । तथाचाल्पधनानां अर्च्चां विना पूजामाह विष्णुधर्म्मोत्तरम् । पूजा कार्य्या हविर्वेद्यां श्रद्धया भृगुनन्दनः । न त्वन्यद्दक्षिणैर्यज्ञैर्यजेतेह कदाचन ॥ विष्णुर्देवनिकायस्य यथाच कुर्म्मनन्दनम् । तपसा पूजयेन्नित्यं तस्मादल्पधनो नरः ॥ यद्येकाहे देवप्रतिष्ठावास्तुयागगृहीतग्रहस्तदा तन्त्रेणैव वृद्धिश्राद्धं क्रमेण यागं कुर्य्यात् एकस्मिन्नेवाग्नौ होमद्वयं होमत्रयं वा एकाग्नौ अनेकहोमपक्षे तन्त्रेणैव परिसमूहनादिकमाह भोगिनः गणेष्वेकः परिसमूहं इष्टो बर्हिः पर्य्युक्षणमाज्यभागाविति ॥ ० ॥ ० ॥

Colophon — इति श्रीरघुनन्दनभट्टाचार्य्यविरचितं देवप्रतिष्ठातत्त्वं समाप्तम् ॥ ० ॥ ० ॥
इति श्रीजयनारायणशर्म्मणा लिखितमेतत् पुस्तकम् ॥

विवरणम् । स्मार्त्तश्रीरघुनन्दनभट्टाचार्य्यविरचितं देवप्रतिष्ठातत्त्वम् । एतदपि पूर्वोक्तजयनारायणतर्कपञ्चाननस्वहस्तलिखितम् ।

---

*No.* 338 दोलयात्रातत्त्वम् । *Dólayátrátattwam*. *Substance*, *country-made* white paper, 15 x $2\frac{1}{2}$ inches. Folia, 5. Lines, 6-8 in a page. Character, Bengali. Date, S'aka 1748. Appearance, very old. Prose Generally correct. Complete.

A work treating of the same subject as that noticed in No. 300, under the name of Dólayátrátattwa, by Raghunandana of the Bengal school.

Beginning. — श्रीदुर्गा ॥ प्रणम्य सच्चिदानन्दं गोविन्दमजमव्ययम् । दोलयात्राविधेस्तत्त्वं वक्ति श्रीरघुनन्दनः ॥ यथा स्कन्दपुराणे श्रीपुरुषोत्तममाहात्म्ये । फाल्गुनेमासि कर्त्तव्यं दोलारोहणमुत्तमम् । यत्र क्रीडति गोविन्दो गोपिकानुपर-

चाय वै ॥ प्रत्यर्चां देवदेवस्य गोविन्दाख्यान्तु कारयेत् । प्रासादं पूर्व्वतः कुर्य्यात् षोडशस्तम्भसुच्छ्रितम् ॥ चतुरस्रं चतुर्द्वारं मण्डपं वेदिकान्वितम् । चारुचन्द्रातपं मास्यं चामरध्वजशोभितम् ॥ मध्यगतं वेदिकायां श्रीपर्णीकाष्ठनिर्म्मितम् । फल्गूत्सवं प्रकुर्व्वीत पञ्चाहानि त्र्यहाणि वा ॥

End. तदयं संक्षेपः ॥ • ॥ यदा अरुणोदयकाले पौर्णमासीलाभः तदैव दोलयात्रा उभयदिनेऽरुणोदयकाले पौर्णमासीलाभे पूर्व्वदिने सायंमध्याह्नकालव्यापित्वात् त्रिसन्ध्यव्यापित्वेन तिथेर्ब्बलवत्त्वात् ॥ यदा तिथिक्षयवशात् अरुणोदयकाले न पौर्णमासीलाभस्तदा कदाचित् सन्ध्यायभावेन चतुर्द्दश्यादरः ॥ एतेन पूर्व्वदिनेऽरुणोदयं विना पूर्व्वाह्णे पौर्णमासीलाभः परदिने पूर्व्वाह्णे मुहूर्त्तान्यूनतिथिलाभस्तदा फल्गूत्सवः पूर्व्वदिने युग्मवचनानुरोधादिति निरस्तम् ॥ उभयदिने कर्म्मयोग्यप्रशस्तकालप्राप्ततिथिसन्देहे एव युग्मवचनप्राप्तेः । एवं पञ्चमीपर्य्यन्तासु तिथिषु तत्सूकरणे अनयैव दिशा व्यवस्थोन्नेया ॥ • ॥ अथ दर्शनफलं तत्रैव ॥ अथ ते प्रचयकरं शृणु दर्शनजं फलम् । पश्यन् हरति गोविन्दं गोहत्याद्युपपातकम् ॥ स्त्रीघोत्यशेषपापानि ब्रतीये नात्र संशयः । दोलायमानं गोविन्दं मञ्चस्थं मधुसूदनम् ॥ रथस्थं वामनं दृष्ट्वा पुनर्ज्जन्म न विद्यते । इमां यात्रां कारयित्वा चक्रवर्त्ती भवेन्नरः ॥४८॥

Colophon इति श्रीहरिहरभट्टाचार्य्यात्मजश्रीरघुनन्दनभट्टाचार्य्यमहामहोपाध्याय-विरचितं दोलयात्रातत्त्वं समाप्तम् ॥ • ॥ श्रीकाली पातु ॥ शकाब्दा· १७४८ लिपिरियं श्रीरघुवरस्याष्टाविंशतिदिवसीयेति ॥ श्रीराघवेन्द्रशर्म्मणः पुस्तकमिदम् ॥ श्रीश्रीदुर्गा ॥ श्रीश्रीकाली ॥

विवरणम् । स्मार्त्तश्रीरघुनन्दनभट्टाचार्य्यविरचितं दोलयात्रातत्त्वम् ॥

---

No 339 दोलयात्रातत्त्वम् । Dólayátrátattwam. Substance, country-made yellow paper, 18 × 4 inches Folia, 5 Lines, 2–6 in a page. Character, Bengali Date, ? Appearance, fresh, Prose. Generally correct Complete.

Another copy of the same work.

Colophon. इति श्रीहरिदास(?)भट्टाचार्य्यात्मजश्रीरघुनन्दनभट्टाचार्य्यविरचितं दोलयात्रातत्त्वं समाप्तम् ॥ • ॥ * ॥ * ॥ श्रीरामः श्रीकृष्णः श्रीहरिः श्रीराधा-

सिद्धगंधर्वा नागा विद्याधरा नगाः । दिक्पाला लोकपालाश्च ये च विघ्नविनायकाः । जगतां शांतिकर्त्तारो ब्रह्माद्याश्च महर्षयः । मा विघ्नं मा च मे पापं मा संतु परिपंथिनः । सौम्या भवंतु तृप्ताश्च भूतप्रेतसुखावहाः । ततो यजमानो स्वस्थमेत्य पादौ प्रक्षाल्याचम्य पूर्णाहुतिं कृत्वाचार्यं संपूज्य तस्मै वस्त्रयुग्म धेनुं च दक्षिणां दत्त्वा ऋत्विग्भ्यो यथाशक्ति अन्येभ्यश्च भूयसीं विनायकांबिकयोरुत्तरपूजां कृत्वा विसृज्याचार्याय दत्त्वाग्निं संपूज्य विभूतिं धृत्वाग्निं विसृज्य ब्राह्मणान् भोजयित्वा कर्मेश्वरार्पणं कुर्यात् ॥

Colophon. इति नारायणभट्टसूरिसूनुरामकृष्णभट्टसूनुकमलाकरभट्टकृते शांतिरत्ने विनायकशान्तिः समाप्ता ॥

विवरणम् । शांतिरत्नाकरो नाम कमलाकरभट्टविरचितः शान्तिविषयकोऽपरोनिबन्धः ।

---

No. 367. शान्तिप्रयोगः । Sánti Prayogaḥ. Substance, country-made colourless paper, 12×3 inches. *Folia*, 7. *Lines*, 10–12 in a page. Character, Nágara. Date, ? Appearance, very old, worn out, and written by different hands. Verse. Generally correct. Complete.

A manual on the same subject based on the work of Garga.

Beginning. श्रीगणाधिपतये नमः । अथातः संप्रवक्ष्यामि शौनक शान्तिमुत्तमां । वैधृतौ च व्यतीपाते महादोषोऽभिजायते । कुमारजन्मकाले तु व्यतीपातोऽथ वैधृतिः । संक्रमश्च रवेश्च दुःखदारिद्र्यकारकः । दारिद्र्यं महद्दुःखं व्याधिपीडामहद्भयं । अप्रियं मृत्युमाप्नोति तत्र कार्या विचारणा । स्त्रीणां वा शोकदुःखं च सर्वनाशकरो भवेत् । शांतिर्वा पुष्कला कार्या तत्र दोषो न कश्चन ।

End. एवं क्रमेण चोतयं होमशेषं समापयेत् । सर्वालंकारयुक्तानां चर्याणामभिषेचनं । चतुर्भिः कलशैरद्भिश्चतुर्कुंभसमन्वितं । धौतांबराणि धृत्वा-ऽथ कुर्यादाज्यावलोकनं । पूर्णाहुतिं च जुहुयाद् यजमानः समाहितः । ततः सर्वं परया भक्त्या ईश्वराय निवेदयेत् । सर्वालंकारसंयुक्तां सवत्सां गां पयस्विनीं । प्रतिमां वस्त्रयुग्मं च आचार्याय निवेदयेत् । ईश्वरप्रीतये भक्त्या कुर्याद्ब्राह्मणभोजनं । अन्येषां चैव सर्वेषां कुर्याद्ब्राह्मणभोजनं । तत्प्रसादेन विधिना वित्तशाठ्यविवर्जितः । एवं यः कुरुते शांतिं सर्वैः पापैः प्रमुच्यते । सर्वान् कामानवाप्नोति चिरजीवी सुखी भवेत् ।

**Colophon.** इत्युत्तरगार्ग्योक्तकृष्णचतुर्दशीशांतिप्रयोगः ॥ छ ॥ भैरवाय नमः ॥ छ ॥ शिवार्पणमस्तु ॥

विवरणम् । गार्ग्योक्तशान्तिकर्म्मानुष्ठानविषयकोऽयं निबन्धः ।

---

No. 368. शान्तिसारः । Śántisárah. Substance, country-made white paper, 18×4 inches. Folia, 272. Lines, 7–10 in a page. Character, Nágara. Date, 1862. Appearance, old, slightly worm-eaten throughout, and written by different hands. Prose. Generally correct. Complete.

Another work on the same subject, entitled Śántisára, by Dinakara Bhaṭṭa, son of Rámakrishna Bhaṭṭa and grandson of Náráyaṇa Bhaṭṭa.

**Beginning.** ॥ श्रीगणेशाय नमः ॥ श्रीरामकृष्णपितरं नत्वोमांशौ सदाशिवं रामं(?)। दिनकरशर्म्मा तनुते शांतिकसारं सुखाय विबुधानां ॥ १ ॥ ग्रंथेस्मिन् शांतिसाराख्ये ये मयार्था निरूपिताः । तेषामादौ सुबोधाय क्रियतेऽनुक्रम. स्फुटः ॥ २ ॥ कथितोयुतहोमोऽत्र लक्षहोमस्ततःपरं । कोटिहोमस्ततश्चोक्ता भेदाः शतमुखादयः ॥ आदित्यादिग्रहाणांच प्रत्येकं शांतयस्तत. । शनिस्तुतिर्मंदस्नानं मघयोगे च शांतिकं ॥ विवाहादौ गुरोः शांतिः प्रतिशुक्रादिशांतयः । विरुद्धग्रहणे शांतिः शांतिर्वैनायकी तत. । महारुद्रादिविषयस्तथा रुद्राभिषेचनं । पंचामृतेन स्नपनं सहस्रघटकं तथा ॥ महास्नानविधिस्तद्वन्महापूजा तदुत्तरं । वरिवस्यापचदस्य विधानं समुदीरितं । लिंगस्य पार्थिवस्याथ पूजा चंडीविधिस्ततः । दुर्गाकल्पोऽथ सर्पस्य संस्कारो वास्तुशांतिकं ॥ रजोदर्शनशांतिश्च शांतिर्वैधव्ययोगके । उत्पाताकविवाहोऽथ गोमुखप्रसवस्तथा । तथा कृष्णचतुर्दश्याः सिनीवाल्याश्च शांतिकं । शांतिः कुहाश्च दर्शस्य मूलाश्लेषाविधिस्ततः । ज्येष्ठाशांतिस्ततः प्रोक्ता नक्षत्रैक्ये च शांतिकं । व्यतिपाते च वैधृत्यां संक्रमे चैव शांतिकम् । नक्षत्राणां तिथीनांच गंडांते शांतिकं ततः । जन्मादौ दिनस्यापि क्षये विषघटीषु च । दिनमासाब्दभेदेन बालशांतिस्ततःपरं । रोगर्क्षतिथिवारादि शांतयोऽत्र शांतयः । पंचके च मृते शांतिस्त्रिपुष्करमृते ततः । त्रिपादर्क्षमृते शांतिर्गजशांतिस्ततःपरं । अश्वगोपीडने शांतिः काकमैथुनदर्शने । वायसांतःप्रवेशे च पल्लीसरटशांतिकं ॥ कपोतस्य ततः शांतिः इत्या-

शांतिस्ततःपरं । विद्युद्धते तथा शांतिश्चानानांच सचर्षं । अस्मात-पापकालस्य शांतिः साधारणी ततः । देवताप्रोद्दं चत्रह्मोजलानांच विकारके । उपस्कारविकारे च स्तपच्चिविकारके । अनिमित्त ध्वजा-देश पाते शांतिस्ततःपरं॥ नानोत्पातेषु शांतिश्च सतजीवनशांतिकं। उन्ना शांतिरकाले च दक्षिनोमद् आमवे । दक्षिन्याय तथा धेनोमंद्-शांतिस्ततःपरं। शांतिर्भंडे वदंष्ट्राणां भंगे सिंगादिकस्य च। दुःस्वप्नदर्शने शांतिः पर्जन्याभावशांतिकं। अथोराजाभिषेकस्य प्रतिवर्षाभिषेचनं। सिंहासनच्छत्रविधिदुर्गस्य विधिरीरितः।

End. होमं कृत्वा चमायेत देवदेवीं न्पोत्तम पुनः प्राप्तो भवेद्दाम्नुप्रतिष्ठाविधि-चोदिता सद्दत्याश्विनमासेतु अष्टमी नवमीषु च कार्तिक्यां माघचैत्रे तु चित्रायां रोहिणीषु च वैशाख्यांतु प्रदातव्या तथा ज्येष्ठस्य सप्तम आषाढे द्वादशी चोक्ता अष्टमी पूर्णिमा नभे नभस्ये रोहिणी वरा चतुर्थ्यां भौम-वासरे संक्रान्तिषु च सर्वासु युगमोरभवासु च चंद्रसूर्योपरागेषु प्रति-ष्ठायज्ञकर्माणि पुत्रोत्सवे प्रदातव्या जन्मपुण्याभिषेचने मार्गे व्रतनिर्वंधे तु सुघोरे केतुदर्शने ग्रहहत्योपशमने धारा देया शुभावहा। एवं यो वाड-वेन्द्राणां शास्त्रदृष्टेन कर्मणा तस्य भः सिध्यते सर्वा सनता सदमागरा अश्वमेधसमं पुण्यं दिनहोमात् प्रजायते वाजपेयशतं चाग्निष्टोम ( चैवा-ग्निष्टोम ? ) शतं तथा आधयोव्याधयस्तस्य न भवंति कदाचन आयुरा-रोग्यमैश्वर्यं लदंते च सुखी भवेत्।

Colophon. इति श्रीमन्नारायणभट्टसूरिसूनुश्रीमद्रामकृष्णभट्टात्मजदिनकरभट्टकृते शांतिसार समाप्तं ( शान्तिसारः समाप्तः ?) । संवत् १८९१ । के मिति फाल्गुणवदि १ ॥

विवरणम् । शान्तिसारो नाम दिनकरभट्टकृतः शान्तिकर्मविषयको निबन्धः ।

---

No. 369. शान्तिहोमः । Sántihomaḥ. Substance, country-made white paper, 9×4 inches Folia, 22 Lines, 9-11 in a page. Character, Nágara. Date, ? Appearance, not old. Prose. Generally correct. Complete.

A work treating of auspicious offerings, under the name of Sántihoma, by Mádhava.

Beginning. ॐ न त्वा म य वी यामर्चंति दिवानिशं सुरमया ध्यायंति यं योगिनो-

यन्नाम्यन्तगिरस्तुवंति सततं यां केशवेशादयः यां ज्ञात्वा मुनयोव्रजंति परमं स्थानं रमामेवितं तां विद्वज्जनवंदितां भगवतीं भक्त्या नमीशां भजे।१। श्रीरूपनारायणनारदादिभिः छतं विचिवं बहुशास्त्रविस्तरं विलोक्य सम्यक् शुभदंच शांतिकं यथागमाचादितमाधवीवुधः ? यथानुक्रमचि-का सुस्नातः प्राङ्मुखीभूत्वा यजमानः छताह्निकः आहूय ब्राह्मणान् कुर्य्यात् प्रतिज्ञां विधिवत्तदा ।

End. अथ शुक्लांबरधरः शुक्लमाल्यानुलेपनः यजमान आचार्य्यादीन् गंध-माल्यादिभिरभ्यर्च्य प्रकृते ऋत्विगादयच + + + + नुसारेण दक्षिणां दद्यात् तत्र प्रयोगः अद्यनवग्रहमखकारित दुर्गापाठ्दवन + + + नासिद्ध्यर्थं अमुकगोत्राय आचार्य्याय इमां दक्षिणां तुभ्यमहं संप्रददे

Colophon इ ची चा वि चि यां ध शां स प्र शु म् रा।

विवरणम् । दुष्टग्रहाद्युपशमार्थकशांतिकहोमविषयकोऽयं निबन्धः ।

---

No. 370. शुद्धिकारिका। Śuddhikáriká. Substance, country-made yellow paper, $22 \times 2\frac{1}{2}$ inches. Folia, 7. Lines, 8-9 in a page. Character, Bengali. Date, ? Appearance, very old, worn out, and writing effaced in most parts. Verse Generally correct. Incomplete

Verses on purification under the name of Śuddhikáriká, based on the Suddhitattwa of Raghunandana. Anonymous.

Beginning. ॐ नमो भगवते वासुदेवाय । सर्व्वस्वरूपं श्रीरामं प्रणम्य भक्तवत्सलं । सम्पुटे शुद्धितत्त्वस्य कथितृकरोति कारिकां । शुध्येद्द्विजोदशाहेन द्वादशाहेन भूमिपः । वैश्यः पञ्चदशाहेन शूद्रस्तु त्रिंशता दिनैः ॥ सजा-त्युक्ताशौचमेतत् । पूर्णाशौचन्तु कथ्यते । खण्डाशौचमतो न्यूनं न खण्डे खण्डमिष्यते । अथ शौचाशौचयोर्लक्षणं । शौचाभावोनवाशौचं वैपरीत्यं नवा तयोः । यौगपद्यंविरोधाच घटतन्नाशयोर्यथा । तस्मात् संस्काररूपत्वं धर्म्माधर्म्मवदिष्यते । अशौचं विहिते कार्य्येऽनर्हता प्रतिपादकं शुद्धिस्तु तादृशे कार्य्ये योग्यत्वप्रतिपादिका । अथ गर्भस्रावाशौचं । गर्भस्रावस्य कालात्तु मासानामष्टमावधि । तत्र षण्मासपर्य्यन्तं माससंख्यं दिनं स्मृत.(?) अधिकं वैदिके कार्य्ये विप्राणां दिनमेककं । शूद्राणां षड्दिनानि स्युः सूतिकानामिदं स्मृतं । सप्तमाष्टमयोस्तासां स्वजात्युक्तमशौचकं सपिण्डा-नामेकरात्रं जन्माद्यात्परतो यदि । मरणं जीवनं वापि तदा नवममा-सवत् ।

End. ( नास्ति ) ।

Colophon. ( नास्ति ) ।

विवरणम् । शुद्धिकारिका नाम शुद्धिविषयकाः काश्चित् कारिकाः ।

---

No. 371. शुद्धितत्त्वम् । S'uddhitattwam. Substance, country-made colourless paper, 22 × 2½ inches. Folia, 103. Lines, 5–6 in a page, having a blank space of about an inch square in the middle. Character, Bengali. Date, ? Appearance, very old, worn-out, and writing effaced in most parts. Prose. Generally correct. Complete.

A work treating of purification by Raghunandana. It belongs to his Smrititattwa series.

Beginning. ॐ नमो गणेशाय करिगणेशाननाय ॥ प्रणम्य सच्चिदानन्दं जगतामीश्वरं हरिं। शुद्धितत्त्वानि तत्प्रीत्यै वक्ति श्रीरघुनन्दनः। मृतानुगमनं नार्य्याः योगसिद्धिर्मयस्तथा ॥ नानाफलं तथैकस्मादाद्याद्येकं फलं क्वचित् अशौचसंकरोऽशुद्धिः स्वल्पस्य गुरुसङ्करात् । दिनद्वयत्रयाभ्याञ्च पूर्व्वाशौचसमापनं । अशौचान्तदिने कृत्यं जननेपि च मुण्डनं। अन्याशौचस्य मध्ये तु नामकर्म्मादिकाः क्रियाः । गर्भस्रा[स(?)]वे तथाशौचं स्त्रीणां बालेऽथ संगुणे । कालौ तत्प्रतिषेधश्च पक्षिणी लक्षणं तथा। विदेशस्थस्य चाशौचं सपिण्डादेरशौचकं । त्यागस्तत्र च संस्थादेरशुचिपात्रनिर्णयः । अशौचं मृत्युभेदेन सद्यःशौचमनन्तरं । शवानुगमनाशौचमशास्त्रमृत-निर्णयः । द्रव्यशुद्धिविचारस्तु सूतिकास्पर्शने सति । भर्त्तुः सपत्न्याश्चाशुद्धिश्चदाहमरणद्वये । मुमूर्षुकृतकृत्यादि तथा पर्णनरक्रिया । उदकादिक्रिया तत्र प्रेतस्थाने च वाससः । एकत्वद्वित्वमन्यत्वादयः सम्बन्धवाचकाः प्रेतक्रियासु संशुद्धिर्नृणां तर्पणे सदा । गोत्रोक्तिर्नामगोत्रोक्तिः शोकापनोदनादिकं । पिण्डोदकादिदानञ्च रात्रावपि च सा क्रिया । अशौचान्तद्वितीयाह्नःकृत्यं दानं, दृषत्यजि. प्रेतक्रियासु संक्षेपादधिकारविनिर्णयः । सपिण्डादिभेदाशौचसंक्षेपोऽन्त्येष्टिपद्धतिः । निरूप्यतेऽत्र संक्षेपात् सतां शुद्धमभीप्सता ॥

End. सद्यः शौचे मरणयोरेकाह एव दश पिण्डाः अशौचान्तरमध्ये पिण्डोदेयो रात्रावपि । शङ्खाभिमि अस्थिप्रक्षेपक्रमस्तु स्नात्वाचम्य उदङ्मुखः कुशत्रयं सत्ताम्यादाय ॐ नमदित्युच्चार्य्य अमुकस्य एतदस्थिसम-

संख्यावर्षसहस्रावच्छिन्नस्वर्गाधिकरणकमहितलकामोऽमुकस्य एतान्यस्थीनि गङ्गायां निक्षिपामि इति संकल्प्यापसव्यं कृत्वा पञ्चगव्येन सिक्त्वहिरण्य-मधुतिलाद्यैः संवेष्ट्य मृत्तिकापुटे स्थापयित्वा दक्षिणहस्तेन तत्पुटकमादाय दक्षिणां दिशं पश्यन् ॐ नमोस्तु धर्म्मायेति वदन् जलं प्रविश्य स मे प्रीतो भवतु इत्युक्त्वास्थि क्षिपेत् ततो मज्जनं कृत्वा उत्थाय सूर्य्यं दृष्ट्वा दक्षिणामुत्सृजेत् ॥ ० ॥ पर्णनरदाहे तु शरपत्रैः पुत्तलकं कृत्वा शिरसि चत्वारिंशत् ४० पलाशपत्राणि ग्रीवायां दश १० उरसि त्रिंशत् ३० । उदरे विंशतिः २० । बाह्वोः शतं १०० । हस्तद्वयाङ्गुलीषु पञ्च पञ्च वृष-द्वये त्रीणि त्रीणि ३ लिङ्गे चत्वारि ४ ऊरुद्वये शतं १०० । जानुजङ्घयोः त्रिंशत् ३० । पादाङ्गुलीषु च दश १० । पञ्च पञ्च ५ ऊर्ध्वोः एवं पुत्तलकं मेषलोमसूत्रेण संवेष्ट्य यवपिष्टेन उपलिप्य ++ पूर्ववद्दहेत् ॥

Colophon. इति वन्द्यघटीयश्रीहरिहरभट्टाचार्य्यात्मजरघुनन्दनभट्टाचार्य्यविरचिते स्मृत्यर्थतत्त्वे शुद्धितत्त्वं समाप्तं ॥ ० ॥ * ॥

विवरणम् । स्मार्त्तश्रीरघुनन्दनभट्टाचार्य्यविरचितं शुद्धितत्त्वनामकोऽयं निबन्धः शुद्धिवि-षयकः सुप्रसिद्ध एव ।

---

No. 372. शुद्धितत्त्वं । S'uddhitattwam. Substance, country-made white paper, 14×4 inches Folia, 78. Lines, 1-11 in a page Character, Nágara. Date, Samvat 1873. Appearance, not old, but slightly worm-eaten throughout. Prose. Generally correct. Complete.

Another copy of the same work.

Colophon इति श्रीरघुनंदनभट्टाचार्य्यविरचितं शुद्धितत्त्वं समाप्तं ॥ संवत् १८७३ भाद्रपदशुक्ल अमावास्या(?) तद्दिने लि॰ आह्मणकासीमध्ये ॥

विवरणमुक्तपूर्व्वम् ।

---

No. 373. शुद्धितत्त्वम् । S'uddhitattwam. Substance, country-made coloured paper, 22×3 inches. Folia, 84. Lines, 1-8 in a page. Character, Bengali. Date, ? Appearance, very old, worn out, and torn. Prose Correct Complete

A third copy of the same work.

विवरणमुक्तपूर्व्वम् ।

No. 374. शुद्धितत्त्वम् । S'uddhitattwam. Substance, foolscap paper, 17×4 inches. Folia, 137. Lines, 2–7 in a page. Character, Bengali. Date, 1747 S'aka. Appearance, fresh, and written by different hands. Prose. Generally correct. Complete.

Another copy of the same work.

Colophon. इति वन्द्यघटीयश्रीहरिहरभट्टाचार्य्यात्मजमहामहोपाध्यायश्रीरघुनन्दन-भट्टाचार्य्यविरचिते स्मृतितत्त्वे शुद्धितत्त्वं समाप्तं ॥ * ॥ श्रीगुरुदेवोविजयतितरां ॥ * ॥ श्रीगोपालोजयति ॥ * ॥ श्रीश्रीरामचन्द्रोजयति ॥ * ॥ शकाब्दा १७४७ ॥ * श्रीः ॥

विवरणमूलकपूर्ब्बम् ।

---

No 375. शुद्धितत्त्वम् । Suddhitattwam Substance, country-made colourless paper, 14×1½ inches. Folia, 111. Lines, 2–7 in a page, having a blank space of about an inch square in the middle Character, Bengali. Date, S'aka 1572. Appearance, very old, and worn out. Prose. Correct. Complete.

Another copy of the same work, presented to the library by the late Harinátha Tarkasiddhánta of Navadvípa.

Colophon. इति महामहोपाध्यायश्रीरघुनन्दनभट्टाचार्य्यविरचितं शुद्धितत्त्वं समाप्तं । * । शुभमस्तु शकाब्दाः १५७२ ॥ श्रीरामचन्द्राय नमः ॥ श्रीशिवाय नमः श्रीदुर्गायै नमः ॥ श्रीकृष्णः ॥

विवरणमूलकपूर्ब्बम् ।

---

No 376. शुद्धितत्त्वटीका । Suddhitattwa-tiká. Substance, foolscap paper, 18×5 inches. Folia, 138. Lines, 3–8 in a page. Character, Bengali. Date, ? Appearance, not old, but written by different hands. Prose. Generally correct. Complete.

A commentary on the Suddhitattwa by Kásiráma Váchaspati, son of Rádhávallabha, and grandson of Rámakrishna, a Vaidika Bráhmana of Vishnupur in Bankura.

Beginning ॐ श्रीरामाय नमः ॥ नत्वा गुरोश्चरणपद्मरजांसि मूर्द्ध्नि श्रीकान्तकान्त-रणद निधाय चित्ते । श्रीकाशिरामकृतनी हतिमां वितनोति शुद्धेर्मितेन

वचसा विहृतिं तनोति । स्मृतिशास्त्राम्बुधौ लीलाकृतसेतुं जगद्गुरुं विदितं विभु लोकेषु नमामि रघुनन्दनं । मीमांसादिनानाशास्त्रपारदृश्वा वन्द्यघटीयः श्रीमान् रघुनन्दनभट्टाचार्य्यः प्राचीनविचक्षणगणनानाविधव्याख्याजनितसन्देहस्य स्मृतिशास्त्रस्य मुख्यतरवचनयुक्तिभ्यां तत्त्वं निर्णीय इदानीन्तनानां सुखबोधाय निबन्धांश्चकार तत्र च स्मृतिशास्त्रस्य स्वभावतो दुर्गमतया कानिचित् कठिनानि सन्ति वचनानि मया यथामति व्याख्यायन्ते । तत्र शुद्धितत्त्वव्याख्या ।

End — खण्डाशौचे तु 'देवलः । अशौचकालाद्विज्ञेयं स्पर्शनं तत्त्रिभागतः । मातुर्दशराचमिति चादिपुराणे ब्राह्मणी क्षत्रिया वैश्या प्रसूता दशभिर्दिनैः । गते. शूद्रा तु संस्पृश्या त्रयोदशभिरेव च । ० । यं प्राहुत समस्तशास्त्रनिपुणश्रीरामकृष्णात्मजः श्रीराधोत्तरवल्लभाख्यसुकृती सद्वीरचूडामणिः । तेन श्रीयुतकाशिरामकृतिना यत्नेन निष्पादिता टीका नातिसुस्पष्टा प्रकृतिभिः सानुग्रहैर्दृश्यतां । ० ॥

Colophon. — इति श्रीकाशीरामवाचस्पतिभट्टाचार्य्यविरचिता शुद्धितत्त्वटिप्पनी समाप्ता । ० । ० ।

विवरणम् । श्रीकाशीरामवाचस्पतिभट्टाचार्य्यविरचिता शुद्धितत्त्वटीका ।

---

No. 377. शुद्धितत्त्वटीका । S'uddhitattwa-tíká. Substance, country-made yellow paper, 18 × 3½ inches. Folia, 130. Lines, 7–9 in a page. Character, Bengali Date, S'aka 1749, Bengal era 1234. Appearance, fresh; written by different hands. Prose Generally correct. Complete.

Another copy of the same work.

Colophon. — । * । इति श्रीकाशीरामवाचस्पतिभट्टाचार्य्यविरचिता शुद्धितत्त्वटिप्पनी समाप्ता । * । श्रीरामचन्द्रचरणे मम भक्तिरस्तु । गोविन्दोविन्द्याद्धर्मं ॥ शकाब्दाः १७४९ तां १७ अग्रहायण । सन १२३४ साल ॥ चरणे नमः ॥ श्रीरामजीवनदेवशर्म्मणः पुस्तकमिदं स्वाक्षरञ्च ॥ लिखनपरिश्रमवेत्ता भवति हि विद्वज्जनोनान्यः । सागरलङ्घनखेदं हनुमानेकः परं वेद । इति । श्रीरमार्गशीर्षस्य सप्तविंशतिदिवसे कुजवारेद्विपञ्चाद्दण्डराभ्यन्तरे समाप्तोऽयं ग्रन्थः । श्रीः श्रीः श्रीः । नाकुण्डाख्यग्रामे समाप्तोऽयं ।

विवरणमुक्तपूर्व्वम् ।

---

विवरणम् । महामहोपाध्यायश्रीरुद्रधरविरचितः शुद्धिविवेको नाम शुद्धिविषयकोऽयं निबन्धः ।

---

No 379. शुद्धिव्यवस्थासंग्रहः । S'uddhivyávasthá-sañgrahaḥ. Substance, country-made yellow paper, 24×4 inches. Folia, 56. Lines, 2-7 in a page, having a blank space of about half an inch square in the middle. Character, Bengali. Date, ? Appearance, fresh Generally correct. Complete.

A collection of the opinions of Pandits versed in Smṛiti on purification, under the name of S'uddhivyávasthá-sañgraha. Anonymous.

Beginning. ॐ नमोविघ्नेशराय ॥ अथ शुद्धिव्यवस्थासंक्षेपः ॥ तत्रादौ शुद्धिपदार्थो-निरूप्यते । तत्र विहितकर्म्मार्हत्वप्रयोजकधर्म्मविशेषः शुद्धिः । विहित-कर्म्मानर्हत्वप्रयोजकोऽधर्म्मविशेषोऽशुद्धिरिति वाचस्पतिमिश्राः । स च पितृमरणादावेकादशाहादिस्वदप्रदानादिजन्यः ।

End. अथ वृद्धदामान्नदानं ॥ * ॥ सनत्कुमारसंहितायां । • । कुलमान-प्रमाणेन प्रदद्यात् सुस्कतण्डुलान् । मुद्गमाषप्रपूरितं कुर्य्यात् पात्रचतुष्टयं ॥ दधिक्षीरघृतादीश्च वस्त्रवेष्टितमस्तकान् । जातिलवङ्गकर्पूरसुवासितजलान्वितान् । शर्करासारखण्डैश्च ताम्बूलैश्च समन्वितान् नानाफलसमायुक्तान् नानावस्तुविनिर्म्मितान् । योदद्याद्विप्रवे राजन् सोपि विष्णौ लयं व्रजेत् । चतुर्युगसहस्रन्तु विष्णुलोके महीयते । जन्मान्तरं ततः प्राप्य स भवेत् पृथिवीपतिः । तदन्ते जाह्नवीं देवीं प्राप्य मोक्षमवाप्नुयात् । वृद्धदामान्नमेतद्धि शङ्करेण च भाषितं । एतन्निवेदयेत् सर्व्वं गुरवे भक्तिमान्नरः । युगादावयनेपुण्ये मन्वादौ च विशेषतः ॥ * ॥ * ॥

Colophon. इति शुद्धिव्यवस्था समाप्ता ॥ * ॥ * ॥ श्रीरामाय नमः ॥ श्रीकृष्णाय नमः श्रीरामाय नमः ॥ श्रीकृष्णाय नमः ॥ • ॥ श्रीमधुसूदनः ॥ श्रीराधाकृष्णाभ्यां नम. ॥

विवरणम् । शुद्धिविषयिणीनां कतिव्यवस्थानां संग्रहभूतोऽयं निबन्धः ।

---

**No. 380. धर्म्मप्रवृत्तिः ।** Dharmma-pravritiḥ. Substance, country-made white paper, 10×4 inches. Folia, 91. Lines, 5–14 in a page. Character, Nágara. Date, Samvat 1803 Appearance, very old, worn out, writing effaced in parts, and slightly worm-eaten. Verse. Generally correct. Complete.

A digest on religious law in *verse* entitled Dharmapravritti by Náráyaṇa. It treats of S'uddhi at the end, and had, in consequence, been placed among works on that subject.

**Beginning.** श्रीन्दसिंहाय नमः अविघ्नमस्तु नारायणं नमस्कृत्य सरस्वतीं च कामदां गणनाथं गुरूंश्चापि धर्म्मसंरक्षणाय वै । धर्म्मप्रवृत्तिः क्रियते कर्त्रा नारायणेन तु विदुषां कमनिश्रान्तां संमतिर्द्धर्म्मवर्द्धनी आलोक्य धर्म्मशास्त्राणि मन्वादिभिः कृतानि च आश्वलायनसूत्रं च इत्ति नारायणीं तथा सारमेव समुद्धृत्य स्मृतीनां वचनान्यथ । सिद्धांतानि समस्तानि समादाय तथैव हि वचनानि सतां चैव सम्मतानि मनीषिणां ग्रंथेऽस्मिन् यानि लिख्यंते धर्म्मप्रवृत्तिसंज्ञिके शौकवा (शौचा ?) दिकाः प्रवक्ष्यामि क्रियाणानुक्रमेण तु । तिथीनामपि सर्व्वेषां निर्णयानप्यसंशयान् । योगीश्वरः यस्मिन् देशे मृगः कृष्णस्तस्मिन् धर्म्मान्निबोधत धर्म्मसंरक्षणार्थाय तस्मिन् देशे वसेद्द्विजः । उष:काले समुत्थाय चिंतयेदात्मनोहितं कृत्वा नारायणं देवं स्तोत्राण्यपि च संपठेत् । अथ मौनविधिः प्रभाते मैथुने चैव प्रस्रावे दंतधावने स्नाने भोजनकाले च षट्सु मौनं विधीयते ।

**End.** रथ्याकर्द्दमतोयानि नावः पथि तृणानि च मारुतेनैव शुध्यंति पक्वेष्टकचितानि च इति वस्तुशुद्धिः अथ देहशुद्धिः अद्भिर्गात्राणि शुध्यंति मनं + + + न शुध्यति विद्यातपोभ्यां भूतात्मा बुद्धि + + + शुध्यति । अजाश्व मुखतोमेध्या गावोमेध्याश्च पृष्ठतः प्रोषित. (योषितः ?) सर्व्वतः शुद्धाः कारुहस्तः शुचिः सदा ॥ + + + + प्रोक्ता + + + शुद्धिरप्यत्र विज्ञेया शुद्धिरन्येषां विशेषात् सूतोऽन्यतः ।

**Colophon.** इति श्रीनारायणविरचितायां धर्म्मप्रवृत्तौ सर्व्वशुद्धिप्रकरणं समाप्तं पोथीसमापते शुभमत् संवत् १८०३ जो प्रतीदेष्टा मोक्षोपाभमदोष्यमहो चते । आष्टरमान्तिमोधीयाम आष्टरमामिदेष्यगोक्षीप्या शुभमस्तु तत् राम राम राम राम राम राम रा ।

विवरणम् । धर्म्मप्रवृत्तिर्नाम धर्म्मविषयकनिबन्धविशेषः श्रीनारायणविरचितः ।

**No 381.** शुद्धिमयूखः। Śuddhimayúkhah. Substance, country-made white paper, 10 × 5 inches. Folia, 45. Lines, 12 in page Character, Nágara. Date, ? Appearance, fresh. Prose Not correct. Complete.

•Another work on the same subject under the name of Śuddhi Mayúkha by Nílakaṇṭha Bhatta. It is a part of his Bháskara series.

**Beginning.** ॥ श्रीगणेशाय नमः ॥ ४ ॥ योलीलया संतनुतेऽत्र विश्वं तत् पालयत्यात्मनि विश्वरूपे। लयं नयत्याशु च पूर्णरूपः शिवं तनोत्वाशु रविर्महासौ ॥ १ ॥ श्रुतिस्मृती वीक्ष्य पुराणजातं तत्तन्निबंधानपि सन्निबंधान्। श्रीशंकरस्यात्मजनीलकंठोद्रव्यादिशुद्धिं विहणोति सर्व्वां १ प्रतारकैराहतमंवकिंचित्प्रतारकैराहतमत्र किञ्चि?) मया तु निर्मूलतया तदुज्झितं (तदुज्झितं?) जनोज्झितानो (जनोज्झितानो?) न हि तेन काचित् पुण्यहीनपचितिर्न हीयते १ अथ द्रव्यशुद्धिः ॥ आदित्यसुवर्णरूप्यशंखाश्मशुक्तिरत्नमयानि च कांस्यायस्ताम्ररैत्यानि त्रपुसीसमयानि च॥ निर्लेपानि च शुध्यंति केवलेन जलेन च ॥ शूद्रोच्छिष्टानि शोध्यानि त्रिधा क्षारास्वारिभिः।

**End.** तथा सर्व्वेषां प्रेतकार्य्याणि महागुरुनिपातने। कुर्य्यात् संवत्सरादर्वाक् श्राद्धमेकं तु वर्जयेत्। भृगुः। माता चैव तथा भ्राता भार्य्या पुत्रस्तथा स्नुषा। एषां मृतौ चरेच्छ्राद्धमन्यस्य न पुनः पितुः। तथा। माता चैव सुतोभ्राता पत्नी चैव विपद्यते। तत्र श्राद्धानि कुर्व्वीत न कुर्य्याज्जनके मृते। माता गौणी न जननी। तन्मरणोत्तरं प्रमीतौ पितराविति दैवलीयेन दैवपित्र्ययोर्निषेधात्। एतत् पूर्णसांवत्सरिकपरमिति केचित्। तत्रापि मूलं मृग्यं। अत्र पितरि मृतेऽन्यदीयं श्राद्धं न कुर्य्यादिति निषिध्यते। अन्यस्तो कुर्य्यादिति तु निष्प्रत्यूहं सामान्यवाक्यप्राप्तमेवेति न घटत इति दिक्॥

**Colophon** इति श्रीमीमांसकभट्टशंकरात्मजभट्टनीलकंठेन कृते भास्करे शुद्धिमयूखः समाप्तः॥ शुभमस्तु॥ श्रीरामार्पणमस्तु॥ ॥

विवरणम्। शुद्धिमयूखो नाम भट्टनीलकंठविरचितः शुद्धिविषयकोऽयं निबन्धः।

---

No 382. शुद्धिरत्नाकरः। Suddhiratnákarah. Substance, foolscap paper, 17×4 inches. Folia, 54. Lines, 8 in a page. Character, Bengali. Date, ? Appearance, old. Prose and verse. Not correct. Complete.

A work treating of the same subject under the name of Suddhiratnákara by Mathuranátha Chakravartin.

Beginning. श्रीसूर्य्याय नमः॥ प्रणम्य सम्यगज्ञानतमस्तमोपहं महः। कुरुते मथुरानाथः शुद्धिरत्नाकरं कृती। पूर्व्वाचार्य्यकृते ज्योतिर्ग्रन्थसन्दर्भसम्पुटः। हृत्यसन्दर्भदीपोऽयं दृश्यतामस्य कौतुकं। वेदानां ज्योतिषश्चक्षुश्चक्षुष्मन्तो हि तद्विदः। येषामादेशतोऽन्येपि भवन्त्यन्धा इवान्यथा। इष्टतुसंहितायां। ज्ञात्वा सम्यक्तमरं शास्त्रं द्विजः स्यात् पंक्तिपावनः सम्यग्लोके प्रतिष्ठाञ्च लभते दैवचिन्तकः। अविदित्वैव यः शास्त्रं वदान् (?) प्रवर्त्तयेत्। स पंक्तिदूषकः पापो ज्ञेयोनक्षत्रसूचकः॥ पद्यं। यत्कालभेदमाश्रित्य शुद्ध्यशुद्ध्यादिनिर्णयः। तदादौ व्यवहारार्थं कालभेदो निरूप्यते। कालविद्भिर्द्विधा कालः स्थूलसूक्ष्मतयोच्यते। स्थूलः प्राणादिकस्तत्र सूक्ष्मस्त्रुट्यादिकोऽपरः।

End. अश्विन्यादीनि भान्यत्र समुद्रे द्विद्विभोक्रमात्। तीरे चैकं पर्व्वते द्वे कार्य्येकैकभं लिखेत्। इत्येवं विषुवच्चक्रं मेषसंक्रान्तिभात्फलं। अतिवृष्टिः समुद्रे स्यादनावृष्टिस्तु पर्व्वते। कच्चेषु मध्यमा वृष्टिस्तीरभेषु च अत्र च। समुद्रे शिवमेध्यादि विशाखानिलवैष्णवं॥ अभिजिच्चाप तीरेषु कृत्तिकादित्यपि चभं। चित्रमैत्रं तथा वैश्वं द्रविणञ्च तथान्तिमं। कच्चेषु सद्भाग्येन्द्रशभान्यन्यानि पर्व्वते। इत्यव्दफलं॥ ०।

Colophon. इति शुद्धिरत्नाकरः श्रीमथुरानाथचक्रवर्त्तिनिर्म्मितः समाप्तः॥

विवरणम्। मथुरानाथचक्रवर्त्तिविरचितः शुद्धिरत्नाकरो नाम शुद्धिविषयको निबन्धः।

---

No 383. शुद्धिकारिका। Suddhikáriká Substance, country-made yellow paper (except the first folium, which is foolscap and of green colour), 18×4 inches. Folia, 11. Lines, 8-10 in a page. Character, Bengali. Date, 1266 Bengal era. Appearance, fresh. Verse. Generally correct. Complete.

Another copy of the work noticed in No. 370.

End. एकादश्यान्तु छायायां मदा श्राद्धं समाचरेत्। मवाथकरणे श्राद्धे श्रमावस्यां तिथौ चरेत्। किन्तु तत्र यदा प्रेतश्राद्धन्तु न हतं तदा मासिकादिदिने कार्य्यं नैकादश्याद्यपेक्षया ॥ * ॥

Colophon. इति शुद्धिकारिका समाप्ता ॥ अथ त्रिपुष्करयोगः ॥ पुनर्व्वसूत्तराषाढ़ा हत्तिकोत्तरफल्गुनी पूर्व्वभाद्रं विशाखा च रविभौमशनैश्चराः। द्वितीया सप्तमी चैव द्वादशीतिथिरेव च। एतेषामेकदा योगे भवतीति त्रिपुष्करः। जाते तु जारजायोगोऽस्मिते भवति पुष्करः। त्रिगुणफलदोषदो नष्टे हृते मृते तथा॥ प्रथमे मासि वर्षे वा कुटुम्बमपि पीड़येत्। देवोपि यदि वा रक्षेत्तस्य पुत्रोन जीवति। अतस्तद्दोषशान्त्यर्थं होमयेदयुतं बुधः। अग्न्त्यायेत् सुवर्णादिदानं कुर्य्याद् यथाविधिः ॥ लिखितमिदं श्रीरमानाथदेवशर्म्मणः ॥ * ॥ पुस्तकश्च श्रीवनमालिदेवशर्म्मणः ॥ सन १११६-शाल ॥ ० ॥

विवरणम्। शुद्धिकारिका नाम कारिकात्मकः शुद्धिविषयकोऽयं निबन्धः।

---

No. 384 दुर्गभञ्जनम्। Durgabhanjanam. Substance, country-made yellow and red paper, 24×4 inches. Folia, 29, but without page marks. Lines, 5–8 in a page, with a blank space of about half an inch square in the middle Character, Bengali. Date, ? Appearance, fresh. Prose Generally correct Incomplete.

A work on the solution of difficult points in religious matters under the name of Durgabhanjana by Chandraśekhara.

Beginning ॐ नमोगणेशाय ॥ सदानन्दमयीं स्मृत्वा चन्द्रशेखरशर्म्मणा। संकल्पस्मृतिदुर्गाणां भञ्जनं क्रियतेऽधुना ॥ अथ संकल्पदुर्गभञ्जनं ॥ काम्यकर्म्मणि सकल्पं (?) [ विना ] फलाल्पत्व [ इति (?) ] स्मृतेः सम्पूर्णफलकामेन सङ्कल्पः कार्य्यः तथाच भविष्यपुराणं। सकल्पेन विना राजन् यत् किञ्चित् कुरुते नरः। फलं चाल्पाल्पकं तस्य धर्म्मस्याऽर्द्धक्षयो भवेत्। यत्किञ्चित् यद्यदित्यर्थः. अल्पाल्पकमिति वीप्सायुतेः। फलं तत्तत्कर्म्मजन्यं शास्त्रबोधितं धनपुत्रधर्म्मादि। अल्पाल्पकं स्वल्पस्वरूपं स्वल्पत्वलाभस्तु अल्पार्थककप्रत्ययात् न चाल्पाल्पकमिति न वीप्सा अपि तु अल्पादप्यल्पमत्यल्पमित्यर्थः इति वाच्यं क-प्रत्ययस्य वैयर्थ्यापत्तेः। केचित्तु अल्पं पादोनं तस्मादल्प अर्द्धमित्याहु. तदसत् अल्पपदस्य पादोनमात्रवाचित्वे मानाभावात्।

End नास्ति ।

Colophon. नास्ति ।

विवरणम् । दुर्गभञ्जनं नाम स्मृतिशास्त्रीयविषमस्थलस्पष्टीकरणरूपोऽयं निबन्धः श्रीचन्द्रशेखरविरचितः ।

---

No 385. सर्व्वदेवहोमपद्धतिः । Sarvadevahoma paddhatih. Substance, country-made white paper, 12×4 inches. Folia, 82. Lines, 5-8 in a page. Extent, 1,450 ślokas. Character, Nāgara. Date, 1689 Samvat. Appearance, old, slightly worm-eaten, and having red marks throughout, indicating separation of words, &c. Prose. Generally *correct. Complete.*

A Vedic manual on offering clarified butter to the gods by the Hotṛi priest, alluded to in the Saṅhitá portion of the Vedas. The manual is otherwise styled Hautra. Anonymous.

Beginning. श्रीगणेशाय नमः । हस्तोऽग्नि हौत्रं करिष्यामि । अध्वर्य्यो देवता आवर्त्ततां । नामानुपूर्व्व्याग्नुचैरुपांशुतां च यजमानस्य प्रवयनवचनाभिधानि च । आचम्य तीर्थदेशं गत्वा वेदिश्रोण्या दक्षिणां पार्श्वं समाक्रिथाय प्रपदेन वर्हिराक्रम्य प्राङ्मुखस्तिष्ठन् । नमः प्रवक्त्रे नम उपदंष्ट्रे नमोऽनुख्यात्रे क इदमनुवक्ष्यति स इदमनुवक्ष्यतिपत्नोवीरं रक्षमांतु यौष पृथिवी चाद्य रात्रिश्चापश्चौषधयश्च वाक् । ममस्थितयज्ञः माधुच्छंदामि प्रपद्येदमेव मां अमुकशर्म्माणं होतारं भूते भविष्यति जाते जनिष्यमाण आमजान्य यार्थ वाचो अर्गातिं वद ।

End. कुक्षवदं । कुक्षदेवानां । जरमे स्वरस मे यज्ञोपपत्ते नमश्च । यत्ते नूनं तस्मै त उपयजेतिरिक्तं तस्मै ते नमः । हृदयशूलोदात्तनं । इन्द्रभि योष्मान् द्वेष्टि यंच वयं द्विष्मः । तस्योपरिष्टाद्य उपस्पृशं ति (ति?) । द्वीपे राज्ञोवरुणस्य ग्रहोमितोद्विरण्यं य (च?) ममोस्तत्रमोराजा आस्व इह मुंच नु । धाम्नी धाम्नोराजं नितोवरुणं मुंच । मयि वापोमौषधीः द्विर्भीरस्तोविश्वस्य वा भूम्ने यौवरुणोमुंच । सुमित्रिया आप ओषधयः संतिति च ।

Colophon. इति श्रीहौत्रं समाप्तः ( समाप्तं ) । संवत् १६८९ वर्षे भाद्रपदमासे शुद्धपक्षे प्रतिपदा सोमवासरे लिषितं ( लिखितं?) यादृशं पुस्तकं दृष्टा (दृष्टं?) तादृशं लिखितं मया । यदि शुद्धमशुद्धं वा मम दोषोन दीयते ।

१॥ शुभमस्तु। कल्याणमस्तु॥ ॥ ॥ ग्रंथसंख्या १४५०॥ द्विवेदीजीवन् रामसूनोरात्मरामस्येदं पुस्तकं होत्रमाग्निष्टोमस्य शुभम्॥

विवरणम्। अग्निष्टोमस्य होतृकर्मविषयकोऽयं निबन्धः वैदिकग्रन्थेष्वेवास्यान्तर्भाव उचितः।

---

No. 386. सावित्रीचतुर्दशीव्रतकथा। Sávitrichaturdaśívratakathá. Substance, country-made paper, 16×2½ inches. Folia, 6. Lines, 7–10 in a page. Character, Bengali. Date, ? Appearance, very old. Prose and verse. Correct. Complete.

A manual on the religious observance called Sávitrívrata, performed on the dark fourteenth lunar day of the month of Jyaishtha, together with the story of Sávitrí taken from the Vishnudharmottara.

Beginning. अथ सावित्रीचतुर्दशी। पूर्व्वदिने संयमं विधाय परदिने कृतनित्यक्रियो यजमानः स्वस्तिवाचनादिकं कृत्वा सूर्य्यः सोम इत्यादि पठित्वा सङ्कल्पं कुर्य्यात्। विष्णुर्नमोऽद्य ज्यैष्ठे मासि कृष्णपक्षे चतुर्दश्यां तिथावारभ्य अमुकगोत्रा अमुकी देवी नित्यसौभाग्याऽवैधव्यचिरजीविपुत्रपौत्राद्यविच्छिन्नसन्ततिपरमैश्वर्य्यप्राप्तिकामा चतुर्दशवर्षपर्य्यन्तं सावित्रीव्रतमहं करिष्ये इति सङ्कल्प्य सूक्तं पठेत्। ततोऽष्टदलपद्मं निर्म्माय तदुपरि घटं संस्थाप्य तदुपरि सत्यवत्सावित्रीं संस्थाप्य ततः सामान्यार्घ्यभूतशुद्ध्यन्तं विधाय गणेशादीन् पूजयेत्। ततः सत्यवन्तं पाद्यादिभिः संपूज्य प्रणमेत्। अधियोगो यथा देव सावित्र्या सहितस्तव। अधियोगस्तथा भर्त्ता मम जन्मनि जन्मनि॥ सृष्टा चेदं जगत्सर्व्वं धरित्स्थावरजङ्गमं। सत्यव्रतधरो देव नमस्ते देवरूपिणे॥

End. अथ तैः सर्व्वतो विप्रैः पृष्टस्त्वं केन हेतुना। दिवसे न समायातः पितरौ तव दुःखितौ। ततः स कथयामास शिरःपीड़ादिकं तथा। ततस्ते ब्राह्मणश्रेष्ठाः सावित्रीमिदमब्रुवन्। कथयस्वाद्य सावित्रि वृत्तान्तो यो वनेऽभवत्। ततः सा कथयामास यमसन्दर्शनादिकं। चक्षुर्लाभञ्च राज्यञ्च द्वौ वरौ श्वशुरस्य च। पितुः पुत्रस्य च शतं पुत्राणाञ्चात्मनः शतं। चतुर्वर्षशतायुश्च भर्त्तुः प्राप्तं तथा यमात्। तत् श्रुत्वा परमप्रीता विप्रास्ते स्वगृहं ययुः। सत्यवानपि सन्तुष्टः पितृभ्यां सह भार्य्यया। अथ रात्रौ व्यतीतायां सर्व्वे ब्राह्मणपुङ्गवाः। द्युमत्सेनमुपागम्य कथामकथयन् शुभां। शाल्वदेशाद्यथामात्या द्युमत्सेनं महीपतिं। आगत्योचुर्महाराज स्वाचरयेन

हतो रिपुः । तव पुत्रेण सत्येन वयमभ्यागता इह । चक्षुर्वा सचक्षुर्वा त्वं राजा भव भूपते । ततस्तैरभ्यनुज्ञातो ब्राह्मणैः स महीपतिः । तैरमात्यैः परिवृतो महादेव्याथ सैव्यया । पुत्रेण च तथा वध्वा सावित्र्या शीलयुक्तया । ययौ स नगरं राजन् सर्व्वसंपूर्णमानसः । तत्र गत्वा द्युमत्सेनः सत्यवन्तं प्रियं सुतं । यौवराज्ये महाराजः स्थापयामास धर्म्मतः । सावित्र्याश्चापि कालेपि जज्ञे पुत्रशत परं । मालव्याश्च शतं जातं सोदर्य्याणां महात्मना । एवमात्मपितामाता श्वश्रूश्च श्वशुरः पतिः भर्त्तुः कुलञ्च सावित्र्या सर्व्वं कृच्छ्रात् समुद्धृतं । एवमेषा च पाञ्चाली शीलाचारसमन्विता तारयिष्यति वा सर्व्वान् सावित्रीव वराङ्गना । एवमाश्वासितस्तेन मार्कण्डेयेन धीमता । युधिष्ठिरः प्रीतमनाः काम्यके निवसद्वने । यइदं शृणुयाद्भक्त्या सावित्र्याख्यानमुत्तमं । स सुखी सर्व्वसिद्धार्थो न दुःखं प्राप्नुयान्नरः । शृण्वन्ति याः स्त्रियश्चैव सावित्रीचरितं शुभं अवैधव्यञ्च सौभाग्यं लभते सन्ततिञ्च ताः ॥ ० ॥

**Colophon.** इति विष्णुधर्म्मोत्तरे सावित्रीव्रतकथा समाप्ता ॥ ० ॥

विवरणम् । सावित्रीव्रतविषयकोऽयं निबन्धः । अत्र विष्णुधर्म्मोत्तरसंगृहीता तत्कथा च वर्णते ।

---

**No. 387.** सामगव्रतप्रतिष्ठा । Sámagavrata-pratishṭhá Substance, country-made coloured paper, 12 × 3 inches. Folia, 13. Lines, 6–7 in a page. Character, Bengali. Date, ? Appearance, nearly fresh Prose Generally correct. Complete.

A manual on the religious observances of the followers of the Samaveda. From the colophon, it appears to be a part of the Vrata-pratishṭhátattwa of Raghunandana.

**Beginning.** ॐ नमः कृष्णाय ॥ अथानन्तादिव्रतप्रतिष्ठा ॥ ततः सामगप्रयोग. । तत्र पुरुषयेत् व्रतप्रतिष्ठाना तदा मातृपूजावसोर्धारायुष्यजपाभ्युदयिकश्राद्धानि कृत्वा व्रतप्रतिष्ठां कुर्य्यात् । स्त्री चेत् प्रतिष्ठात्री तद्दैनानि विद्वायेति विशेषः ।

**End.** एवं व्रतान्तरप्रतिष्ठायामपि । दक्षिणावाक्येऽनन्तव्रतकर्म्मणः प्रतिष्ठार्थमित्यादिविशेषः ॥ ० ॥

**Colophon.** इति हरिहरभट्टाचार्य्यात्मजश्रीरघुनन्दनभट्टाचार्य्यविरचितं सामगव्रत-

प्रतिष्ठातत्त्वं समाप्तं ॥ ० ॥ ॐ नमो भगवते वासुदेवाय ॥ ० ॥ एतत्कर्म्मणा प्रीयतां भगवान् विष्णुरित्यनं कर्म्म कृत्वा तत्तद्व्रतार्द्धद्रव्यमुत्सृजेत्। यथा ओमद्येत्यादि अमुकव्रतप्रतिष्ठाकर्म्मणि अमुकद्रव्यमर्चितं विष्णवेऽहं ददे। ततो द्वादशदानानि दद्यात् एवं द्वादशभोज्यानि ब्राह्मणाय दद्यात्। ततः सोपकरणडक्तकमुत्सृजेत्। यथा अद्येत्यादि अमुकव्रतप्रतिष्ठार्थमेतत् सोपकरणडक्तकं गन्धाद्यर्चितं श्रीविष्णवे तुभ्यमहं सम्प्रददे। एवं गुरुं लक्ष्मीञ्च संपूज्य डक्तकमुत्सृज्य दद्यात्। सर्व्वव व्रते डक्तकचतुष्टयं। अमावास्याव्रते तु डक्तकदानानन्तरं षट्प्रदीपोत्सर्गः। यथा अद्येत्यादि यमद्वारावस्थितान्धकारतरणकामा एतान् लौहयष्टिताम्राधाररजतशलाकायुतान् सवस्त्रान् विष्णवेऽहं सम्प्रददे। ततो व्रतप्रतिष्ठादक्षिणा। अच्छिद्रावधारणं विष्णुस्मरणञ्च कुर्य्यात्। एवं विधिः सर्व्वत्र प्रतिष्ठायां बोध्यः ॥ ० ॥

विवरणम्। सामवेदीयकर्म्मव्रतप्रतिष्ठाविषयकोऽयं निबन्धः स्मार्त्तश्रीरघुनन्दनकृतव्रतप्रतिष्ठातत्त्वान्तर्गतः।

---

No 388. व्रतप्रतिष्ठापद्धतिः। Vratapratishthá Paddhatih Substance, *foolscap paper, 14×5 inches Folia, 18. Lines, 5-9 in a page* Character, Bengali Date, ? Appearance, nearly fresh. Prose. Generally correct Complete.

A guide to the Pratishthá or the concluding ceremony in religious observances, as performed by the followers of the Sámaveda. Anonymous.

Beginning. ॐ गणेशाय नमः ॥ अथ व्रतप्रतिष्ठापद्धतिः ॥ तत्र शुद्धसमये मलमासादिदोषरहिते। पूर्व्वदिने उपोष्य प्रातः कृताह्निकोव्रती पूर्व्ववत् वर्षनिष्पादितव्रतं समाप्य प्रतिष्ठासंकल्पं कुर्य्यात्। पवित्रपाणिराचान्तः प्राङ्मुख उदङ्मुखो वा दर्भासने चोपविश्य ब्राह्मणान् गन्धादिना परितोष्य अस्मिन् व्रतप्रतिष्ठाकर्म्मणि ॐ पुण्याहं भवन्तोब्रुवन्तु ॐ पुण्याहं इति त्रिर्व्वदेयुः। एवं स्वस्ति ऋद्धिञ्च वाचयित्वा ॐ स्वस्ति न इन्द्रोवृद्धश्रवा इत्यष्टताग्निविच्य ॐ तद्विष्णोरिति विष्णुं स्मृत्वा नारायणं गुरुं पञ्चांश्च संपूज्य नमस्कृत्य ॐ सूर्य्य सोम इति पठित्वा उदङ्मुखः ॐ तत्सदित्युच्चार्य्य अद्येत्यादि अमुकगोत्रः श्रीअमुकदेवशर्म्मा तत्तद्व्रतोक्तफलकामो विष्णुप्रीतिकामो वा इयद्वर्षनिष्पादितामुकव्रतप्रतिष्ठाकर्म्माहं

करिष्ये । इति संकल्प्य । ॐ देवो वो इति पठेत् सर्व्वत्र वैदिकमन्त्रपाठे स्त्रीशूद्रयोरनधिकारः । तत्र ब्राह्मणेन मन्त्राः पठनीयाः । स्त्रीकार्य्ये अमुकगोत्रा अमुकी देवीति । परार्थे करिष्यामीति विशेषः । मासोल्लेखश्च निषिद्धत्वामावास्यादिव्रते गौणचान्द्रेण । तद्भिन्ने दधिसंक्रान्तिप्रभृतिव्रते मुख्यचान्द्रेण मासोल्लेखः । तिथावित्यनन्तरं अमुकसंक्रान्त्यादिनिमित्तोल्लेखः ।

End. ततोऽच्छिद्रावधारणं कृत्वा शान्तिं कुर्य्यात् । व्रतेष्टदेवतादक्षिणकं स्वामिने दद्यात् । देवदत्तानि द्रव्याणि ब्राह्मणाय दद्यात् । ब्राह्मणान् भोजयित्वा स्वयं भुञ्जीत ॥ ० ॥ अयं सर्व्वत्र व्रतप्रतिष्ठाविधिः । दुर्गाव्रते तु तत्तद्व्रतोक्तमूलमन्त्रमुच्चार्य्य सर्व्वद्रव्यमुत्सृजेत् ॥ यस्मिन् व्रते यद्द्रव्यप्राधान्यं तद्द्रव्यमेव देयं ॥ सर्व्वत्र दक्षकचतुष्टयञ्च दद्यात् ॥ अमावास्याव्रते तु विशेषः ॥ दक्षकदानानन्तरं षट् प्रदीपानुत्सृजेत् । सोपस्कृतान् प्रदीपान् संमुखे निधाय दले गन्धपुष्पे ॐ सोपस्कृतप्रदीपेभ्यो नम इत्यभ्यर्च्य कुशेत्यादि यमद्वारावस्थितान्धकारतरणकामनया एतान् सोपस्कृतान् प्रदीपान् अर्च्चितान् सवस्त्रान् लौहयष्ट्याधाररजतशलाकायुतान् अग्निदैवताकान् श्रीविष्णुदैवतं संप्रददे । इति दत्त्वा दक्षिणां विष्णवे दद्यात् ॥ ० ॥ पद्ममौव्रते तु स्वर्णशृङ्गकांस्यखुरयुतां गां दद्यादिति । पिपीतकीव्रते षोडश घटान् स स्वर्णघृततिलमोदकघोरपिष्टकयुतषोड़शभोज्यानि ० ॥ जलसंक्रान्त्यां द्वादश जलपूर्णघटान् तावकुम्भञ्च ॥ ० ॥

Colophon. इति सामवेदिनां व्रतप्रतिष्ठाविधिः समाप्तः ॥ ० ॥ श्रीगुरवे नमः । ० ॥ श्रीरघुनाथाय नमः ॥ ० ॥ श्रीदुर्गायै नमः ॥ ० ॥ श्रीगोपालाय नमः ॥

विवरणम् । सामवेदीयव्रतप्रतिष्ठाविधिविषयकः कश्चिदपरो निबन्धः ।

---

No 389. सूतिकाषष्ठीपूजा । Sútikáshashthípújá. Substance, country-made colourless paper, 13×3 inches. Folia, 5. Lines, 6–7 in a page. Character, Bengali. Date, ? Appearance, somewhat old. Prose. Generally correct. Complete.

A work on the worship of the goddess Shashṭhí performed in the evening of the sixth day of the birth of a child. The codex was written by Pandita Jaganmohana Tarkálankára, the late librarian of the Sanskrit College library, and it formerly belonged to the late Professor Jayanáráyaṇa Tarkapanchánana.

Beginning. ॐ नमोगणेशाय ॥ अथ सूतिकाषष्ठीपूजाविधिर्लिख्यते ॥ तत्र षष्ठेऽहनि सायंसमये सूतिकाघरं कृत्वा संकल्पं कुर्य्यात् ॥ ॐ अद्येत्यादि अमुकगोत्रः श्रीअमुकदेवशर्म्मा ममाभिनवजातकुमारस्य जन्मदिनात् षष्ठेऽहनि सर्व्वारिष्टप्रशमनपूर्व्वकदीर्घायुष्ट्वकामोवह्निर्व्वलिदानानन्तरं गणेशादिपञ्चदेवतासूतिकादेवतानां पूजनमहं करिष्ये ॥ इति सङ्कल्पं कुर्य्यात् ॥ ततः सूक्तं पठेत् यज्जाग्रत इति यजुषां देवीव इति सामगानां पठित्वा द्वारसमीपे सप्तमण्डलिकां कृत्वा तत्र घटपत्रे चेत्रपालानारभ्य गन्धादिना संपूज्य माषभक्तवलिं दद्यात् ॥ तत्र मन्त्रः । ॐ चेत्रपाल नमस्तेस्तु सर्व्वशान्तिफलप्रदः ॥ वालस्य [ स्य (?) ] विघ्ननाशाय प्रतिगृह्णात्विमं बलिं ॥ एष माषभक्तवलिः ॐ चेत्रपालेभ्यो नमः ॥

End तत्र एते श्रीरपूरितघटाः ॐ षष्ठीदेव्यै नमः एवमेव दीपः यां षष्ठीदेव्यै नमः ॥ ततो दक्षिणां दत्त्वाऽच्छिद्रमवधार्य्य कर्णरिकागोरोचनादि गृहे संस्थाप्य द्वारि च्छागं जागरयेत् ॥ द्वादशनामानि यथा । केशव(१) नारायण (२) माधव (३) गोविन्द (४) विष्णु (५) मधुसूदन (६) त्रिविक्रम (७) वामन (८) हृषीकेश (९) श्रीधर (१०) पद्मनाभ (११) दामोदर (१२) ॥ ० ॥

Colophon इति सूतिकाषष्ठीपूजा समाप्ता ॥ ० ॥ श्रीजगन्मोहनशर्म्मणः स्वाक्षरमिदं पुस्तकञ्च ॥ ० ॥

विवरणम् । श्रीसूतिकाषष्ठीपूजाविषयकोऽयं निबन्धः ।

---

No 390 सूरसंक्रान्तिदीपिका। Súrasañkráutidípiká. Substance, country-made yellow and red paper, 18×4 inches Folia, 18 Lines, 3-6 in a page Character, Bengali. Date, Appearance, not old, but torn and writing effaced in parts. Prose Generally correct. Complete.

A work treating of Sañkránti or the movement of the sun from one Zodiacal point to the next, under the name of Sañkránti Dípiká by the late Professor Jayanárayana Tarkapanchánana. The codex appears to have been lent by him to the Sanskrit College Library.

Beginning नमोगणेशाय ॥ नत्वा देवीपदद्वन्द्वं सूरसंक्रमदीपिकां । कुरुते वैदिकः श्रीमान् जयनारायणोद्विजः ॥ वन्द्यश्रीरघुनन्दनमाद्भिकमर्त्तिर्मानोर्दिने-

संक्रमे त्वृषं तद्दिनमेव पुण्यमुदितं पश्वाद्ध संक्रान्तिषु । या परः कर्क-
टादिके निगदिताश्चिंशनमुखा नाडिकास्ताः स्युः पुण्यतरा दिने दिनमध्ये-
मेंषादिसंक्रान्तिषु ॥ १ ॥ प्राक् विंशतृपरपूर्व्वतः षड्दमीमानार्द्धमूर्द्धे परं
मानार्द्धे परपूर्व्वगाश्वनमिता मानार्द्धमूर्द्धं तथा । ऊर्द्धे विंशतिराद्यमास्तु
परगा राज्ञाह्निता उभरं मानार्द्धं पुनस्तदेव षपमाः प्रागर्द्धदि-
नार्द्धे परं ॥

End. निशीथजातास्वयनान्यसंक्रान्तिषु तिथिभेदे पूर्व्वापरदिनपरपूर्व्वार्द्धयो-
स्तिथ्यभेदे पूर्व्वदिनशेषार्द्धमात्रस्य यत्पुण्यत्वमुक्तं स्मार्त्तैस्तत् सम्वत्सर-
कौमुदीकृत्यतत्त्वार्णवकृत्यचिन्तामणिकृत्यरत्नाकरादिसम्मतं निशीथजाते
दक्षिणायने तिथिभेदाभेदयोः पूर्व्वदिनोपरार्द्धमात्रस्योत्तरायणे परदिन-
पूर्व्वार्द्धमात्रस्य पुण्यत्वं यत् स्मार्त्तैरुक्तं तदपि कालमाधवीयनिर्णयामृत-
मदनपारिजातकालनिर्णयसारकालनिर्णयदीपिका तद्विवरणसमयमयू-
खमुक्तसंचिन्तामणिमुक्तसंदीपकमुक्तसंमार्त्तण्डमुक्तसंगणपतिनिर्णयसिन्धुजय-
सिंहकल्पद्रुमप्रभृतिसम्मतं ॥ ० ॥ सन्ध्यासंक्रमे दिनदण्डे चेद्दिनसंक्रमव्य-
वस्था रात्रिदण्डे चेद्रात्रिसंक्रमव्यवस्थादरणीयेति स्मार्त्तैर्यदुक्तं तदपि
कृत्यरत्नाकरकालनिर्णयसमयप्रकाशकल्पतरुप्रभृतिबहुनिबन्धसम्मतमित्यलं
पल्लवितेन ॥ प्रादु + + + रण्डुङ्गिरपं विवेकविकलैः सिन्धोः समा-
स्रोडितादुद्धारत्वं विमनीतु नाम मदनो मुग्धात्मनां सन्निधौ । सन्धनां
कपटेन मोहजननं रूपं स्वयं माधवः स्मार्त्तैर्भ स्वितदैमभूधरममीनात्तं
वलादाषितं ॥ १ ॥

Colophon इति श्रीगमर्थमेघसंस्थापितकलिकातानगरान्तर्गतसंस्कृतपाठशालास्थन्या-
यशास्त्राध्यापकश्रीयुक्तजयनारायणतर्कपञ्चाननभट्टाचार्य्यविरचिता स्मर-
संक्रान्तिदीपिका समाप्ता ॥ ० ॥ ० ॥ इति ॥ ० ॥

विवरणम् । अध्यापकश्रीजयनारायणतर्कपञ्चाननविरचिता स्मरसंक्रान्तिदीपिका नाम
संक्रान्तितत्पुण्यकालनिर्णयविषयकोऽयं निबन्धः ।

---

No 391. स्मरसंक्रान्तिदीपिका । Súrasaṅkrántidípiká Substance, country-made yellow and red paper, 10×6 inches. Folia, 25 Lines, 2–9 in a page. Character, Nágara. Date, ? Appearance, not old, but torn, worm-eaten, and writing effaced in parts. Prose. Not correct. Complete.

Another copy of the same work.

विवरणमूक्तपूर्व्वम् ।

---

No. 392. होलिकाकथा । Holikákathá. Substance, country-made white paper, 12 × 5 inches Folia, 7. Lines, 5–7 in a page Character, Nágara. Date, Samvat 1893. Appearance, fresh. Verse. Generally correct. Complete.

Extracts from the Bhavishyottara Purána on the Holi festival.

Beginning. श्रीगणेशाय नमः ॥ श्रीशिवाय नमः ॥ श्रीपार्व्वत्यै नमः ॥ नारायणं नमस्कृत्य नरं चैव नरोत्तमं। देवीं सरस्वतीं व्यासं ततोजयमुदीरयेत् ॥ १ ॥ युधिष्ठिर उवाच ॥ किमर्थं फाल्गुनस्यांते पूर्णिमायां जनार्दन ॥ उत्साहः क्रियते लोके ग्रामे ग्रामे पुरे पुरे ॥ २ ॥ किमर्थं शिशवस्तस्यां गेहे गेहे विवादिनः ॥ होलिका दीप्यते कस्मात् फाल्गुनी च किमुच्यते ॥ ३ ॥ अडाडेति हि का साचाच्छीतोष्णेति किमुच्यते। कोवास्यां पूज्यते देवः केनेयमवतारिता ॥ ४ ॥ किमस्यां क्रियते कृष्ण चैतद्विस्तरतोवद ॥ श्रीकृष्ण उवाच ॥ आसीत्कृतयुगे पार्थ रघुर्नाम नराधिपः ॥ ५ ॥ शूरः सर्व्वगुणोपेतः प्रियवादी बहुश्रुतः ॥ सामात्यः पृथिवीं कृत्स्नां वशीकृत-नराधिपः ॥ ६ ॥ धर्म्मतः पालयामास प्रजाः पुत्रानिवौरसान् ॥ न दुर्भिक्षं न च व्याधिर्नाकालमरणं नृणाम् ॥ ७ ॥ नाधिशोकस्तथा चौरा तस्मिन् शासति भूपतौ ॥ तस्यैव शासतो राज्यं चनधर्म्मरतस्य वै ॥ ८ ॥ पौराः सर्व्वे समागत्य चारित्राद्विस्मभुवन् ॥ पौरजना ऊचुः ॥ नव राज्ये महाराज प्रजाः सोपद्रवा युताः ॥ ९ ॥ आयाता बालकान् भक्ष्या ढुंढानामेति राक्षसी दिवारात्रौ समागत्य बालान् पीडयते-बलात् ॥ १० ॥ लंबोष्ठी गर्त्तनयना पिंगरोमोर्द्ध्वमूर्द्धजा ॥ कराला विकरा-लांगी स्थूलपादासितप्रभा ॥ ११ ॥ काचिच्छुताग्निसजरा बालान् हृष्टाय धावति ॥

End श्रीकृष्ण उवाच ॥ गते सभार्य्ये शिशपश्चदश्यां प्रात्तर्वसंते समुपस्थिते च ॥ संप्राप्य ते चूतकुसुमपुष्पं सचंदनेनुच रसेन संयुतं ॥ ८५ ॥ पुनःपौन समायुक्तं मसुखं तिष्ठ सर्व्वदा ॥ पूर्णिमा फाल्गुनस्यास्ते एवं व्रतविधिः कृतः ॥ ८६ ॥ पूर्णिमा जयदा नित्या सर्व्वविघ्नोपनाशिनी ॥ एतत्ते कथिता राजन् तिथीनामुत्तमा तिथिः ॥ ८७ ॥ पूर्णिमा प्रतिपत्तिथ्यो कथा पौराणिकीं शुभाम् ॥ व्यासं संपूज्य विधिवद्दत्त्वैजितभोजनैः ॥

८८ ॥ सुगंधद्रव्यैरथाभिश्च चंदनैः श्वेतपुष्पकैः ॥ रात्रौ जागरणं कुर्य्यात्कृत्य गीतोत्सवं बहु ॥ ८९ ॥

Colophon — इति श्रीभविष्योत्तरपुराणे होलिकोत्सवकथा संपूर्णा ॥ लिखितं जयकृष्णमिश्रेण प्रयागनगरे वरे ॥ रामनंदाष्टभू १८९३ वर्षे वैक्रमे फाल्गुने सिते ॥ शिवरात्रिदिने सूर्य्योऽलिखज्जयकृष्णमिश्रकैः । १ । श्रीरामचंद्राय नमः ॥

विवरणम् । भविष्योत्तरपुराणसंस्थेयं होलिकोत्सवकथा तदुत्सवक्रमविषयकायं निबन्ध ।

---

*No. 393.* होमविधिः । *Hómavidhiḥ.* Substance, country-made white paper, 12×4 inches. Folia, 19. Lines, 7–11 in a page. Character, Nágara. Date, ? Appearance, very old Prose. Not correct Complete (without colophon)

A manual on offering clarified butter, &c., into the fire, to avert the evil influence of planets, &c., under the name of *Hómavidhi.* Anonymous.

Beginning. — श्रीगणेशाय नम. ॥ नमः शारदाय ॥ अथ होमविधिः ॥ सावित्र्यादीन् ग्रहान् सर्व्वान् प्रणम्य ऋषिसत्तमः ॥ अप्रच्छदिदं ब्रूहि वशिष्ठमुनिसत्तम ॥ १ ॥ अहया प्रश्नमाचेव रामेण विनयेन तु ॥ वेदवेदाङ्गशास्त्रेषु कुशलस्त्व महामुने ॥ २ ॥ किमर्थं मे वनं जातं कस्माद्राज्यं विनश्यति । रामस्य वचनं श्रुत्वा वशिष्ठ व्याहृतास्विलं ॥ ३ ॥ सुरासुरास्तथा यक्षाः सर्व्वे वर्णा द्विजातयः ॥ खेचरैः प्रतिकूलैस्तु(?)लभंते विविधापदम् ॥ ४ ॥ ग्रहा राज्यं प्रयच्छन्ति ग्रहा राज्यं हरंन्ति च ॥ ग्रहैर्व्याप्तं सर्व्वं त्रैलोक्यं स चराचरम् ॥ ५ ॥ यत्ते राम वनं यातं वियोगः सीतया सह । वक्रेणैकेन वक्रोध तस्माद्दत्सर्वंगतः ॥ ६ ॥ यस्मिंते खेचरास्सर्व्वे वक्राक्रान्त धनंजयः (?) ॥ भवेद्दिष्टवियोगोवा प्रवासमरणं ध्रुवं ॥

End. — अभिषेकं कुर्य्यात् ॥ त्र्यायुषं यमदग्ने (जमदग्नेः?) कश्यपस्य त्र्यायुषं यद्देवेषु त्र्यायुषं तन्नोस्तु त्र्यायुषं ॥ हृदि भस्मना ललाटे ग्रीवायां दक्षिणांसे दक्षिणांसंधपाठः ॥ ॐ नमोगणपते परब्रह्माय मूषकवाहनाय समधिरूढाय लक्षितमुखाय दंष्ट्राकरालवदनाय नानागंधपरिमलशरीराय पिंग-

मणिमाणिक्यमुकुटकुंडलधारिणे एह्येहि भगवन् सर्व्वविघ्नविनाशकाय यज्ञभागं गृह्ण स्व (?) पूजां चैव नमोनमः ॥

**Colophon.** ( नास्ति ) ।

विवरणम् । होमविधिर्नाम ग्रहदोषशान्तिनिमित्तकहोमविधानविषयकोऽयं निबन्धः ।

---

**No. 394.** होमसिद्धान्तः । Hómasiddhántaḥ. Substance, country-made white paper, $12 \times 4\frac{1}{2}$ inches Folia, 1. Lines, 10–14 in a page. Character, Nágara. Date, ? Appearance, very old. Prose. Correct. Complete.

A manual treating of the Homa rite by Bhadra Deva or Rámakrishṇa Deva, son of A'padeva.

**Beginning.** श्रीगणेशाय नमः ॥ यजमानेनाशौचमध्येऽग्निहोत्रहोम उपासनहोमश्च कर्त्तव्यो न कर्त्तव्यो वेति संशयेनेति तावत् प्राप्तं ॥ कुतः दशाहं शावमाशौच सपिण्डेषु विधीयते ॥ जननेप्येवमेवं स्यान्निपुणं शुद्धिमिच्छता-मित्यादि मन्वादिस्मृति प्रामाण्यादशुचित्वाच्छुचिना कर्त्तव्यमित्यादिवचना-दशुचेरनधिकारात् ॥ अतएव सूतके कर्म्मणां त्यागः संध्यादीनां विधीयत इति संवर्त्तोक्तं सूतकेतु समुत्पन्ने स्मार्त्तं कर्म कथं भवेत् पिण्डं यज्ञं चरं होमम सगोत्रेण कारयेदिति कात्यायनोक्तं संगच्छते ॥ तस्मादाशौचिना यजमानेनाऽग्निहोत्रहोमोऽप्यग्निहोमश्च न कर्त्तव्य एवेति चेन्न ॥ वैतानौपासनाः कार्य्याः क्रियाश्च श्रुतिचोदनादिति याज्ञवल्क्योक्तेः ॥ वैतानास्त्रेताग्निसाध्या अग्निहोत्रदर्शपौर्णमासाद्याः क्रिया उच्यन्ते ॥ प्रतिदिनमुपास्यत इति उपासनो गृह्योग्निस्तत्र उपासनाः सायं प्रातर्होमक्रिया उच्यन्ते इति ताः वैतानौपासनावैदिक्यः क्रियाः कार्य्याः ॥ कथं वैदिकत्वमिति चेत् ॥ श्रुतिचोदनात् ॥ तथाहि यावज्जीवमग्निहोत्रं जुहुयादित्यादि श्रुतिभिरग्निहोत्रादीनां चोदना स्पष्टैव ॥ तथा अहरहः स्वाहा कुर्य्यादित्यादि श्रुत्यौपासनहोमोपि चोद्यते ॥ अत्र च श्रौतत्वविशेषणोपादानात् स्मार्त्तक्रियाणां दानादीनामननुष्ठानं गम्यते ॥

**End.** तस्मादाशौचमध्ये यजमानः स्वाम्नायस्य स्वयमग्निहोत्रहोमं कुर्य्यादौपासनहोम स्वयं कुर्य्यादन्येन वा कारयेदिति स्मृतिद्वैविध्याद्विकल्पः ॥ तस्मादाशौचिना यजमानेन स्वयमौपासनहोमे कृते नाग्नेर्लौकिकत्वमिति सिद्धं ॥ निर्णीतोऽयं शास्त्रार्थोमितासराद्यर्थसारपारिजातकौस्तुभादि-

नानानिबंधपर्य्यालोचनया रामकृष्णदेवेन विदुषां प्रमोदं संदोहं जनयतु ॥

Colophon. आपदेवसुतेनायं भट्टदेवेन धीमता। चकारि होमसिद्धान्तस्तेन तुष्यतु यज्ञभुक् ॥ ० ॥

विवरणम् । होमसिद्धान्तो नाम नित्यहोमोऽग्निचिना कर्त्तव्योनवेत्येतत्सिद्धान्तात्मकोनिबन्धविशेषः ।

---

No. 395. चन्दनधेनुदानप्रमाणम् । Chandanadhenudána-pramánam. Substance, country-made yellow paper, 18 x 4 inches Folia, 2. Lines, 9 in a page. Character, Bengali. Date, ? Appearance, not old. Prose. Correct. Complete.

A compilation consisting of authorities regarding the offering of Chandanadhenu, or a cow marked with sandal, on the occasion of the first S'ráddha ceremony of a woman dying before her husband and son, by Váchaspati Mísra.

Beginning. ॐ नमोगणेशाय ॥ नत्वा शिवं चन्दनचर्चिताया धेनोः प्रदाने सविधिं प्रमाणं । रत्नाकरादेर्लिखितं विलोक्य तनोति वाचस्पतिरप्रबुद्धिः ॥ अथ चन्दनधेनुदानविधिः ॥ तत्र रत्नाकरे देवलः । जीवत्भर्त्तरि तु या नारी पुत्रिणी म्रियते यदि । चन्दनालंकृतां धेनुमाचार्य्याय प्रदापयेत् । पति (पति) पुत्रवती नारी म्रियते याग्रतस्तयोः । इयं तथोत्सृष्टेत्पुत्रः पिता यावत्तु जीवति । तथा कर्म्मोपदेशिन्यां श्राद्धचर्च्चायां च चन्दनाङ्कितानि वचनानि यथा वृहस्पतिः । पतिपुत्रवती नारी म्रियते भर्त्तुरग्रतः । चन्दनेनाङ्कितां धेनुं तस्याः स्वर्गाय कल्पयेत् । तथा जातुकर्ण्यः । धेनुं चन्दनमालिप्य यो दद्यात्मातृहेतवे । यदि पापसहस्रैर्युक्ता तथापि स्वर्गमाप्नुयात् । तथा वशिष्ठः । न पुत्रस्य हयोत्सर्गो यावत्पितरि जीवति । चन्दनेनाङ्कितां धेनुमाचार्य्याय प्रदापयेत् ॥

End. तथोत्सर्गो इत्यस्य च वत्सतर्य्यामिति सम्य च । इयोत्सर्गविधानेन कर्त्तव्यं सर्व्वकर्म च । मामस्तोकेनेति मन्त्रेण दापयेच्छ्रौति च । धेनोश्च शक्तिमहयदेशेति विशूलाङ्कितम्त्या लिखेत् । वामभागे विशेषोऽयं दक्षे चक्रं समालिखेत् । तथोक्तं सर्व्वसिद्धान्ताचार्य्यैस्तु विधानवित् । ततो वै संलिखेच्चक्रं पद्माङ्कुशप्रमाणकं । शूलं चक्राङ्कुशं प्रोक्तं दक्षे वामे तथा विधिः । पुत्रस्त्रीमा मुखी (पूर्व्वामुखी ?) धेनुं यजमानोत्तरामुख । मस्तकादि

क्रमशैव प्रतिमन्त्रैः प्रपूजयेत् । ततोधेनुदेवताः पूजयेत् । तद्यथा शिरसि ॐ ब्रह्मणे नमः इत्यादिभिर्मन्त्रैरङ्गानि संपूज्य पठेन्मन्त्रं समाहितः । ॐ इन्द्रस्य च त्वमिन्द्राणी विष्णोर्लक्ष्मीच या स्मृता । चन्द्रस्य देवी या गौरी सा देवी वरदास्तु मे । ॐ या लक्ष्मीर्लोकपालानां । या च देवेष्ववस्थिता । धेनुरूपेण सा देवी मम पापं व्यपोहतु । ॐ देवस्त्वा याचेत्यादि । ॐ सर्व्वदेवमयीत्यादि । गृहीतार्घ्यञ्च पायस तत् स्वर्णेनालङ्कृतां । दीयते ब्राह्मणायैषा आचार्य्याय महात्मने । एवं विशिष्टां तां धेनुं दत्त्वा तर्पणमारभेत् । पुच्छं गृहीत्वा पित्रादीन् इषीतर्पविधानतः । ऐशान्यां चालयेत्किञ्चिदाचार्य्याय तु दक्षिणां । इदञ्च ततोदद्यादाचार्य्याय गुणान्वितं । पूजयेद्ब्राह्मणांश्चैव वस्त्रमाल्यादिभिस्ततः । कांस्यपात्रं वस्त्रयुग्मं सुवर्णञ्च विशेषतः । आचार्य्याय प्रदातव्यं ब्रह्मणे कनकं तथा । आगतान् पूजयेद्भक्त्या यथाशक्तिविधानतः । दीनानाथविशिष्टांश्च अन्नाद्यैः परितोषयेत् ॥ • ॥

Colophon. इति वाचस्पतिमिश्रकृतचन्दनधेनुदानप्रमाणं समाप्तं ॥

विवरणम् । वाचस्पतिमिश्रकृतचन्दनधेनुदानतत्प्रमाणविषयकोऽयं निबन्धः ।

---

No 396 महिम्नःस्तोत्रम् । Mahimnahstotram. Substance, foolscap paper, 14×4 inches Folia, 18. Lines, 2–9 in a page. Character, Bengali Date, ? Appearance, not old. Verse. Generally correct. Complete.

A hymn to the god Śiva known by the name of Mahimnahstotra from the initial word of the hymn "Mahimnaḥ," by Pushpadanta, one of the leaders of Śiva's attendants. It is a famous work and has been printed in the Bengali and Nágara character. The codex under notice has an explanatory gloss in the margin up to the 32nd verse. Anonymous.

Beginning of the gloss. ॐ नमः शिवाय ॥ पुरा केलि-पुष्पदन्तनामा गिरिशगणाधिपः पुष्पचयनार्थमुद्यानवाटिकामेकां प्रत्यहमायाति । अथोद्यानरक्षकेण विज्ञाय शिवनिर्म्माल्यं विक्षिप्त पुष्पदन्तस्तदज्ञानात्पद्भ्यां संस्पृश्य ततस्तदैव विनष्टगर्व्वोभगवन्तं परमकारुणिकं स्तुवन्नाह महिम्न इत्यादि । अस्यार्थः हे हर तव महिम्नः उत्कर्षस्य पारं निष्कर्षं कांष्ठावच्छिन्नं परं इय-

मापरिच्छेदनं अविदुषोऽज्ञानतोऽसमस्य स्तुतिर्यद्यसदृशी अनुचिता भवति तत् तदा ब्रह्मादीनां देवानामपि त्वन्महिम्नः पारमजानतां गिरस्त्वद्विषयेऽवसन्ना अपवादं प्राप्ता अयोग्या इत्यर्थः। ब्रह्मादिषु तथा उपपत्तिरस्त्वेवे ममापि न इत्याह अथेति अथ शब्द-सिद्धान्तोपक्रमे स्वमतिपरिणामावधि यावद्बुद्धिविभवं यथाज्ञानतया गृणन् स्तुवन् सर्व्वोको नानुयोज्य इत्यर्थः तर्हि मम स्तोत्रे ममापि परिकरः समारम्भोनिरपवादो निर्व्विरोध इत्यर्थः। तथाहि वाच्यं वक्तृयनिन्द्योरिति शासनात् अवाच्य अनिन्दनीय इति भावः। १।

Beginning of the text. ॐ नमः शिवाय। महिम्नः पारन्ते परमविदुषो यद्यसदृशी स्तुतिर्ब्रह्मादीनामपि तदवसन्नास्त्वयि गिरः। अथावाच्यः सर्व्वः स्वमतिपरिणामावधि गृणन् ममाप्येष स्तोत्रे हरनिरपवादः परिकरः। १।

End of the text. असितगिरिसमं स्यात् कज्जलं सिन्धुपात्रं सुरतरुवरशाखा लेखनीपत्रमुर्व्वी लिखति यदि गृहीत्वा शारदा सर्व्वकालं तदपि तव गुणानामीश पारं न याति। श्रीपुष्पदन्तमुखपङ्कजनिर्गतेन स्तोत्रेण किल्बिषहरेण हरप्रियेण। कण्ठस्थितेन पठितेन गृहस्थितेन सुप्रीणितो भवति भूतपतिर्महेशः। ३४। सुरगुरुमभिपूज्य स्वर्गमोक्षैकहेतुं पठति यदि मनुष्यः प्राञ्जलिर्नान्यचेताः। व्रजति शिवसमीपं किन्नरैः स्तूयमानः स्तवनमिदममोघं पुष्पदन्तप्रणीतं। ३५।

Colophon. इति श्रीपुष्पदन्तविरचितं महिम्नःस्तोत्रं समाप्तं।

End of the gloss. इदानीं ग्रन्थं समाप्य प्रगुरुं स्वपरिचयं स्तवग्रहणकारणञ्च दर्शयति। कुसुमदशननामेत्यादिना। अस्यार्थः। पुष्पदन्तनामा गन्धर्व्वराजः सर्व्वेन्दुमौलेर्म्महेशस्य दासः अस्य स्वानदोषात् निर्माल्यलङ्घनरूपापराधात् निजमहिम्नोगगनप्रयाणशक्तिरूपात् भ्रष्टः सन् अस्य महादेवस्य इदं पूर्व्वोक्तस्तवनमकार्षीत् कीदृशं सकल प्रभावमोघूतार्थ दिव्यानां देवानां दिव्यमुपादेयमित्यर्थः।

Colophon. समाप्तोऽयं ग्रन्थः। ०।

विवरणम्। पुष्पदन्तगन्धर्व्वविरचितं महिम्नःस्तोत्रं सटीकम्।

---

No 397. सटीकमहिम्नःस्तोत्रम्। Satika Mahimnaḥstótram. Substance, country-made yellow paper, 16 x 3¼ inches. Folia, 16. Lines, 5–9 in a page. Character, Bengali. Date, ? Appearance, very old. Prose and verse. Correct. Complete.

Another copy of the same work with an explanatory gloss in the margin by Govindánanda under the name of Mahimnaḥstavakaumudí.

Beginning of the gloss. श्रीगोविन्दपदद्वन्द्वनखेन्दुरचिसन्ततिः । सन्तश्चिन्ताभिराक्रान्तं चित्तध्वान्तं धुनोतु मे ॥ क्रियते श्रीमता तातपादरेणूपदेशतः । केनचित्कृतिना शम्भोर्महिम्नःस्तवकौमुदी ॥ अथ केलिकलाकवलितहृदयोधरणिमण्डलमवलोक्य विहरमाननन्दनमन्दमामकरन्दपन्दोलायतमधुकरनिकरझङ्कारमुखरितप्रोत्फुल्लमल्लीवल्लयितमुपवनमवलोक्य कुसुमनिचयावचयमद्वरद्वरभिसन्धानः कुसुमोपचाराराब्धप्रस्थिमाशिकनिवद्वैर्विलोय निपुणकोविदोपदिष्ट + + निर्माल्यनिवद्वाभिलङ्घनजनितगगनगमनप्रत्यूहेनोद्विज्यमानः कुसुमदशननामा गन्धर्वराजोगत्यन्तरमनालोकयन् संखिन्नः नाकवासिभिरुपास्यमानचरणकमलमाशुतोषिणं महेश्वरमभिष्टुवन् सर्वेषामस्मभिरमानमविदित्वापि स्तवप्रवृत्तो निर्जा शक्तिमाह महिम्न इति ।

End. श्रीपुष्पदन्तेत्यादि । गोविन्दानन्दकृतिना कृते कृतधिया मुदा । निवेदयन्तु विद्वांसो महिम्नःस्तवकौमुदी ॥ सर्वान्तर्यामिने तस्मै गोविन्दाय नमो नमः । यमानुरागं ध्यायन्ते यत्प्रभावद्विपश्चितः ॥

Colophon. इति श्रीगोविन्दानन्दाचार्य्यकृतामहिम्नःस्तवकौमुदी समाप्ता ॥ ११५ ॥ दानं दीक्षातपस्तीर्थं ज्ञानं यागादिकाः क्रियाः महिम्नःस्तवपाठस्य कलां नार्हन्ति षोडशीम् ॥ ० ॥ ० ॥ ० ॥ ० ॥

विवरणम् । गोविन्दानन्दविरचिता महिम्नःस्तवकौमुदी नाम महिम्नःस्तवटीका ।

---

There are two other codices containing ṭíkás or glosses on the same work bound together in the same volume, described below.

No. 398. महिम्नःस्तवटीका । Mahimnaḥstavaṭíká. Substance, country-made colourless paper, 18 × 4 inches. Folia, 6. Lines, 11–12 in a page. Character, Bengali. Date, S'aka 1753. Appearance, not old. Prose. Correct. Complete.

Another gloss on the Mahimnaḥstava by Srikṛishna Tarkálaṅkára.

मित्याह ॥ ॥ इति माध्यावर्षप्रयोगः ॥ अथ प्रतिमासमपरपक्षश्राद्धं ॥ प्रति कृष्णपक्षं प्रतिपदाद्ययुग्माष्टतिथिषु पृथक्पार्वणश्राद्धवर्ज्जं सपत्नीकमपि मातामहवर्गद्वयस्यान्वष्टक्यवत् सुरायामवर्ज्जं सर्व्वं कार्य्यं ॥ इत्यपरपक्ष श्राद्धप्रयोगः ॥ कृत्तिकादिषु काम्यश्राद्धं कृत्तिकारमनेऽष्टमीश्राद्धं कार्य्यं । यद्वा शौनकोक्तरीत्या वृद्धिश्राद्धवत् ॥

Colophon. इति श्रीरामेश्वरभट्टसूनुनारायणभट्टकृतेऽष्टकाविकृतिश्राद्धप्रयोगः ॥ ॥ शुभमस्तु ॥ ॥ श्री

विवरणम्—नारायणभट्टकृतस्य प्रयोगरत्नाख्यनिबन्धस्यांशविशेषोऽयं निबन्धः श्राद्धविषयकः ।

---

**No. 428. श्राद्धनिर्णयः ।** Śráddhanirnayaḥ. Substance, country made white paper, 7 × 3½ inches. Folia, 6. Lines, 3–11 in a page Character, Nágara Date, ? Appearance, very old. Verse. Generally correct. Complete (without Colophon).

A work on the Śráddha ceremony under the name of Śráddha Nirṇaya. Anonymous.

Beginning. श्रीगणेशाय नमः ॥ अथ किञ्चित् संक्षेपेण श्राद्धनिर्णयोऽभिधीयते ॥ तत्रादौ देवताक्रममाह संग्रहकारः ॥ त्रिदैवत्यं मताहे तु । ३ । षड्दैवत्यं तु दार्शिके । ६ । वृद्धौ तु नवदैवत्यं ९ शेषं द्वादश दैवतमिति १२ ॥ १ ॥ महालये गयाश्राद्धे वृद्धौ चान्वष्टकासु च । शेषं द्वादशदैवत्यं तीर्थे मोष्ठे मघासु चेति निगमोक्तिः ॥ २ ॥ हिमाद्रिमते तु अत्र नवदैवत्यमेव ॥ महालये गयाश्राद्धे वृद्धौ चान्वष्टकासु च । नव दैवत्यमत्रेष्टं शेषं षाट्पौरुषं विदुरिति विष्णुधर्म्मोक्तिः ॥

End. विधवा कारयेच्छ्राद्धं यथाकालमतन्द्रितेति ॥ १ ॥ विधवातु ॥ स्वयं संकल्पमात्रं कृत्वा ब्राह्मणद्वारा कारयेदित्युक्तं प्रयोगपारिजाते ॥

Colophon. नास्ति ।

विवरणम्—श्राद्धनिर्णयोनाम श्राद्धविषयकः कश्चिन्निबन्धविशेषः ।

---

**No. 429. श्राद्धनृसिंहः ।** Śráddha Nṛisiṅhaḥ. Substance, country-made white paper, 11 × 4 inches. Folia, 14. Lines, 5–9 in a page. Character, Nágara. Date, ? Appearance, very old, worn out, and worm-eaten throughout Prose. Generally correct. Complete.

A work treating of the Śráddha ceremony specially performed on Parva Amávasyá, or on such other days as are prescribed in the Sástras, under the name of Śráddha Nṛisiñha, from its author Nṛisiñha.

**Beginning.** श्रीगणेशाय नमः ॥ श्रीगजानन प्रसन्न (?) अथ पार्व्वणप्रयोगः तत्रेदं साधारणं सर्व्वत्र दैवं कर्म्म यज्ञोपवीतिनोदङ्मुखेन वा प्राङ्मुखेन दक्षिणजानुपातेन प्रदक्षिणं देवतीर्थेन देव दक्षिणभागस्वाहाकारेणादौ। पित्र्यं तु प्राचीनावीतिना दक्षिणाभिमुखेन वामजानुपातेनापदक्षिणं पितृतीर्थेन पितृवामभागे स्वधा कारेण तिलैर्द्विगुणित दक्षिणाग्रकुशपवरयेन ।

**End.** ब्राह्मणाः आयुः प्रज्ञा धनं विद्यां पुत्रान् पौत्रान् यशांसि ( सि ? ) च प्रयच्छन्तु मा ( त ? ) था राज्यं पितरः श्राद्धतर्पिताः इत्यक्षतान् दद्युः यजमानस्तान् शिरसि धारयेत्। सव्यसमे ब्राह्म (तान् ?) पवित्र ताम्बूलादि दत्त्वा पादसंवाहनादिना परितर्प्य अद्य भवच्चरणयुगलरजःपवित्रीकृताश्रमंदिरे आकाशामलपरिक्लिश्यमानविगतवर्ष्मानुग्रहितादर्प ( अनुगृहीता वयं ? ) अद्य मे ( मि ? ) सफलं जन्म भवत्पादाभिवन्दनात् अद्य मे वंशजाः सर्व्वे जाता वीतभयादिव पत्रशाकादिदानेन क्लेशिताः क्षमीदृशाः ( पचनीदृशाः ? )। तत्क्षेम ( तत्क्षेम ) कालं चिन्तेषु विसृज्य अंगुष्ठमर्दय प्राचीनावीती वसिष्ठगोत्रदेवमहत्याः ब्राह्मणाः अद्यादक मा सदृशे (?) पर्व्वणि मया य कृतं ( यत् कृतं ? ) पार्व्वणश्राद्धं तत्भवती ( : ? ) श्रीमहाविष्णोः (?) प्रसादाद्भूनातिरिक्तविधिः परिपूर्णमस्तु इति प्रार्थयेत्। अस्त्विति तैर्व्वक्तव्यं ॥ ततः प्रस्थितान् तानगमन्यानुज्ञातस्तैर्निवृत्तो ब्रह्मयज्ञादि कुर्य्यात् ॥

**Colophon.** इति श्रीश्राद्धनृसिंहे पार्व्वणश्राद्धप्रयोग. शुभं भवतु कल्याणमस्तु श्रीमद्योगाय-पत्य नमः (?) श्रीगणेशाय नमः ॥ छ ॥ छ ॥

विवरणम्—नृसिंहकृतः पार्व्वणश्राद्धप्रयोग. ।

---

This codex has been recently copied by the order of Mahámahopádhyáya Nílamaṇi *Nyáyálaṅkára, Principal of the Sanskrit College. The substance* of the copy is country-made white paper, 9 × 4½ inches. Folia, 11. Lines, 11 in a page Character, Nágara. Date, Samvat 1953. Appearance, fresh. *Prose. Not correct. Complete.*

**Colophon.** इति श्राद्धविधिः (श्राद्धविधिः ?) पार्व्वणश्राद्धप्रयोगः समाप्तः श्रीसम्वत् १८५१ मि: मार्गशीर्ष शुक्ल ७ भृगुवासरे वा, शुद, रघुनन्दन प्रसाद।

विवरणनूतनपूर्व्वम्।

---

**No. 430. श्राद्धविवेकः।** Śráddhavivekah. Substance, country-made yellow paper, 17 x 5 inches. Folia, 91. Lines, 10 in a page Character, Bengali. Date, ? Appearance, very old. Prose. Not correct. Complete.

A work on the Śráddha ceremony, entitled Śráddaviveka, by Súlapáṇi, the most distinguished authority on the subject. The work has been already published with notes in the Bengali character in Calcutta by Mahámahopádhyáya Pandit Madhusúdana Smṛitiratna, late Professor of the Calcutta Sanskrit College.

**Beginning.** ओं गणेशाय नमः॥ विलोक्य धर्म्मशास्त्राणि कामधेन्वादि संग्रहान्। विवेकः पार्व्वणादीनां क्रियते शूलपाणिना॥ अथ श्राद्धलक्षणं॥ तत्र कल्पतरुः॥ अथैतन्मनुः श्राद्ध स (श ?) ब्दं कर्म्म प्रोवाच प्रजा निःश्रेयसार्थं तत्र पितरो देवता ब्राह्मणाश्चाहवनीयार्थे मासि मासपरपक्षस्यापराह्णः श्रेयान् इत्यापस्तम्बवचनस्वरसात् पितृनुद्दिश्य द्रव्यत्यागो ब्राह्मणस्वीकारपर्यन्तः श्राद्धं॥ देवश्राद्धादौ तु श्राद्धशब्दो गौणः तद्धर्म्मप्राप्त्यर्थः कौण्डपायिनामयन इत्याग्निहोत्र शब्दः। श्राद्धमिति शब्दोवाचको यस्य तत्तथा त्यक्तद्रव्यप्रतिपत्तिस्थानत्वेन ब्राह्मणस्याहवनीयतुल्यता इति तच्चिन्त्यं देवश्राद्धस्य (स्य ?) श्राद्धशब्दाभिधेयत्वे दैविकं (दैविक ?) दशमं स्मृतमिति श्राद्धभेदानुपपत्तेः किञ्च प्राश्नीदसौ सदन्नं दद्याद्वा ब्रह्मचारिणे इति वशिष्ठवचनात् ब्राह्मणासम्पत्तौ अग्निप्रतिपत्तिपक्षे स्यात्ः किञ्च पिण्डपितृयज्ञस्य ब्राह्मणप्रतिपत्तिलाभावात् श्राद्धरूपता न स्यात् न स्यादेवेति चेन्न पिण्डपितृयज्ञमभिधाय तत् श्राद्धमितरदन्वाहार्य्यममावास्यायामिति गोभिलविरोधात्।

**End.** तथैकमतिथिं कृत्वेति सनकादिश्राद्धविषयं मातिथियज्ञपरं। श्राद्धप्रकरणात् श्राद्धफलोत्कर्षकथन (कथनाच ?)। अन्ये तु साग्निना नित्यक्रिया न कर्त्तव्या निरग्निना तु कर्त्तव्येति व्यवस्थामाहुः तन्निर्युक्तिकं साग्नेरिव निरग्नेरपि पितृयज्ञे ओतत्वात् तस्मात् पूर्व्वोक्तव्यवस्था॥ ०॥ अथ श्राद्धविधिश्रवणफलश्रुतिः॥ इदं श्राद्धविधिं पुण्यं कुर्यादपि पठेच यः। स सर्व्वकामसंयुक्तस्याग्नतल (स्याग्नतलच ?) विन्दति। बृहस्पतिः य एवं वेत्ति मतिमां-

स्य श्राद्धफलं भवेत्। उपदेष्टाऽनुमन्ता च लोके तुल्यफलौ स्मृतौ ॥
गम्भीरतत्त्वार्थवपारदृश्वना विपश्चिता सम्प्रति शूलपाणिना। कृतोऽयमुन्ना-
मयता मनो (?) मनोहरः श्राद्धविवेकसंग्रहः ॥

**Colophon.** इति साहुडियाल श्रीमच्छ्रीशूलपाणिविरचितः श्राद्धविवेकः समाप्तः ॥ ० ॥

विवरणम्। महामहोपाध्यायशूलपाणिविरचितः श्राद्धविवेकनामाऽयं निबन्धः। सुप्रसिद्धएव।

---

**No. 431. श्राद्धविवेकः।** Śráddhavivekaḥ. Substance, foolscap paper, 18 × 4 inches. Folia, 121. Lines, 8–10 in a page. Character, Bengali. Date, ? Appearance, fresh. Generally correct. Complete.

Another complete copy of the same work.

विवरणमनुक्तपूर्व्वम्।

---

**No. 432. श्राद्धविवेकः।** Śráddhavivekaḥ. Substance, country-made colourless paper, 9 × 4 inches. Folia, 13 (of which fol. 1 is wanting). Lines, 7–10 in a page. Character, Nágara. Date, ? Appearance, very old. Not correct. Complete (except the first fol.)

Another work on the Śráddha ceremony under the same name. Anonymous.

**Beginning.** नास्ति।

**End.** आमावाजस्य प्रसवो जगम्या इमे द्यावा पृथिवी विश्वरूपे ॥ आमागंतां पितरा मातरा चामासो अमृतत्वेन गम्यात् ॥ २ ॥ स्वादु षट् सदः पितुरवाप्ति धामभिः ॥ आसद्यास्मिन्बर्हिषि मादयध्वं ॥ ३ ॥ ब्राह्मण-प्रार्थना (प्रार्थना ?) समस्तसंपत् समवाप्तिहेतवः समुत्थि (त्थि ?) तापत्कुलधूमकेतवः ॥ अपार-संसारसमुद्रसेतवः पुनंतु मां ब्राह्मणपादपांशवः ॥ १ ॥ आपद्घनध्वांतसहस्र (सहस्र ?) भानवः समीहितार्थार्पणकामधेनवः ॥ समस्ततीर्थांबुपवित्र-मूर्त्तये (यो ?) रक्षतु मां ब्राह्मणपादपांसवः ॥ २ ॥ विप्रीपदर्शनात् चित्रं चीयंते पापराशयः ॥ वदनाम्बांसला (ला ?) वाप्तिरर्चनादच्युतं पदं ॥ ३ ॥ आधिव्याधिहरं नृणां दुख (दुःख ?) दारिद्र्यनाशनं ॥ श्रीपुष्टिकीर्त्तिदं वंदे विप्रश्रीपादपंकजं ॥ ४ ॥ संपूर्णतां यातु प्रसादात् भवतां मम यस्य स्मृत्या च नमोक्ता (नामोक्त्या ?) तपोयज्ञक्रियादिषु न्यूने संपूर्णतां यातु सद्यो वंदवमुच्यते (वंदे तमच्युतं ?) श्रीमच्युताय नमः कायेन वाचा मनसेंद्रियैर्वा बुध्या

(इहा ?) मना वा प्रकृतिसभावात् करोमि यद्यत् सकलं परस्मै नारायणायेति समर्पयामि १ आवाहनं न जानामि न जानामि विसर्जनं पूजां चैव न जानामि त्वं गतिः परमेश्वरः १ आगतोऽस्मि गयां देव पितृकार्य्ये गदाधर त्वमेव साक्षी भगवान् अदृणी (अनृणी ?)ऽहं ऋणत्रयात् १ फल्गुतीर्थे नर (: ?) स्नात्वा दृष्ट्वा देवं गदाधरं आत्मानं तारयेद्यस्तु दशपूर्व्वान् दशापरान् १ श्रीधन्विविकायाह परिपूर्णतामस्तु (?) समाप्तं ॥ सम्पत तु (?) प्रमाणेन दद्यात् पिंडं गयाश्रये ॥ उभरे समगोवाणां (उद्धरेत् समगोत्राणां ?) कुलमेकोत्तरं शतं (कुलमेकोत्तरं शतं ?) ॥ १ ॥

विवरणम्—श्राद्धविवेको नाम श्राद्धविषयकः कश्चिन्निबन्धविशेषः पूर्व्वखादपरः ।

---

**No. 433.** श्राद्धविवेकटीका । *Śráddhavivekaṭíká.* Substance, country-made yellow and red paper, 18 × 5 inches. Folia, 84. Lines, 9-10 in a page. Character, Bengali. Date, ? Appearance, not new. Prose. Generally correct. Complete.

An explanatory note on the Śráddhaviveka by Śrínátha Sarman, son of Śríkara A'chárya.

**Beginning.** श्रीहरिः ॥ व्यवस्थाशेषसंभ्रान्तिसन्तमश्छेदहेतवे । विबुधश्रेणिवन्द्याय नमः श्रीशूलपाणये ॥ श्रीकराचार्य्यपुत्रेण श्रीमच्छ्रीनाथशर्म्मणा ॥ व्याख्या श्राद्धविवेकस्य जनकोशा निबध्यते ॥ शूलपाणेर्वचनं दुरूहं गुर्व्वी मदीयाल्पमता तथापि । ब्रवीमि तात्पर्य्यलवं तदीयं यदत्र तन्मे सुधियः क्षमध्वं ॥ इह खलु सुख दुःखाभावश्चेति द्वयमेव सकलजनसाधारणस्य पुरुषार्थस्तत्रात्यन्तिको दुःखनिवृत्तिर्वा नित्यसुखाभिव्यक्तिरित्युभयमेपि परमपुरुषार्थोऽपवर्गस्तस्य चैहिकस्यायुरादेरामुष्मिकस्य च स्वर्गादेरुपायतया श्राद्धं श्रूयते । यदाह याज्ञवल्क्यः । आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च । प्रयच्छन्ति तथा राज्यं प्रीता नृणां पितामहाः ।

**End.** एवञ्च सिद्धौ प्रमाणवत्ता गौरवस्यापि न्याय्यत्वात् चतुर्थ्यन्तपदवत्त्वपि श्रुतिः क्लिप्तेति ग्रन्थकृतापि तत् प्रतिपदं तथैवोक्तं इति अत्र मुनेरप्यभिप्रायः । यदि चतुर्थ्याः स्वधादि ससधा (शब्दा ?) दुपपदविभक्तित्वमेव चतु + + च तेन कदाचित्तस्योक्तत्वेन चतुर्थीरहितमपि वाक्यं सम्भवेत् । यथा अमुकगोत्र एतद्दत्तं (?) हविः स्वधेत्यपि स्यात् तदाच मानार्थमनुवचने चतुर्थ्यन्तत्वनुविधानविरोधी भवेदिति श्रुतिरेव चतुर्थ्यन्तं पदवतीति सर्व्वमनाकुलं

इति ॥ ० ॥ सन्त्येव चिन्त्याम (?) कामधेनु हेमाद्रिरत्नाकरकल्पद्रुमा: । तुच्छैरलं प्रतिपादितार्थस्त्वाखबोधयतु (?) शूलपाणि: केचित् कुतर्काध्यवसाय + + न्ये द्वैयात् (द्वैधात् ?) परे गच्छरिकाप्रवादात् । अस्मान्नतः केचन शूलपाणेर्माद्यन्ति सिद्धान्तपथादपेता: । वदन्ति दूषणमिहेति द्वयाभिमान. केचाचनातितुच्छमन्दधिया कथचित् एतावता यन्मप्रमङ्गे कदाचिन्न बुधैरवधीरितव्या । संघट्टे गहने + + मूलार्थं त्वामधीकदूषणं प्रत्यर्थं सूमति दुर्दुरुटयो: क्षतं विपक्षे: । एतत् किल क्वापि कुधीभिरुक्तेन सन्तु सन्तो विधूतार्थबोधा: । सिद्धान्तदर्शनेनायं प्रबन्धोरचितो मया । व्याख्या श्राद्धविवेकस्य सम्यगस्मा च + + + + । ० ।

Colophon. इति महामहोपाध्यायश्रीमत्श्रीकराचार्यात्मजाचार्यचूडामणि श्रीमत् श्रीनाथशर्मणा (शर्मणा ?) विरचिता श्राद्धविवेकटिप्पणी समाप्ता ॥ ० ॥ ० ॥

विवरणम्—आचार्यचूडामणि श्रीश्रीकराचार्यपुत्रश्रीनाथविरचिता श्राद्धविवेकटीका ।

---

**No. 434. श्राद्धविधिः । Śráddhavidhiḥ.** Substance, country-made white paper, 6×3 inches. Folia, 15. Lines, 8–13 in a page. Character, Nágara. Date, ? Appearance, very old. Prose. Generally correct. Complete (without Colophon).

A treatise on the Śráddha ceremony under the name of Śráddhavidhi. Anonymous.

Beginning. श्रीसरस्वत्यै नम: । अथेदानीं स्मृतीनामार्गेण पार्वणश्राद्धं लिख्यते । इदमत्र सूत्रं । अथात: पार्वणे श्राद्धे । काम्या । आभ्युदयिकएकोद्दिष्टे वा इति अयमन्दो ह्यधिकारार्थ: । यथाम्नाता निश्रेयस:समाप्ति । सूद्रैरपि क्रियते । पार्वणमिति श्राद्धनाम । अमावास्यासंज्ञा पैर्व पर्वणि भवं पार्वणमिति । तदाप्येकविधेन पर्वणि भवति ।

End. पितोर्जीवतोर्मातामहस्यैव कुर्यात् । पितु जीवतस्तु न कुर्यात् । अतएव सुमन्तुवाक्यं । न जीवत: पितु: कुर्याच्छ्राद्धमग्निमतो द्विज: । येभ्य एव पिता दद्यात् तेभ्य: कुर्वीत साग्निक: । १ । पितामहस्यैवमेव कुर्याज्जीवति साग्निक: । साग्निकोऽपि न कुर्वीत जीवति प्रपितामह इति । २ ।

विवरणम्—श्राद्धविधिर्नाम श्राद्धविषयक: कर्त्तव्यविषयविशेष: ।

---

**No. 435.** **श्राद्धविवेकसंग्रहः ।** Sráddhaviveka Sangrahaḥ. Substance, country-made coloured paper, 18×3 inches. Folia, 95 (of which fol. 1 is wanting). Lines, 2–6 in a page with a blank space of about half an inch square in the middle. Character, Bengali. Date, ? Appearance, very old, and worn out. Prose. Generally correct. Complete (except the first folium).

Another copy of the Śráddhaviveka of Súlapáṇi without the first folium, but instead of it, the first folium of a different book, which seems to be a commentary of the Práyas'chittatattwa.

विवरणमुक्तपूर्वम् ।

---

**No. 436.** **महालयाश्राद्ध संग्रहः ।** Mahálayá Śráddha Sangrahaḥ. Substance, country-made white paper, 6×2½ inches. Folia, 6. Lines, 9 in a page. Character, Nágara. Date, ? Appearance, not old. Prose. Generally correct. Incomplete.

A collection of rules concerning the Śráddha ceremony to be performed on the Mahálayá or the new moon preceding the Durgápújá. Anonymous.

**Beginning.** ॥ श्रीगणेशाय नमः ॥ अथ निर्णयसारे षोडश षोडशमहालयनिर्णयोऽभिधीयते ॥ तत्र पृथ्वीचन्द्रोदये हेमाद्रौ मनुः ॥ आषाढीमवधिं कृत्वा पंचमं पक्षमाश्रिताः । कांक्षन्ति पितरः क्लिष्टा अन्नमप्यन्वहमाह शाट्यायनिः (अन्यमपि पक्षमाह शाट्यायनिः । कन्यास्थार्कान्वितः पक्षं सौम्य तं (सोऽनन्त ?) पुण्य उच्यते इति ।

**End.** नास्ति ।

**Colophon.** नास्ति ।

विवरणम्—महालयाश्राद्धविषयकोऽयं निबन्धोऽसम्पूर्णः ।

---

**No. 437.** **श्राद्धप्रकरणम् ।** Sráddha Prakaranam. Substance, country-made white paper, 8×3 inches. Folia, 146. Lines, 10–14 in a page. Character, Nágara. Date, ? Appearance, very old, worn out, slightly worm-eaten, and writing effaced in parts; the first page as well as the last being entirely useless. Prose. Generally correct. Incomplete.

A part of the Nirṇayasindhu of Kamalákara Bhaṭṭa, treating of the Śráddha ceremony.

**Beginning.** (*Not legible*).

**End.** नास्ति ।

**Colophon.** नास्ति ।

विवरणम्—कमलाकरभट्टकृतस्य निर्णयसिन्धोः श्राद्धप्रकरणमात्रात्मकमेतत् पुस्तकम् ।

---

**No. 438.** **श्राद्धप्रकरणम् ।** Śráddha Prakaraṇam. Substance, country-made white paper, 9 × 3½ inches. *Folia*, 27. *Lines*, 8 in a page. Character, Nágara. Date, ? Appearance, very old, and worm-eaten in parts. Prose. Generally correct. Incomplete.

A guide to the performance of the Śráddha ceremony based on the rules of Bodháyana. Anonymous.

**Beginning.** श्रीगणेशाय नमः ॥ अथबौधायनोक्तप्रकारेण श्राद्धप्रकरणं लिख्यते ॥ एवगुणविशेषणविशिष्टायां पुण्यशुभतिथौ अस्मत्पितुः मातुर्वा प्रतिसांवत्सरिकं श्राद्धं करिष्यमाण आत्मशुद्ध्यर्थं गृहभाण्ड भाजनविशुद्ध्यर्थं पवनमंत्राचमनमंत्रप्रोक्षणानि करिष्ये इति संकल्प्य । एकविं-शतिदर्भपुञ्जौलैः विभाग कृत्वा मुखनाभिगुल्फौ च धावयित्वा उदक् निरस्य । अप उपस्पृश्य मंत्राचमनं कुर्यात् ।

**End.** नास्ति ।

***Colophon.*** नास्ति ।

विवरणम्—बौधायनसूत्रानुगतः श्राद्धविधानविषयकः कश्चिन्निबन्धविशेषः ।

---

**No. 439.** **पार्वणश्राद्धप्रयोगः ।** Párvaṇa Śráddha Prayogaḥ. Substance, country-made white paper, 12 × 4 inches. *Folia*, 9. *Lines*, 9-14 in a page. Character, Nágara. Date, ? Appearance, old, and slightly worm-eaten throughout. Prose. Not correct. Complete.

A guide to the performance of the ceremony as performed on special occasions such as the new moon, eclipses of the sun or the moon, &c.

**Beginning.** श्रीगणेशाय नमः ॥ तेकः संकल्पगायत्री देवताभ्यो दिगस्तथा ॥ पादना-वाहनहस्तार्घं न्युब्ज गंधादिकं तथा ॥ मंडलं चाग्नौकरणं भूस्वाम्यद्रपरि-वेषणं। मधुदानं मधुज (च ?) स्तयाग्नौत्सर्गं एव च धी-कराचमगायत्री देवताभ्यो जपस्तथा ॥ अवनेजनं पिंडदानं करमोचनमेव च। विराच-मीव पितरस्ततः प्रत्यवनेजनं। नीवीं वी (वि ?) त्रंस चाचम्य दयवथा दिकं तथा। श्री (ग्रि ?) वा आपस्तसांत्व्यमघोराशीः कुशाकृतिः। उर्ध्वंमाध्राणमुत्थानं पिंडागाच ततःपरं ॥ पिडा (पिण्डा ?) धार कुशान् वह्नौ चिपेत् पात्रं प्रचालयेत् ॥ विप्रेभ्यो (भ्यो ?) दक्षिणां दत्वा विसर्जन-मतःपरं ॥ दीपनिर्वापणं कृत्वा प्रमादादिति संस्मरेत् ॥ इति श्राद्धानु-क्रमणिका सूत्रम्।

**End.** पितरः स्वर्गं स्वस्थानं गच्छत ॥ अत्र श्राद्धे यत् कृतं तत् सुकृतमस्तु ॥ यत्र कृतं तद्ब्रह्मविदोः प्रसादात् ब्राह्मणवचनात् सर्व्वविधेः परिपूर्णं भवतु ॥ सव्यं ॥ विश्वेदेवा ब्राह्मणाः स्वस्थानं गच्छत ॥ दीपनिर्व्वापणं ॥ सव्यं ॥ आचम्य सूर्य्यायांजलिदानं ॥ छ ॥

**Colophon.** इति पार्व्वणश्राद्धप्रयोगः समाप्तः शुभमस्तु। श्रीराम ॥ राम ॥ ० ॥ राम ॥ ॥ * ॥ राम ॥ ० ॥ ॥ ॥

विवरणम्—पार्व्वणश्राद्धविषयकोऽयं निबन्धः।

---

**No. 440. एकोद्दिष्ट श्राद्धप्रयोगः।** Ekoddishta Śráddha Prayogaḥ. Substance, country-made red paper, 15 × 2½ inches. Folia, 8 (of which foll. 1–4 are wanting). Lines, 8–9 in a page. Character, Bengali. Date, ? Appearance, very old, and worn out. Prose. Correct. Incomplete (owing to the want of the first four folia).

A guide to the performance of the Śráddha ceremony in honour of one particular person on the lunar anniversary of his death. Anonymous.

**Beginning.** नास्ति।

**End.** हस्त प्रचाल्य आचम्य अद्येत्यादि अमुकगोत्रस्य पितुः अमुकदेवशर्म्मणः कृते-तत् एकोद्दिष्टविधिकसांवत्सरिकश्राद्धकर्म्माच्छिद्रमस्तु उपवीती उत्तराभि-मुखोभूत्वा पुनरद्येत्यादि अमुकगोत्रः श्रीअमुकदेवशर्म्मा अमुकगोत्रस्य पितुः अमुकदेवशर्म्मणः कृतेऽस्मिन् श्राद्धे यद्वैगुण्यं जातं तद्दोषप्रशमनाय श्रीविष्णोः स्मरणमहं करिष्ये ओं कुरुष्वेति प्रतिवचनं ततः ओं तद्विष्णोः परम पदं

इत्यादिना विष्णुं स्मृत्वा तत एतत् कर्म्मफलं श्रीकृष्णार्पितमस्तु इति विप्रान् समर्थ्य प्रीयतां पुण्डरीकाक्ष इत्यादिना विष्णुं प्रीणयित्वा मन्त्रतस्तन्त्रत: छिद्रं देशकालार्हवस्तुषु सर्व्वं करोतु निश्छिद्रं नामसंकीर्त्तनं हरे: ॥ इति पठित्वा श्राद्धमिदं कीदृशं जातं इति पृच्छेत् वेदविधिना सर्व्वं सञ्जातं इति प्रतिवचनं।

**Colophon.** इति एकोद्दिष्टश्राद्धप्रयोग: ॥ ० ॥ छ ॥ श्रीँ शिवदुर्गाभ्यां नम: ॥ ० ॥ छ ॥०॥

विवरणम्—एकोद्दिष्टश्राद्धप्रयोगरूपोऽयं निबन्ध:।

---

**No. 441. पार्व्वणश्राद्धप्रयोग:।** Párvana Śráddha Prayogaḥ. Substance, country-made white paper, 6 × 2½ inches. Folia, 11. Lines, 9 in a page. Character, Nágara. Date, ? Appearance, very old, worn out, torn, and writing effaced in most parts. Prose. Correct. Incomplete.

Another copy of the work noticed in No. 439. The codex is utterly useless.

विवरणन्तु पूर्व्वमतीव जीर्णमिदम् पुस्तकम्।

---

**No. 442. त्रिपिण्डीश्राद्धप्रयोग:।** Tripiṇḍi Śráddha Prayogaḥ. Substance, country-made white paper, 4 × 2 inches. Folia, 12. Lines, 8–9 in a page. Character, Nágara. Date, ? Appearance, very old, worn out, and writing slightly effaced in parts. Prose. Correct. Complete.

A guide to the performance of Tripindí Śráddha, which is performed either to release a Preta (evil spirit), or to cure one's diseases &c. Anonymous.

**Beginning.** श्रीगणेशाय नम ॥ अथ त्रिपिंडीश्राद्धप्रयोग. ॥ तिथ्यादि संकीर्त्य ॥ श्रीमद्वैष्णोपलिप्य ॥ ब्राह्मणत्रयं निमंत्र्य ॥ पिशाचविमोचनतीर्थे स्नात्वा अपसव्यं ॥ त्रिविधानां दिविस्थानां अन्तरिक्षस्थानां भूमिस्थानामप्रातनाम-गोत्राणां सात्विकराजसतामसानां प्रेतानां मोक्षार्थं मम शरीरपीडापरिहारार्थं आरोग्यार्थं मम सन्तानप्रतिबंधनिरुत्यर्थं त्रिपिंडीश्राद्ध करिष्ये ॥

**End.** मया यत्कृतं सात्विकराजसतामसेभ्य: पिशाचमोचनतीर्थे त्रिपिंडीश्राद्धं तत्कार्यहीन भक्तिहीनं ब्राह्मणानां वचनात् श्रीविष्णो. प्रसादात् सर्व्वं विधि: परिपूर्णमस्तु

**Colophon.** इति त्रिपिण्डीश्राद्धप्रयोग. ॥ अथ तिलपात्रदानमहं करिष्ये ॥ मम जन्मप्रभृतिसमस्तपापनिदर्शनरूपा पापापहा महाविष्णुप्रीत्यर्थं तिलहिरण्यदानमहं करिष्ये ॥ इदं तिलपात्रं सहिरण्यं अमुकगर्भणे ब्राह्मणाय तुभ्यमहं संप्रददे ॥ तिला: पुण्या: तिला. सर्व्वकरा: स्मृता: शुक्ला वा, यो ॥ यानि कानी, समानी (?) चातिलपात्रं तानि नश्यन्तु सर्व्वदा ॥ २ ॥ महर्षे गो, ता: (?) ॥ तस्यादेषां प्रसादेन मम पाप (?) ॥ ३ ॥ अनेन तिलपात्रदानेन पापापहारी महाविष्णु: प्रीयतां मम ॥ ४ ॥ सर्व्वौषधिर्लेपनं ॥ घटेन स्नानं ॥ अभिषेक: ॥ यथाशक्ति ब्राह्मणान् भोजयेत् ॥ भूयसीं दत्वा ॥ इति त्रिपिण्डीविधि: समाप्त' ॥ छ ॥ छछ ॥

विवरणम्—पिशाचत्वादिविमोचनहेतुत्रिपिण्डीश्राद्धं नाम शान्तिविशेषानुष्ठानपद्धतिरूपोऽयं निबन्ध: ॥

---

**No. 443. श्राद्धव्यवस्था।** Śráddha Vyávasthá. Substance, foolscap paper, 15 × 3 inches. Folia, 16. Lines, 3–8 in a page. Character, Bengali. Date, ? Appearance, fresh. Prose and verse. Not correct. Complete.

This work, though entitled Śráddha Vyávasthá in the colophon, should really be called Vyávasthá Sañgraha, as it prescribes the most important religious rites and observances to be performed on particular dates in each month of the year, with citations of authorities. Anonymous.

**Beginning.** श्री॑ नमो गणेशाय ॥ अथ सामादि (मासादि ?) व्यवस्था ॥ मास: स्यात्त्रिविध: सौर सावनचान्द्र एव च ॥ एकराशौ (शौ ?) रविर्यावत् स सौर (: ?) परिकीर्त्तित'। सावनस्त्रिंशताहोभिश्चान्द्रश्च द्विविध: स्मृत:। मुख्या (ख्य: ?) शुक्लप्रतिपदोर्दर्शान्त परिकीर्त्तित: (शुक्लप्रतिपदो दर्शान्त: परिकीर्त्तित: ?)। गौन (ण: ?) कृष्णप्रतिपद: पौर्णमास्यान्त (स्यन्त ?) एव हि ॥ विवाहादौ स्मृत सौरो (स्मृत: सौरो ?) यज्ञादौ (यज्ञादौ ?) सावनामत: (सावनो मत: ?) आब्दिके पितृकृत्ये तु मुख्यचान्द्र उदाहृत:। गौन (ण ?) च तिथिकृत्येषु प्रयोक्तव्यो व्रतादिषु (व्रतादिषु ?)। पक्षश्राद्धे युगादौ च पार्व्वत्याश्च महोत्सवे। सामान्ये कर्म्मनि (णि ?) सना (सदा ?) मोख्यचान्द्र प्रयोगित: (मुख्यचान्द्र: प्रयोजित: ?)। सङ्कल्पे मासपक्षानां (णां ?) निमित्तानां तिथेस्तथा। उल्लेखनं प्रकुर्व्वीत श्री॑ तत्सदिति पूर्व्वत: ॥

षों मयेत्यादि ततः पयान्माषा (सा ?) दीनां प्रकीर्त्तनं। कर्त्तुर्गोत्रं तथा नाम कामनाविषयस्तत:। कर्त्तव्यानन्तरमहं करिष्ये स्त्रीयकर्म्मनि (णि ?) परार्थे च करिष्यामि तस्य गोत्रस्य नामतः। स्त्रीयदाने दद इति ददानीति परस्य च।

End. संक्रान्तिविहिते कार्य्ये संक्रान्ति (: ?) परिकीर्त्तिता। मासोल्लेखमेतस्मिन् रविराशिस्थिते तथा (यथा ?)। चार्यक्रमेन (ण ?) सर्व्वत्र शूद्रस्तानुबन्धिनां। तस्मात् शूद्र (. ?) स्वयं कर्म्म यजुर्व्वेदेन कारयेत्। स्त्रीना (णा ?) मय (र ?) वर्णानां यजुर्व्वेदेन कारयेत्। ब्राह्मणादिकवर्णानां मन्त्रवत् कर्म्मचेयने (ष्यते ?)। मन्त्रस्य (य ?) स्त्रीशूद्रस्य विप्रो मन्त्रेण (विप्रमन्त्रेण ?) गृह्यते। नमस्कारेण मन्त्रेण पञ्चयज्ञादिका: क्रिया:॥

Colophon. इति श्राद्धव्यवस्था समाप्ता ॥ श्रीहरि: ॥ ० ॥

विवरणम्—श्राद्धव्यवस्थेति नाम्ना समुल्लिखितोऽपि निबन्धोऽयं संक्षेपेणावश्यकर्त्तव्यविविधधर्म्मकर्म्मव्यवस्था: समगृह्णात्।

---

No. 444. श्राद्धमयूख:। Sráddha Mayúkhaḥ. Substance, country-made white paper, 10×6 inches. Folia, 133. Lines, 9-12 in a page. Character, Nágara. Date, ? Appearance, fresh. Prose. Generally correct. Complete.

A treatise on the Śráddha ceremony under the name of Śráddha-mayúkha by *Nilakaṇṭha Bhaṭṭa, forming a part of his series entitled* Bháskara.

Beginning. श्रीगणेशाय नमः। तिथिमयूखं प्रतिपाद्य सन्ध्यासाराध्यधामाय गिरामगम्य श्रीमद्भट्टात्मज(श्चात्मज ?) नीलकंठ. श्राद्धस्य इत्थं विवृणोति सम्यं ? मतान्तरेरादृतमत्र किंचिन्मया तु निर्मूलतया तदुज्झितं कणौ लिता नो नहि तेन काचित् स्वपुण्यहीनापरिवर्तिनं हीयते। मृतोद्दिश्यकोविप्रस्वीकारान्तको द्रव्यत्यागः श्राद्धं जीवच्छ्राद्धे च तथा गौण कौडपार्श्वयितोमनदयन् विप्रस्वीकारवत्तोक्ता तदंशनिवृत्तिः।

End. भ्रातोदारोद्यमाधाधा-प्रगम. सार्वकालिक: (सार्व्वकालिक. ?)। इत्यं भवति दत्तायां जलपीन्ना समाहित: ॥ अथ जलकुम्भे दत्त्वा परिमाणं सुवर्णान्वितत्वं च सुखषे स गार्हति। एतत् सुगाहति। तिलपात्रं कटिमत्तामयादि ॥ दधिपात्र कांस्यमयं ॥ धान्यानि पात्र्यं कुहादीनि

प्राणदेशे। प्रियंगुपत्रं श्रवणे यज्ञोपवीतं शिरसि। वस्त्रमुत्तरीयमिति। दक्षिणा च सुवर्णमारभ्य यथाशक्ति। एतश्चोत्तरभेदवदविरोधात् सामान्यादितरेषु तथात्वमिति न्यायेन ज्ञेयं॥ ॥

**Colophon.** इति श्रीमीमांसकशंकरभट्टात्मजभट्टनीलकंठकृते भास्करे श्राद्धमयूखः समाप्तः छ छ

विवरणम्—नीलकण्ठभट्टविरचितः श्राद्धमयूखो नाम श्राद्धविषयकोऽयं निबन्धस्तदीयभास्कराख्यधर्म्मग्रन्थावल्यन्तर्गतः।

---

**No. 445. श्राद्धसङ्कलनं।** Śráddha Sañkalanam Substance, country-made colourless paper, 5 × 3 inches. Folia, 20. Lines, 7–9 in a page. Character, Nágara. Date, Śaka 1624. Appearance, very old, worn out, torn, and writing effaced in parts. Prose. Not correct Complete

A treatise on the Párvana Śráddha under the name of Śráddha Sañkalana. Anonymous.

**Beginning.** श्रीरामो जयति श्रीगणेशाय नमः आचम्य प्राणानायम्य देशकालौ संकीर्त्य पूर्व्वोच्चरित एवं गुणविशेषणविशिष्टायां तिथौ पुरूरवार्द्रवसंज्ञकानां (?) विश्वेषां देवानां। अपसव्यं कृत्वा यजमानस्य पी(पि ?) तृपितामहप्रपितामहानां अमुकगोत्राणां अमुकशर्म्मणां वसुरुद्रादित्यस्वरूपाणां सपत्नीकानां मातामहमातुःपितामहमातुःप्रपितामह ( हा ? )नां दर्शश्राद्धं पार्वणेन विधिना अन्नेन हविषा सद्यः करिष्ये॥

**End.** यत्र क्वचन सस्थानां क्षुत्तृष्णोपहतात्मनां दुर्गतानां मया दत्तमक्षय्यमुपतिष्ठतु॥ १॥ शके १६२४ चित्रभानुसंवत्मार्गशीर्षमासे शुक्लप्रतिपदि लिखितपरोपकारार्थं लिखिते बापुज्योतिषी असनीकर तेन लिखिते शुभं भवतु। श्री परशुरामार्पणमस्तु॥ छ॥ छ॥ श्रीगणेशाय नमः॥ श्राद्धारंभे तथा वर्ज्ये (तथार्धे ?) अते चोच्छिष्टपिंडके। विकिरे पिंडदाने च षट्स्वाचमनं स्मृतम्॥ १॥

**Colophon.** (नास्ति)

विवरणम्—श्राद्धसङ्कलनं नाम पार्व्वणश्राद्धविषयकः कश्चिन्निबन्धः।

---

**No. 446.** श्राद्धसागरः। Śráddha Ságaraḥ. Substance, foolscap paper, 16 × 4 inches. Folia, 86. Lines, 3-9 in a page. Character, Bengali. Date, ? Appearance, fresh. Not correct. Complete.

A work treating of the Śráddha ceremony under the name of Śráddha Ságara by Mahámahopádhyáya Kulluka Bhatta, the famous commentator of the Manusañhitá. It belongs to his series entitled Smṛiti Ságara. Not printed.

**Beginning.** ओं नमो महामायायै॥ विलोक्य धर्म्मशास्त्राणि वेदार्थानिव तत्त्वतः। क्रियते स्मृतितत्त्वाख्या सागरस्य मयाधुना। समीक्ष्य तन्नापि मया मुनीनां यदत्र मन्वादिभिरुक्तमेतत्। स्यात् तन्मनोहारि सता कदाचित् सम्भाव्यते मे वचनप्रमाणं। कुल्लुकेन मया ख्यात स्मृतिकारण (?) तदर्थं क्रियते धीराबध्य (बुध्य ? ) ध्यानसमाधिना। विवादसागरो श्रेयस्तथा श्राद्धपदस्य च। धर्म्मौघ-सागरस्यापि क्रियते पितुराजया (पितुराज्ञया ?)। तथाच मनुः श्राद्धशब्द प्रोवाच प्रज्ञा निश्चयसार्थं तत्र पितरो देवता ब्राह्मणायाह्वनीयार्थे मासि मास्यपरपक्षस्यापराह्ः (ह्णः) श्रेयानित्यापस्तम्बस्मरणात् पितृनुद्दिश्य द्रव्यत्यागो ब्राह्मणस्वीकारपर्य्यन्तस्य श्राद्धं दैवे (दैव ?) श्राद्धादौ तु श्राद्धशब्दो गौणस्तद्धर्म-प्राप्त्यर्थः कौण्डपायिनामयन इवाग्निहोत्रशब्दः।

**End.** अतएव पितृकल्पे मत्स्याधीपाख्याने मतानां भ्रातृणां श्राद्धसम्पादनमाहात्म्य (त्म्य ?) कथनप्रस्तारे (वे ?) मत्स्यपुराणे द्वौ दैवे मातरौ कृत्वा पित्रे चौषि त्वनुक्रमात्। तथैकमतिथिं कृत्वा श्राद्धदः स्वयमेव तु। चकार मन्त्रवत् श्राद्धं स्मरन् पितृपरायणः। तथैकमतिथिं कृत्वेति सनकादिश्राद्धविषयं। मातिथियत्परं श्राद्धप्रकरणात् श्राद्धफलोत्कर्षकथनाय च। अन्ये तु साग्निना नित्यक्रिया न कर्त्तव्या निरग्निना कर्त्तव्येति व्यवस्थामाहुः। तन्नि-र्युक्तिकं साग्नेरिव निरग्नेरपि पार्व्वणेन पितृकर्म्मांगत्वात् तस्मात् पूर्व्वोक्तैव व्यवस्था इति निर्गलितार्थः। कलौ दिपिदकत्वाभावान्न लिखितं मात्स्यक मतमेतत् यदा चैतजस्य यद्विधानमुक्तं तदीयसमभिव्याहारात् तदपि केनापि न क्रियते। अतएव कर्य्यौट (कैयट ?) कमलाकरभट्टभाष्येऽस्मद् गुरुचरणादिभिर्यदुक्तं तदुक्तं नात्र दूषणं। श्राद्धविधिपाठयोः फलश्रुति-माह हारीतः इमं श्राद्धविधिं पुण्यं कुर्य्याद्वापि पठेत्तु यः। (स ?) सर्व्वान् लभते कामानन्ते सुखिञ्च विन्दति। हस्पति (: ?) यदत्र वैषि मतिमांस्तत्र श्राद्धफल भवेत्। उपदेष्टानुमन्ता च लोके तुल्यफलौ स्मृतौ॥०॥०।

**Colophon.** इति महामहोपाध्यायश्रीमत्कुल्लुकभट्टविरचित. स्मृतिसागरे श्राद्धसागर

घ्राणदेशे। प्रियंगुपत्रं श्रवणे यज्ञोपवीतं शिरसि। वस्त्रयुग्मंचाग्नि।
दक्षिणा च सुवर्णमारभ्य यथाशक्ति। एतद्गोसरधेनुवदविरोधात् सामान्या-
दितरेषु तथात्वमिति न्यायेन ज्ञेयं॥ ॥

Colophon. इति श्रीमीमांसकशंकरभट्टात्मजभट्टनीलकंठकृते भास्करे श्राद्धमयूखः
समाप्तः छ छ

विवरणम्—नीलकण्ठभट्टविरचितः श्राद्धमयूखो नाम श्राद्धविषयकोऽयं निबन्धस्तदीयभास्कराख्य-
धर्म्मग्रन्थावल्यन्तर्गतः।

---

**No. 445. श्राद्धसङ्कलनं।** Śráddha Sañkalanam Substance, country-made colourless paper, 5 × 3 inches. Folia, 20. Lines, 7–9 in a page. Character, Nágara. Date, Śaka 1624. Appearance, very old, worn out, torn, and writing effaced in parts. Prose. Not correct Complete

A treatise on the Párvana Śráddha under the name of Śráddha Sañkalana. Anonymous.

Beginning. श्रीरामो जयति श्रीगणेशाय नम. आचम्य प्राणानायम्य देशकालौ संकीर्त्य
पूर्व्वोच्चरित एवं गुणविशेषणविशिष्टायां तिथौ पुरूरवार्द्रवसंज्ञकानां (?)
विश्वेषां देवानां। अपसव्यं कृत्वा यजमानस्य पौ(पि ?)तृपितामहप्रपिता-
महानां अमुकगोत्राणां अमुकशर्म्मणां वसुरुद्रादित्यस्वरूपाणां सपत्नीकानां
मातामहमातुःपितामहमातुःप्रपितामह ( ह्य ? )नां दर्शश्राद्धं पार्वणेन
विधिना अन्नेन हविषा सद्य. करिष्ये॥

End. यत्र क्वचन संस्थानां क्षुत्तृष्णोपहतात्मनां दुर्गतानां मया दत्तमक्षय्यमुपतिष्ठतु॥
१॥ शके १६२४ चित्रभानुसंवत्मार्गशीर्षमासे शुक्लप्रतिपदि लिखितपरोप-
कारार्थं लिखिते बापुज्योतिषी असनीमीकर तेन लिखिते शुभं भवतु। श्री
परशुरामार्पणमस्तु॥ छ॥ छ॥ श्रीगणेशाय नमः॥ श्राद्धारंभे तथा वर्ज्जं
(तथार्घे ?) अन्ते चोच्छिष्टपिंडके। विकिरे पिंडदाने च षट्स्वाचमनं
स्मृतम्॥ १॥

Colophon. (नास्ति)

विवरणम्—श्राद्धसङ्कलन नाम पार्व्वणश्राद्धविषयकः कश्चिन्निबन्धः।

---

**No. 446.** श्राद्धसागरः । Sráddha Ságaraḥ Substance, foolscap paper, 16 × 4 inches. Folia, 86. Lines, 3-9 in a page. Character, Bengali. Date, ? Appearance, fresh. Not correct. Complete.

A work treating of the Śráddha ceremony under the name of Śráddha Ságara by Mahámahopádhyáya Kulluka Bhaṭṭa the famous commentator of the Manusañhitá. It belongs to his series entitled Smṛiti Ságara. Not printed.

**Beginning.** ओं नमो महामायायै ॥ विलोक्य धर्म्मशास्त्राणि वेदार्थानिव तत्त्वतः । क्रियते स्मृतितत्त्वानां सागरस्य मयाधुना । समीक्ष्य तत्त्वानि मया मुनीनां यदत्र भट्टादिभिरुक्तमेतत् । स्यात् तन्मनोहारि सतां कदाचित् सम्भाव्यते मे वचनप्रमाणं । कुल्लुकेन मया ज्ञात स्मृतिकारण (?) तदर्थं क्रियते धीराबुध्यं (बुध्य ?) ध्यानसमाधिना । विवादसागरो श्रेयसया श्राद्धपदस्य च । अशौच-सागरस्यापि क्रियते पितुराज्ञया (पितुराज्ञया ?) । तथाच मनुः श्राद्धमन्दं प्रोवाच प्रजा निःश्रेयसार्थं तत्र पितरो देवता ब्राह्मणाश्चाहवनीयार्थे मासि मासपरपक्षस्यापराह्नः (ह्णः) श्रेयानित्यापस्तम्बस्मरणात् पितृमुद्दिश्य द्रव्यत्यागो ब्राह्मणस्वीकारपर्य्यन्तश्च श्राद्धं दैवे (दैव ?) श्राद्धादौ तु श्राद्धशब्दो गौणस्तद्धर्म्म-प्राप्त्यर्थः कौण्डपायिनामयन इवाग्निहोत्रशब्दः ।

**End.** अतएव पितृकर्म्म सम्बन्धीयाख्याने समानां मातॄणां श्राद्धसम्पादनमाहात्म (त्म्य ?) कथनप्रस्तारे (वे ?) मत्स्यपुराणे हो दैवे भातरौ कृत्वा पित्रे चौथि त्वनुक्रमात् । तथैकमतिथिं कृत्वा श्राद्धदः स्वयमेव तु । अकार मन्ववत् श्राद्धं चरन् पितृपरायणः । तथैकमतिथिं कुर्वीत सनकादिश्राद्धविषयं । मातिथियमपरं श्राद्धप्रकरणात् श्राद्धफलोत्कर्षकथनाय च । अन्ये तु साग्निना नित्यक्रिया न कर्त्तव्या निरग्निना कर्त्तव्येति व्यवस्थामाहुः । तन्नि-र्युक्तिकं साग्नेरिव निरग्नेरपि पार्व्वणेन पितृकर्म्मकांतत्वात् तस्मात् पूर्व्वोक्तैव व्यवस्था इति निर्गलितार्थः । कस्यो र्दिपितृकत्वाभावाच्च लिखितं शाण्डाक-मतमेतत् सदा चैत्रजस्य यद्विधानमुक्तं तदीयमसमभिव्याहारात् तदपि केनापि न क्रियते । अतएव कयोट (कैयट ?) कमलाकरमहमाध्येऽस्मद् गुरुचरणादिभिर्यदुक्त मदुक्तं नात्र दूषणं । श्राद्धविधिपाठयोः फलश्रुति-माह हारीत. इमं श्राद्धविधिं पुण्यं कुर्य्याद्वापि पठेत्तु यः । (स ?) सर्व्वान् लभते कामानन्ते मुक्तिञ्च विन्दति । हढम्पति (: ?) यदत्र वेत्ति मतिमांस्तस्य श्राद्धफलं भवेत् । छपदेशानुमता च लोके तुल्यफलौ स्मृतौ ॥ ० ॥ ॥ ० ॥

**Colophon.** इति महामहोपाध्यायश्रीमत्कुल्लुकभट्टविरचित स्मृतिसागरे श्राद्धसागरः

समाप्तः । श्रीश्रीईश्वरी जयति । * ॥ ० ॥ श्रीहरिः हरः । श्रीदुर्गाय नमः श्रीरामाय नमः । श्रीहरिः

विवरणम्—महामहोपाध्यायश्रीकुल्लूकभट्टविरचितः श्राद्धसागरो नाम श्राद्धविषयकः कश्चिन्निबन्धस्तदीयस्मृतिसागरान्तर्गतः ।

---

**No. 447. यजुर्व्वेदीयश्राद्धतत्त्वम् ।** Yajurvedíya Sráddhatattwam. Substance, foolscap paper, 18×5 inches. Folia, 10. Lines, 6-10 in a page Character, Bengali Date, ? Appearance, fresh. Prose. Generally correct. Complete.

A copy of the work noticed in No. 422.

विवरणन्तूक्तपूर्व्वम् ।

---

**No. 448. वृषोत्सर्गप्रयोगः ।** Vrishōtsarga Prayogaḥ. Substance, country-made white paper, 9×3½ inches. Folia, 11. Lines, 3-10 in a page. Character, Nágara. Date, ? Appearance, very old, worn out, and slightly torn in parts. Not correct Complete.

A guide to the performance of the ceremony of offering an ox in honour of deceased parents. Anonymous.

**Beginning.** श्रीवेदो (द ?) व्यासाय नमः ॥ अथ काम्यवृषोत्सर्गप्रयोगो लिख्यते ॥ मूलवचनानुसारी ॥ मूलवचनानि हेमाद्र्यादिषु द्रष्टव्यानि ॥ तत्र कालः ॥ कार्त्तिकीवैशाख्याश्वयुजीपौर्णमास्यष्टकाचंद्रसूर्योपरागसंक्रांत्यादयो. (यः ?) कार्त्तिक्यां यो वृषोत्सर्गं कृत्वा नक्तं समाचरेत् ॥ शैवं पदमवाप्नोति शिवव्रतमिदं स्मृत ॥ देशाः शिवालय (शिवोक्ताः ?) पुण्यक्षेत्र गोष्ठ + + रादयः ॥ नीलवृषलक्षणं लोहितो यस्तु वर्णेन मुखे पुच्छे च पांडुरः ॥ श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते ॥

**End.** नरकेषु घोरेषु पतिता ये स्वकर्म्मणा । देवत्वं मानुषत्वं वा तिर्यक्प्रेतपिशाचता ॥ क्रमिकीटपतंगत्वं गता ये च स्वकर्म्मभिः ॥ तेषामुद्धरणीत्या (मुद्धरणार्थाय ?) जलमेतद्ददाम्यहं ॥ आब्रह्मस्तंबपर्यंतं जगत् तृप्यत्विति वदन् ॥ सर्वथाऽवन् (?) ॥ पिंडदानोत्तर षोडशीपिंडानि देयानि ॥

**Colophon.** वृषोत्सर्ग (:?) समाप्त: श्री श्री दर्शनाथ श्री १ श्री आदित्यलिंगात् श्री श्री कामवृषे ।

विवरणम्—वृषोत्सर्गप्रयोगो नाम वृषोत्सर्गविधानविषयकोऽयं निबन्धः ।

---

**No. 449. वृषोत्सर्गविधिः ।** Vrishōtsarga Vidhiḥ. Substance, country-made white paper 10×3½ inches. Folia, 15. Lines, 5–8 in a page. Character, Nágara. Date, 1886. Appearance, very old, worn out, torn, and slightly worm-eaten. Verse. Generally correct. Complete.

Extracts from the Náradíya Puráṇa on the ceremony of offering an ox in honour of deceased parents. Anonymous.

**Beginning.** श्रीगणेशाय नमः अथ वृषोत्सर्गः नत्वा महेश्वरं देवं गिरिजां च विनायकं ॥ नत्वोद्वाहविधि ( वृषोत्सर्गविधिं ? ) वक्ष्ये नारदीयपुराणतः तत्र विष्णुवचनं एकादशाहे प्रेतस्य यस्य चोत्सृज्यते वृषः प्रेतलोकं परित्यज्य देवलोकं स गच्छति । तथैव मनुः एकादशाहे प्रेतस्य यस्य नोत्सृज्यते वृषः प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपि एष्टव्याः बहवः पुत्राः शीलवन्तो गुणान्विताः तेषां संततियुक्तानां यद्येकोऽपि गयां व्रजेत् ॥ स यजेदश्वमेधेन वृषमोक्षं दविषाम् ॥ गौरीमुद्वाहयेत् कन्यां नीलं तु वृषमुत्सृजेत् सर्व्वेषामेव दानानां नीलोत्सर्गः प्रशस्यते ॥

**End.** धरित्री रत्नसंपूर्णा सशैलवनकानना । नीलवृषस्य मुक्तस्य फलेन समता-भजेत् ॥ उत्सृष्टे वृषभे दत्ते पदानि तु चतुर्दश भूयसीं च ततो दद्यादभिषेक-मतःपरम् ॥ आशिषं च ततो दद्याद्ब्राह्मणैर्वेदपारगैः ॥

**Colophon.** इति नारदीयपुराणोक्तवृषोत्सर्गविधिः ॥ संवत् १८८६ कार्त्तिक कृष्ण १ भौमवार ॥

विवरणम्—नारदीयपुराणोक्तवृषोत्सर्गविधिः ॥

---

**No. 450. वृषोत्सर्गप्रयोगः ।** Vrishōtsarga Prayogaḥ. Substance, country-made white paper, 8×3 inches. Folia, 11. Lines, 10 in a page. Character, Nágara. Date, ? Appearance, old, and slightly worm-eaten in parts. Prose. Correct. Complete.

Another work of the same name and on the same subject as that noticed in No. 448, compiled from the Dánahirávalí.

**Beginning.** श्रीगणेशाय नमः ॥ अथ वृषोत्सर्गप्रयोगः ॥ तत्र कालः ॥ कार्त्तिक्यां आश्वयुज्यां वैशाख्यां पौर्णमास्यां अष्टका चंद्रसूर्योपरागसंक्रात्यादयः ॥ माघ्यां आषाढ्यां फाल्गुन्यां चैत्र्यां वैधृतिव्यतीपातमन्वादिदिनछिद्रे क्रांतिसाम्ये अष्टकासु शातातपोक्तः यथाह चेति कौस्तुभे ॥

**End.** ततो यजमानः सांगतसिद्धार्थं आचार्याय तिलोदककुंभं शुभमहं संप्रददे ॥ हिरण्यवस्त्रगोदानरूपां दक्षिणां दत्वा प्रतिमादिसामग्रीं च दद्यात् ॥ रुद्रजापकाय प्रतिमारहितपूर्णपात्रसहितकलशं दद्यात् ॥ वृषवत्सतरीणां अलंकाराद्याचार्यो गृह्णीयात् ॥ १०० ॥ ५० । २५ । १० । दश वा ब्राह्मणा भोजनीयाः ॥ अन्येभ्यो दीनानाथेभ्यश्च भूयसीं दत्वा कांस्यपात्रस्थिताज्ये मुखं वीक्षेत ॥ एवं यथोक्तविधिना यस्तु नीलं ॥

**Colophon.** दानहीरावल्यां वृषोत्सर्गः ।

विवरणम्—दानहीरावलीसंगृहीतो वृषोत्सर्गप्रयोगः ।

---

**No. 451. वृषोत्सर्गः ।** Vrishōtsargah. Substance, country-made white paper, 10 × 4 inches. Folia, 16. Lines, 9–10 in a page. Character, Nágara. Date, ? Appearance, very old, worn out, torn, and worm-eaten throughout. Prose. Not correct. Complete.

A work treating of the same subject with an appendix containing the Rúdra Pátha. Anonymous.

**Beginning.** श्रीगणेशाय नमः ॥ ७ ॥ अथैकादशाहे निमंत्रणादिकनिरामिषमेकवारं भुक्ता (क्त्वा ?) रात्रौ विप्रनिवेशणम् (नम् ?) ॥ गन्धादि सर्व्वं भुक्ता जने (?) गृहे गोमयोपलिप्त दक्षिण + + + भूमौ द्विजमुत्तराभुखवेश्य (?) कृतापसव्यो दक्षिणाभिमुखे प्रणमितवामजानुः ॥ गतोसि दिव्यलोकं त्वं कृतान्तविहितात्पथ. ॥ मनसा वायुभूतेष (न ?) विप्रत्वाहं नियोजयेत् ॥ पूजयिष्यामि भोगेन इति पठित्वा विप्र दक्षण (दक्षिण ?) जानुं स्पृष्ट्वा ॥ ओँ अस्यां रात्रौ अमुकगोत्रस्य पितुरमुक (स्य ?) प्रेतस्य श एकादशा (ह ?) श्राद्धकरणाय भवन्तं ब्राह्मणमहमामन्त्रये ॥ इति पुष्पचन्दण (पुष्पचन्दन ?) ताम्बूलैरामन्त्रयेत् ॥

**End.** ओँ द्यौ. शान्तिरन्तरीक्ष ९ शान्तिः पृथिवी शान्तिरापः शान्तिरौषधयः शान्तिर्वनस्प शान्तिर्विश्वे देवाः शान्तिर्ब्रह्म शान्ति. सर्व्वंऽशान्तिरेव शान्ति रेधिस शांति (रौषधिषु शान्तिः ?) सर्व्वे भवतु । -

**Colophon.** इति षड्दगतदष्ट्री समाप्ता ॥ * ॥

विवरणम्—रुद्रपाठसहितउपोत्सर्गविधानविषयकोऽयं निबन्ध. ॥

---

**No. 452.** श्राद्धतत्त्वटीका । Śráddhatattwa Tíká. Substance, country-made yellow paper, 18 × 3½ inches. Folia, 133. Lines, 7–8 in a page. Character, Bengali Date, Śaka 1747. Appearance, very old, worn out, writing slightly effaced in parts. Prose. Generally correct. Complete

An explanatory key to the Śráddhatattwa of Raghunandana by Kás'iráma Váchaspati. The work has been published in the Bengali character in Calcutta.

**Beginning.** श्रीश्रीरामः ॥ नत्वा गुरोश्चरणपद्मरजांसि मुर्द्ध्न । श्रीकान्तकान्तचरणञ्च निधाय चित्ते । श्रीकाशीराममुकृती कृतिनां हिताय ॥ श्राद्धतत्त्वविकृतिं वितनीति यत्नात् ॥ स्मृतिशास्त्राम्बुधौ सौम्याकृतसेतुं जगद्गुरुं ॥ विदित विधु लोकेषु नमामि रघुनन्दनम् ॥ स्वकर्त्तव्यग्रन्थसमाप्तिप्रतिबन्धकविघ्नसंभावनाम्नि अतः संभावितताद्दशविघ्नविनाशाय ग्रन्थकारः परमेश्वरप्रणामरूपमङ्गलं कृतवान् तच्च शिष्यशिक्षार्थमादौ निबध्नाति प्रणम्येति । सच्चिदानन्द कर्म्मधारयसमासाश्रयणात् सत्यज्ञानसुखस्वरूपमित्यर्थः । एतच्च वेदान्तिमते नैयायिकमते तु सन्तौ नित्यौ चिदानन्दौ ज्ञानसुखे यस्य तं वेदान्तविस्तृतं वेदान्तशास्त्रप्रकाशित अनेन कृष्णस्य सच्चिदानन्द (नन्दत्वं ?) स्थिरीकृत ज्ञसत्वञ्च सूचितम् ।

**End.** प्रतिपत्तिकृत्तरक्रिया । द्विमासीनमिति अत्र अतीतेत्यध्याहार्य्यं । यदा द्विमासीनं संवत्सरं प्राप्य पुनस्तीर्थं यदि व्रजेत् तदा मुण्डनञ्चोपवासञ्च न कुर्य्यादिति शेषः । ततः द्विमासीनसंवत्सरादूर्द्ध यातु न कारयेत् ॥ यं प्रासूत समस्तशास्त्रनिपुणश्रीरामरुद्रात्मज. श्रीराधीनरवल्लभाख्यसुकृती सद्दीरचूडामणि । तेन श्रीयुतकाशीरामकृतिना यत्नेन निष्पादिता टीका शास्तिमुपहृत्यापि कृतिभिः शाम्यतेड्ग्यतां ॥ • ॥

**Colophon.** श्रीकाशीरामवाचस्पतिभट्टाचार्य्यविरचिता श्राद्धतत्त्वटीका समाप्ता । शकाब्दाः १७४७ । ९ । २२ । ५ ।

विवरणम्—काशीरामवाचस्पतिविरचिता श्राद्धतत्त्वटीका, सुप्रसिद्धेयम् ।

---

**No. 453.** श्राद्धचिन्तामणिः । Sráddha Chintámaṇiḥ. Substance, foolscap paper, 17 × 6 inches. Folia, 51. Lines, 8–13 in a page. Character, Bengali. Date, ? Appearance, not very old. Prose. Generally correct. Complete.

A work treating of the Śráddha ceremony under the name of Śráddha Chintámaṇi by Váchaspati Mis'ra noticed in No. 421.

विवरणन्तु क्रपूर्ब्बम् ।

---

**No. 454.** प्रेतश्राद्धव्यवस्थाकारिका । Preta Śráddhavyávasthákáriká. Substance, country-made colourless paper, 15 × 2½ inches. Folia, 23 Lines, 5–6 in a page. Character, Bengali. Date, ? Appearance, very old, and worn out. Verse. Generally correct. Complete.

This is really a copy of the work entitled Śuddhikáriká by Smártavágís'a noticed in No. 370; but as it contains verses on Preta Śráddha or the Śráddha ceremony regarding ghosts, it is entitled Preta Śráddha Vyávasthá.

**Beginning.** See No. 370.

**End.** पूर्ब्बे सम्वत्सरे श्राद्धं षोडशं परिकीर्त्तितं । तेनैव च सपिण्डत्वं तेनैवाब्दिक-मिष्यते ॥

**Colophon.** इति संचेपतः प्रेतश्राद्धव्यवस्थाकारिका' श्रीस्मार्त्तवागीशकृता विरिञ्चः ॥ ० ॥ ॥ ० ॥ श्रीरामो जयति ॥ ० ॥

विवरणन्तु क्रपूर्ब्बम्

---

**No. 455.** यतिसंस्कारः । Yati Saṅskáraḥ. Substance, foolscap paper, 5½ × 2½ inches. Folia, 19 Lines, 3–11 in a page Character, Nágara. Date, Samvat 1845. Appearance, very old, and slightly worm-eaten. Prose. Generally correct. Complete.

A work treating of the funeral ceremony of a Yati or hermit compiled from the Nágara Khaṇḍa. Anonymous

**Beginning.** श्रीगणेशाय नमः । सिद्धनंतरं पुत्रादि शिष्यो वा स्नात्वा (?) अधिकार-सिद्धार्थं वपनं कृच्छ्राचरणं कुर्य्यात् । तत्र संकल्पः । करिष्यमाण (करिष्य-

माषे ?) यतिसंस्कारे अधिकारसिद्ध्यर्थं कृच्छ्रत्रयात्मकं प्रायश्चित्तं यदाम्नात गोनिष्क्रयद्रव्यदानप्रत्याम्नाय (प्रत्याम्नाय ?) द्वारा यथाकालं अहमाचरिष्ये। प्रतिकृच्छ्रमेकैकं वा अहमाचरिष्ये। इति संकल्पपूर्व्वकं कृत्वा। वपनं च कुर्य्यात्। पुर्वाद्विरिक्तस्य वपनं नेति केचित्।

**End.** अनुवाकमिदं जपित्वा। हरिकीर्त्तनपुरःसरं च सद्भवं नृत्यं च कृत्वा तत् पात्रं च पुनर्मंडले संस्थाप्य चंदनाक्षतपुष्पाणि पूजार्थमिष्टानि बंधुभिः सह स्वयं धृत्वा विप्रान् प्रदक्षिणीकृत्य आनंदमानंदकरं प्रसन्नं ज्ञानस्वरूपं निज-बोधरूपं योगींद्रमीड्यं भवरोगवैद्यं श्रीमद्गुरुं नित्यमहं नमामि॥ गुरु-र्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः गुरुरेकं परं ब्रह्म तस्मै श्रीगुरवे नमः॥ अज्ञानतिमिरांधस्य ज्ञानांजनशलाकया चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः॥ एतैर्मंत्रैर्द्विजः पठन्। तीर्थराजं नमस्कृत्य गुर्व्वर्थं विप्रहस्तेन वा पादोदक-पात्रं दत्त्वा तदाज्ञया तद्दत्तं (?) तीर्थमत्रैव गृह्णीयात्। तत्र मंत्रः। अविद्या मूलशमनं सर्व्वपापोऽपाप १ मनं (?)। गुरो. पादोदकं चित्तं संसारदम नाशनं। इति प्राशयेत् तीर्थपुनादिकामनाया तु॥ शोषणं पापपङ्कस्य दीपनं ज्ञानचेतस.। गुरोः पादोदक चित्तं पुनर्पापप्रवर्द्धनम् इति गृह्णी-यात्। तान् पुनः प्रणम्य तानन्यांश्च दक्षिणाभिस्तोषयित्वा सन्न्यास (स्नान ?) पुरःसरं तानतुव्रज्य कर्म्मेश्वरार्पणं कृत्वा मुक्तयुतो मं जीतेति। तत भाग-दर्शमहालयतीर्थप्रयुक्तादिश्राद्धानि (श्राद्धानि ?) कुर्य्यात्। यतिमासे-वाराधनं च। प्रत्यब्द पार्व्वणोत्तरं चाराधनं चैवमेव। इत्य करपात्री यथाशक्तीन् ब्राह्मणानाहूय पादप्रक्षालनपूर्व्वकगंधादिभिरभ्यर्च्य भोज-येदिति।

**Colophon.** इति नागरार्य्यडानुमार्य्याचार्यानुग्रहीतो (त ?) आराधनप्रदीपः समाप्तः। संवत् १८७४ अंक ८ बुधे लि. टुम वाम्हणेन स्वार्थं परार्थं च॥ श्रीकाशी विश्वेश्वरार्पणमस्तु॥ काशी लिखितं॥

विषयम् —नागरखंडानुमार्याचार्यानुमतयतिसंस्कारविषयकोऽयं निबन्धः।

---

No. 456. यतिसंस्कारः। Yati Saṁskáraḥ. Substance, country made white paper, 13 x 4 inches. Folia, 9. Lines, 10-11 in a page. Character, Nágara. Date, ? Appearance, not very old, but slightly worm-eaten throughout. Prose. Generally correct. Complete.

Another copy of the same work.

**Beginning.** ॥ श्री ॥ यतिसंस्कारविधिः ॥ सिद्धानंतरं पुत्रादिः &c.

**Colophon.** इति नागरखंडानुसार्थाचारानुगृहीत आराधनप्रयोगः समाप्तः ॥ कन्याभार्यादिस्त्रीकर्तृकयतिसंस्कारे तु विप्रद्वारा वैदिकमंत्रकः स्वकर्तृको वा पौराणानामन्यतरमंत्रकः प्रयोग ऊह्यः । संनिकृष्टो यतेः पुत्रो यदि स्व पितृनाशनं । कृत्वा तु वपनं स्नात्वा शुद्धात्मा यतिसत्क्रियामिति पितृमेधपद्धतिस्थस्मृतिवाक्ये पुत्रपदस्याधिकारिमात्रपरत्वात् । अधिकारिसपादकं कृच्छ्राचरणं वपनं च विधवायाः सधवायाः परं कृच्छ्राचरणमेवेति विशेष' । असन्निकृष्टपुत्रादिविषये विशेषः पितृमेधपद्धतौ । असंनिकृष्टश्चेत् पुत्रः सिद्धिवार्त्तां पितुस्तदा । श्रुत्वेति शेष' । स्नात्वा वपनपूर्व्वं च शुक्लायां तु तदंतरा । दशम्यामेव कुर्यात्तु नारायणबलिं सुत इति । अस्यार्थ. । देशांतरगतः पुत्रो ब्रह्मीभूतस्य पितुः सिद्धेवार्त्तां श्रुत्वा वपनपूर्व्वं स्नात्वाचारप्राप्त पूजनादिदशाहातमविकृतं कृत्वा एकादशाहपार्व्वणादि सन्निकृष्टवदविकृत कुर्यात् इदं च कृष्णपक्षे मृतिश्रवणे शुक्लपक्षे तच्छ्रवणे तु वपनस्नानपूजनादि अविकृत । तत्र द्वितीयादिदिनमारभ्य नारायणबलिकालादर्वाक् यदि शुक्ल दशम्याः पातस्तदा तत्रैव नारायणबलिं कृत्वा एकादशेऽहनि पार्वणं (द्वा ?) दशेऽहन्याराधनमिति । इदं च पुत्रस्यैव न भ्रात्रादेः तद्वाक्ये पुनः सुतग्रहणात् मुख्याधिकारित्व तस्यापि भवति । पुत्रपदस्याधिकारिमात्रोपलक्षकत्वादिति सुधीभिरूह्यम् । एव कुर्व्वत. अश्वमेधादि फल ॥ ॥ इति यतिसंस्कारविधि निर्णय. समाप्तः ॥ ॥

विवरणन्तत्पूर्व्वम्

---

**No. 457. गयाश्राद्धपद्धतिः ।** Gayá Śráddha Paddhatiḥ Substance, country-made white paper, 9 × 3 inches. Folia, 52 Lines, 2-7 in a page. Character, Nágara. Date, ? Appearance, not very old, but slightly worm-eaten throughout. Prose. Generally correct. Complete.

A guide to the performance of the Śráddha ceremony as performed in honour of the dead at Gayá, based on rules observed by the followers of the Vájasaneyi branch of the white Yajurveda school, by Anantadeva, son of Uddhava.

**Beginning.** श्रीगणेशाय नमः ॥ अखंडानंदरूपाय शिवया सहचारिणे । नम ओंकारवाच्याय शिवायाभीष्टदायिने । नत्वा गदाधरं श्रीशं श्रीमदुद्धवसूनुना । श्रीमतानंतदेवेन गयायात्रादि लभ्यते । अथ नारायणभट्टरघुनाथभट्टाभ्यां प्रद

र्गितेन यथा वाजसनेयिशाखानुसारेण गयायात्राप्रयोगपूर्व्वकं गयाश्राद्ध-प्रयोग उच्यते। यात्रामुहूर्त्तदिनात् पूर्व्वदिने एकभक्तहविष्यभोजनब्रह्म-चर्य्यादिनियमाः कार्य्याः। तदुत्तरदिने कृतप्रातःस्नानादिनित्यक्रियो-देशकालौ संकीर्त्य करिष्यमाणगयायात्रांगतया उपवासं करिष्य इति संकल्पपूर्व्वकमुपवासः कार्य्यः। यात्रांगं गृहे च वपनं कार्य्यं न वा। अतो वपनं न कार्य्यं गयाश्राद्धार्थिना सर्व्वेति महाभारतोक्तेः। तदुत्तरदिने स्नानादिनित्यकर्म्म कृत्वा सम्पादितपूजोपकरणः स्वासने उपविश्याचम्य प्राणा-नायम्य देशकालौ संकीर्त्य करिष्यमाणगयायात्रायाः निर्विघ्नफलसिद्धये गणेशस्वेष्टदेवतानाञ्च पूजनं। ततः पुनर्देशकालौ संकीर्त्य करिष्यमाण-गयायात्रांगत्वेनास्मत्पितृपितामहप्रपितामहानां यथानामगोत्राणां सपत्नी-कानां तथा मातामहादीनां सपत्नीकानां च सोपस्करेण घृतेन हविषा श्राद्धं करिष्य इति संकल्पपूर्व्वकं घृतद्रव्यप्रधानकं घृतश्राद्धं पार्व्वणत्रयविधिना दर्श-वदेव कार्य्यं आभ्युदयिकश्राद्धवदेवेति केचिन्नेति नारायणभट्टरघुनाथ वाजपेयिप्रभृतय ।

End. योयः कश्चित्तीर्थयात्रान्तु गच्छेत् सुसंयतः स च पूर्व्वं गृहे स्वे। कृतोपवास. शुचिरप्रमत्तः संपूजयेद्भक्तियुतो गणेशं॥ देवान् पितॄन् ब्राह्मणांश्चैव साधून् धीमान् विप्रो वित्तशक्त्या प्रयत्नात्। प्रत्यागतश्चापि पुनस्तथैव देवान् पितॄन् ब्राह्मणान् पूजयेच्चेति ब्रह्मपुराणात्। तीर्थयात्रां चिकीर्षुः प्राक् विधायोपोषणं गृहे। गणेशं च पितॄन् विप्रान् साधून् शक्त्या प्रपूज्य च॥ कृतपारणको हृष्टो गच्छेन्नियमधृक् पुनः। आगत्याभ्यर्च्य पितॄन् यथोक्तफलभाग्भवेदिति वचनांतराच्च। पितृपूजा च श्राद्धमेव तत इष्टैर्बन्धुभिः सह भुञ्जीत॥ विदुषानंतदेवेन श्रीमद्बुद्धवसूनुना। योयं दत्तः कृतस्तेन प्रीयतां श्रीगदाधरः॥

Colophon. इति श्रीमद्द्विवेदि छड्डवात्मजेन द्विवेदिश्रीदेवात्मजेन द्विवेदि अनंतदेवेन विर-चिता वाजसनेयीशाखानुसारिणी गयापद्धतिः समाप्तिमगमत्॥ श्री॥ अथाष्टतीर्थयात्रा॥ प्रथमं रामगयाश्राद्धं॥ १॥ द्वितीयं गयाशिरसि॥ २॥ तृतीयं गयाकूपे श्राद्धं॥ ३॥ मुण्डपृष्ठे श्राद्धं चतुर्थं॥ ४॥ आदिगदायां श्राद्धं पंचमं॥ ५॥ धौतपदे श्राद्धं षष्ठं॥ ६॥ भीमगयायां श्राद्धं सप्तमं॥ ७॥ श्रीगदायां श्राद्धमष्टमं॥ ८॥ इत्यष्टतीर्थयात्रा समाप्ता॥ लेखकपाठकयोः शुभं भवतु॥ ॥ नमः श्रीगदाधराय॥ ॥

विवरणम्—द्विवेदिछड्डवात्मजद्विवेदिश्रीअनन्तदेवविरचिता वाजसनेयिशाखानुगता गयाश्राद्ध-पद्धतिः।

---

**No. 458. गयाश्राद्धपद्धतिः ।** Gayá Śráddha Paddhatiḥ. Substance, country-made white paper, 9 x 3 inches. Folia, 21. Lines, 6-7 in a page. Character, Nágara Date, ? Appearance, old. Prose. Correct. Incomplete.

A work on the same subject by Raghunandana, the famous author of the Smrititattwa.

**Beginning.** ॥ ॥ श्रीगणेशाय नमः ॥ ॥ आचमन प्राणायामकालज्ञानाते ओँ अश्वमेधसहस्रजन्यफलविलक्षणफलप्राप्तिकामः फल्गुतीर्थे स्नानमहं करिष्ये इति संकल्प(ल्य ?) फल्गुतीर्थे स्नानं कुर्यात्। ततो देवर्षिदिव्यपितृतर्पणानंतरं अमुकगोत्रोऽस्मत्पिता अमुकशर्म्मा तृप्यतां इद जलं तस्मै स्वधा नमः पितरं प्रीणयामि इत्यादिप्रयोगेण पित्रादितर्पणकरणं। ततो देवतार्चनादि कृत्वा ओँ अद्य गयाख्यतीर्थप्राप्तिनिमित्तक पार्वणश्राद्धमहं करिष्ये इति अर्घावाहनरहितं स्वगृह्योक्तरीत्या पार्वणं कुर्यात्। तदसंभवे पिण्डदानमात्रं वा कुर्यात्।

**End.** (नास्ति)

**Colophon.** (नास्ति)

विवरणम्—गयाश्राद्धस्य पद्धत्यन्तरम् सम्पूर्णम्।

---

**No. 459. गयासेतुः ।** Gayá Setuḥ Substance, country made white paper, 15 x 5 inches Folia, 44. Lines, 9-10 in a page. Extent, about 1060 ślokas. Character, Nágara. Date, ? Appearance, fresh, but slightly worm-eaten in parts Prose. Generally correct. Complete.

A work on the greatness of the sacred place Gayá, under the name of Gayá Setú, or a high way leading to Gayá, by Náráyana Bhatta, son of Rámes'var Bhatta. This is a part of his series entitled Tristhalí Setu.

**Beginning.** ॥ श्रीगणेशाय नमः ॥ वादीभयुक्तिकुंभस्थलदलनाकुंठमाननखगर्भात्। विकिरन्प्रमेयमुक्ता विद्यावनकेसरी गुरुर्जयति ॥ नत्वाखिलोद्धारधुरंधरं परं गदाधरं बुद्धिविशुद्धिसाधकं। संदिह्यमानार्थ विचार्य सादरं मया गयाकार्यसुदीर्यतेऽधुना ॥ सुतादिकर्त्तृकं चाद्य श्राद्ध यद्यासमीरितं ॥ पित्राद्युद्देश्यफलदं सा गया यागतोऽधिका ॥ ननु पुत्रादिकर्त्तृकाच्छ्राद्धाच्छ्राद्धोद्देश्यपित्रादिषु स्वर्गादिफलं भवतीत्यनुपपन्नं कर्म्मभिः कर्त्तर्यैव फलजन-

मात्। गाम्भीर्यं फलं प्रयोजकमिति तत्त्वचमत्वादिति तार्किकन्यायात्। अन्यदा प्रति प्रसंगात्। यद्यपि च जातेष्टाधिका कर्त्तर्य्यपि फलमुद्देत तथापि श्राद्धे पित्रादीनां देवतात्वात्तस्यां च कर्त्तव्यां फलजननाजनने वा तस्या अधि-कारित्वाभावाद्देवतात्वाभावापत्तेरुभयरूपतायां च फलभाक्त्वेनाधिकारित्वस्य कर्म्म प्रति प्राधान्याद्देवतात्वेन च तत्प्रत्येव गुणत्वादेकप्रतियोगिकैकनिष्ठगुण प्रधानभावरूपवैरूप्यस्य वाजपेयाधिकरणन्यायेनासंभवाज्जातेष्टौ पुत्रस्य देव तात्वाभावेनैतेषां विरोधानामभावादकर्तृनिष्ठफलजनने कर्तुंफलकत्वापत्तेः।

**End.** तथा तत्रैव पंचदिनान्येव गयाकृत्यमुक्तं। आद्यो यान मतंगस्य धर्मपृष्ठे परिकल्पिते। श्राद्धपिंडौ ततः कार्यौ मध्याह्ने कूपयूपयोः। ब्रह्मणः सरसि स्नात्वा कृत्वा यूपं प्रदक्षिणं। तृतीयदिवसे कुर्याच्छ्राद्धं पिंडाच(?)सेचनं। महा-नद्यामुपस्पृश्य तर्पये (तर्पये ?)त् पितृदेवताः। अक्षयान् लभते लोकान् कुलं चैव समुद्धरेत्। गदा शिरसि तत्कुर्याच्छ्राद्धपिंडौ चतुर्थके। पंचमे दिवसे गच्छेदक्षयवटसंज्ञकमिति। अत्र पुराणांतरे क्रमान्तरेति मुख्यत्वाद्येन। वायवीये। एतौत्पत्तिस्तदनुसार एव कार्य्य इति प्रागेवोक्तं। विष्णुलिंग-तीर्थान्यपि यथावकाशं वायवीयोक्तक्रमेण कार्य्याणि। यदा पदेष्वेव येन केन चित् क्रमेण क्रमतोऽक्रमतो वापि गयायात्रा महाफलेत्यापि रीतिरित्युक्तमेव। एवं गयाकृत्ये निर्व्यूढे ततो निर्गमनकाले गदाधरपूजास्तुतिप्रार्थनाः कार्या। स्तुता संप्रार्थयेद्देवमादिदेवं गदाधरमित्यग्निपुराणवचनात्। स्तुतिप्रार्थने प्रयोगे वक्ष्यते॥ ॥

**Colophon.** इति श्रीमद्रामेश्वरसूरिसुत नारायणभट्टविरचिते त्रिस्थलीसेतौ गयाप्रकरणे गयाकृत्यं समाप्तं। ग्रन्थसंख्या ४०६०। शुभमस्तु।

विवरणम्—नारायणभट्टविरचितो गयासेतुर्नाम गयामाहात्म्यविषयकोऽयं निबन्ध. त्रिस्थली-सेत्वन्तर्गतः।

---

**No. 460.** गयापद्धतिः। *Gayá Paddhatih.* Substance, country-made coloured paper, 12 × 3 inches. Folia, 14, (of which fol. 1 is wanting). Lines, 3-7 in a page, leaving a blank space of half an inch square. *Character,* Nágara. *Date,* ? Appearance, fresh. Prose. Generally correct. Complete, (except the first folium).

Another copy of the Gayá Śráddha Paddhati noticed in No 458

**Beginning.** (नास्ति)

End. गयाकूपे पिण्डदातुरश्वमेधफलप्राप्तिः फलं। अत्र प्रथमवर्षोपरि पतितादीनामपि पिण्डदा स्वर्गकामनया कर्त्तव्यं। गयाकूपभस्मना स्नाने पितॄणां नरकतारणं फलं॥ धौतपादनिःधौरणौ: सहर्षे रामपुष्करणीनामके स्नात्वा पित्रादिश्राद्धकरणे विशिष्ट एव पित्रादिब्रह्मलोकगमनं फलं। मुण्डपृष्ठायां श्राद्धस्य त्रिःसप्तकुलोद्धारः फलम्। मुमुक्षा गयाग्राममध्ये। वशिष्ठतीर्थे कुण्डे वा स्नात्वा वशिष्ठेशनमस्कारेऽश्वमेधतुल्यं फलं। गृध्रवटोत्तरे वशिष्ठाश्रमस्तत्र वशिष्ठकुण्डवशिष्ठेश्वरौ। धेनुकारण्ये कामधेनुपदेष्वपि पिण्डदानस्य कामधेनुनमस्कारस्य च प्रत्येकं पितृब्रह्मलोकनयन फलं॥ योनिगह्वरविमुक्तिपूर्व्वकपरब्रह्मगमनकामनया ब्रह्मयोनिप्रवेशनिर्गमौ कार्य्यौ गयाकुमारनमस्कारे ब्राह्मण्य फल्ल सोमकुण्डस्नानतर्पणपिण्डैः पितृसोमलोकनयनं फलं। काकशिलायां बलिकर्त्तुः सद्योमुक्तिफलं। स्वर्गद्वारे नमस्कारात् स्वर्गतदुत्तरब्रह्मलोकनयन फलं। आकाशगङ्गायां पिण्डदानेन नैर्म्मल्यपितृस्वर्गगमनफलं। अक्षयवटेश्वरप्रतिष्ठितामठाग्रे रुक्मिणीकुण्डं तत्पश्चिमे कपिलानाम्नी नदी तत्तीरे कपिलेश्वरस्तस्यां नद्यां छमासोमसमागमे स्नात्वा कपिलशनमस्कारात् पूजनाच्च स्वर्गः फलम्। महेश्वरकुण्डे श्राद्धकर्त्तुः स्वर्गफल। माहेश्वरीकुण्डे रुक्मिणीकुण्डे च श्राद्धकर्त्तुश्च स्वर्गफल॥ माहेश्वरीकुण्डे मङ्गलापूजा सर्व्वसौभाग्यप्राप्तिः फलं॥ ०॥

Colophon. इति श्रीरघुनन्दनभट्टाचार्य्यविरचिता गयापद्धतिः समाप्ता॥ ०॥ गदाधरपदद्वन्द्वे मतिरस्तु सदा मम॥ ०॥

विवरणम्—आर्त्तश्रीरघुनन्दनभट्टाचार्य्यविरचिता गयाश्राद्धपद्धतिः।

---

**No. 461. त्रिपिण्डीश्राद्धप्रयोगः।** Tripindí Śráddha Prayogaḥ. Substance, country-made white paper, 3 × 3 inches Folia, 17. Lines, 7–11 in a page. Character, Nágara. Date, ? Appearance, old Prose. Generally correct Complete

Another copy of the work noticed in No. 442.

विवरणमुक्तपूर्व्वम्।

---

**No. 462. कलिश्राद्धे मांसदानविचारः।** Kaliśráddhé Máṅsadánavicháraḥ. Substance, country-made white paper, 9 × 3 inches Folia, 15. Lines, 8–9 in a page Character, Nágara. Date, ? Appearance, very old. Prose. Generally correct. Complete.

A discussion on the question whether meat may be offered in the Śráddha ceremony as performed in the Kali Yuga, by Náráyana Bhatta, son of Rámes'vara Bhaṭṭa.

**Beginning.** श्रीगणेशाय नमः ॥ अत्र यद्यपि बहुस्मृतिपुराणेषु श्राद्धाङ्गत्वेन गुणफलार्थतया च मांसविधानं गुणविशेषपुरस्कारेण दृश्यते तथापि कलौ तन्निषेधः। अष्टका गोमघयैव श्राद्धमांसं तथा मधु। देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेदिति गुणार्थपुरुषार्थविशेषेण श्राद्धे निगममांसनिषेधात् ॥ अष्टका ऊढानुपभुक्ता पुनर्विवाहं वर्ज्जनीयेत्यर्थः। नच श्राद्धे मांसमिति निषेधान्वयद्वाराच्छ्राद्धार्थस्यैव निषेधे न तु फलार्थस्य काम्यं नियमस्य बाधकमिति न्यायेन गोदोहनवत् फलार्थेनैव पुरुषार्थनिषेधबाधेन वैपरीत्यादिति वाच्यम्।

**End.** तस्मात् श्राद्धे मांसदानविधीनां तद्वर्ज्जनविधीनां च देशभेदादिव्यवस्थितविषयत्वं युक्तमिति सिद्धं। सुव्यक्तं ब्राह्मणस्योक्तं मांस (सं ?) क्षत्रियवैश्ययोः। मधुप्रदानं शूद्रस्य सर्व्वेषां चाविरोधि यदिति वचनव्यवस्थया क्षत्रियवैश्ययोरेव मांसप्राप्तावपि सर्व्वोऽपि कलौ तन्निषेधस्तद्विषय एव ब्राह्मणस्य प्राप्त्यभावेन वर्ज्जनायोगात्। यदा तु प्रधानसम्बन्धस्य सर्व्वत्रानुषङ्गेण प्राधान्यमावश्यकमेव न तु व्यवस्था तदा सर्व्ववर्णविषयो निषेध इत्यलम्। किं च यदि लौकिकमांसदाननिवारणं नाङ्गीक्रियते तर्हि पूर्व्वोक्त-व्यासवचनेन छागोष्ट्रमेषा चाभक्ष्या इति कात्यायनवचनेन च गोमांसदानं कलावपि मानं कथं निवारयितुं शक्येतेत्यलं मांसरसलोलुपरलसैः सह विचारणेनेति ॥ । भट्टरामेश्वरसुतो भट्टनारायणः सुधीः। न्यायामृतसुसैकेनाबोधयत् मानसप्रदान् ॥

**Colophon.** इति श्रीनारायणभट्टकृतः कलौ श्राद्धे मांसदानविचारः समाप्तः ॥

विवरणम्—नारायणभट्टकृतः कलिश्राद्धे मांसदानविचारपरोऽयं निबन्धः।

---

No. 463. सन्ध्यापद्धतिः। Sandhyá Paddhatiḥ. Substance, country made white paper, 10 × 4 inches. Folia, 8, (of which fol. 1 is wanting). Lines, 5–12 in a page. Character, Nágara. Date, ? Appearance, very old, worn out, and torn in parts. Prose and verse. Generally correct. Incomplete.

A guide to the performance of the daily prayer three times a day, morning, noon, and evening, by one of the twice-born class. Anonymous.

**Beginning.** (नास्ति)

**End.** (नास्ति)

**Colophon.** (नास्ति)

विवरणम्—सन्ध्योपासनाप्रयोग: असम्पूर्ण: ।

---

**No. 464. सन्ध्याप्रयोग: ।** Sandhyá Prayogaḥ. Substance, country-made colourless paper, 6 × 4 inches. Folia, 19, (of which foll 1-2 are wanting). Lines, 9–12 in a page. Character, Nágara Date, ? Appearance, very old, worn out, torn, and slightly worm-eaten in parts. Prose and verse. Not correct. Complete, (except the first two folia) but without colophon.

Another work on the same subject. Anonymous.

**Beginning.** (नास्ति)

**End.** अथ जातवेदसमित्यादि संध्योपस्थानांतं पूर्वत् (पूर्व्ववत् ?)। विशेष इमं मे वरुण त्वा यामि तृचौ: अजिगर्त्ति: शुनशेप ऋषि: वरुणो देवता आद्या गायत्री त्रिष्टुप् वरुणोपस्थाने ओँ इमं मे वरुण शुधा हव मद्याच मृनय। त्वामेव स्फु राचके। स्वहयेन वरुणमुपस्थाय भूरित्यादि नमो ब्रह्मणे इति प्रदक्षिणचतुष्टयं कृत्वा। नत्वा यामि ब्रह्मणा वंदमानस्तदाशास्ते यजमानो हविर्भिः। अहेलमानो वरुणे इवोध्युरुशसमान आयु: प्रमोषी:। प्रसशा-दिदिश: साधिया नत्वा संध्यानमस्काराद्यभिवादनांतं प्राग्वत् कुर्य्यादिति सायंसध्याप्रयोग: ॥ ॥ श्रीरस्तु ॥

विवरणम्—सन्ध्योपासनाया: पुस्तकान्तरम् ।

---

**No. 465. सन्ध्याप्रयोग: ।** Sandhyá Prayogaḥ. Substance, country-made white paper, 4 × 2½ inches. Folia, 4 Lines, 8–9 in a page. Character, Nágara. Date, ? Appearance, not old, but marked by water stains throughout. Prose and verse. Generally correct. Incomplete.

Another work on the same subject. Anonymous.

**Beginning.** श्रीगणेशाय नम: ॥ ओँ केशवाय नम:। नारायणाय। माधवाय नम:। त्रिभिर्नामै: ( नामभि: ? ) आचम्य। गोविंदाय.। विष्णवे.। मधुसूदनाय.

त्रिविक्रमाय, । वामनाय, । श्रीधराय, । हृषीकेशाय, । पद्मनाभाय, दामोदराय, । संकर्षणाय, । वासुदेवाय, । प्रद्युम्नाय, । अनिरुद्धाय, । पुरुषोत्तमाय, । अधोक्षजाय, । नारसिंहाय, । अच्युताय, । जनार्दनाय, । उपेन्द्राय, । हरये नमः । श्रीकृष्णाय, । प्रणवस्य स्वयंभूः । ब्रह्मा ऋषिः । ऋषिः परमात्मा देवता देवी गायत्री छन्दः । प्राणायामे विनियोगः ।

End. (नास्ति)

Colophon. (नास्ति)

विवरणम्—सन्ध्योपासनायाः पुस्तकान्तरम् असम्पूर्णम् ।

---

No. 466. आत्मयोगः । Átmayogaḥ. Substance, country-made colourless paper, 9×3 inches. Folia, 5. Lines, 9–12 in a page. Character, Nágara. Date, ? Appearance, very old and slightly worm-eaten in parts. Prose and verse. Generally correct. Incomplete.

A work treating of the rite called A'tmayoga, or a rite performed to purify one's body and soul, especially when one takes to an ascetic life. Anonymous. It contains two folia more with a list *of some rites and ceremonies having no connection with the work.*

Beginning. श्रीगणेशाय नमः ॥ व्यस्तसमस्तव्याहृतीनां विश्वामित्र-जमदग्नि भरद्वाज-प्रजापतय ऋषयः । अग्निवायुसूर्य्यप्रजापतयो देवताः । दैवी, गायत्री, दैव्युष्णिक् दैवानुष्टुप् दैवी बृहत्यश्छन्दांसि । मम यजमानस्य पृथिवीतत्त्व-मूलाधारचक्र-शुद्ध्यर्थविनियोगः, भूः स्वाहा, ओं भुवः स्वाहा, वा, स्वः स्वा, पूर्यो, भूर्भुवः स्वः स्वा, प्रजा, ।

End. (नास्ति)

Colophon. (नास्ति)

विवरणम्—आत्मशुद्धिनिमित्तकात्मयागविषयकोऽयं निबन्धः ।

---

No. 467. यज्ञोपवीतसंस्कारविधिः । Yajñopavíta Sañskáravidhiḥ. Substance, foolscap paper, 10×4½ inches. Folia, 9. Lines, 2–9 in a page. Character, Nágara. Date, ? Appearance, fresh. Prose. Generally correct. Complete.

A guide to the performance of the sacred thread ceremony under the name of Yajńopavíta Sañskáravidhi. Anonymous.

**Beginning.** श्रीगणेशाय नमः॥ अद्येत्यादि एवं गुण, मम इतरेषां छंदादीनां कायशुद्ध्यर्थं पंचगव्यं करिष्ये। सुवर्णादिपात्रे ताम्रपात्रे पालाशपत्रे वा पंचगव्यं कार्य्यं। गायत्र्या गोमूत्रं। गंधद्वारेति गोमयं। आप्यायस्वेति चीरं। दधिक्राव्णु इति दधिः (?) शुक्रमसि ज्योतिरसि तेजोसि देवीवः सवितोत्पुनात्वाच्छिद्रेण पवित्रेण वसोः सूर्य्यस्य रश्मिभिः। गण देवानामनाधृष्टं देवयजनमसि इत्याज्यं। देवस्य त्वा, हस्ताभ्यामिति कुशोदकं।

**End.** यज्ञोपवीतमित्यस्य परब्रह्म परमात्मा त्रिष्टुप्। श्रौतस्मार्त्तकर्म्मानुष्ठानसिध्यर्थं (ड्यर्थं ?) यज्ञोपवीतधारणे विनियोगः॥ ओँ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत् सहजं पुरस्तात् आयुष्यमग्र्यं प्रतिमः च (मञ्च ?)। शुभ्रं यज्ञोपवीतं बलमस्तु तेजः। इति मंत्रेण दक्षिणं बाहुमुद्धार्य्य। यज्ञोपवीतं धारयित्वा चामेत्॥ ॥

**Colophon.** इति यज्ञोपवीतसंस्कारविधिः समाप्तः॥ श्रीरस्तु॥ ० ॥ श्रीदुर्गादेव्यै नमः॥ ०॥ श्रीकालीजी॥

विवरणम्—यज्ञोपवीतसंस्कारविषयकोऽयं निबन्धः।

---

**No. 468.** तुलाविधिः। Tulávidhih. Substance, country-made yellow paper, 16 × 3 inches. Folia, 4. Lines, 5–8 in a page. Character, Bengali. Date, ? Appearance, very old, and spoiled in parts. Prose. Generally correct. Complete.

A work treating of the Tulá rite, in which pots of various metals weighed against one's body are distributed among the Bráhmanas. Anonymous.

देवि त्वयि तस्मात्प्रमीनमः ॥ नमस्ते गोविन्द तुलापुरुषसंज्ञक । त्वं हरे तारयस्वास्मानस्मात् संसारकर्द्दमात् ॥ यथाप्राप्तं तथा लिखित ॥ ० ॥ ० ॥

**Colophon.** (नास्ति)

विवरणम्—तुलापुरुषदानविषयकोऽयं निबन्धः ।

---

**No. 469. पञ्चमहायज्ञप्रयोगः ।** Pañchamaháyajna Prayogaḥ. Substance, country-made colourless paper, 10 × 4½ inches Folia, 3. Lines, 6–13 in a page. Character, Nágara. Date, ? Appearance, very old, worn out, and worm-eaten throughout. Prose Generally correct. Complete (without colophon).

A guide to the performance of the five Maháyajnas daily performed by every one of the twice-born class. Anonymous.

**Beginning.** श्रीगणेशाय नमः ॥ नत्वा वीरेश्वर देवमापस्तम्बमुनि तथा प्रयोगः पञ्चयज्ञानां क्रियते तद्विदां मुदे ॥ अथ पञ्चमहायज्ञप्रयोग. ।

**End.** पितॄणां मासिकं श्राद्धमन्वाहार्य्यं विदुर्बुधा । तदामिषेण कर्त्तव्यं प्रशस्तेन प्रयत्नतः ॥ ८ ॥ यदेव तर्पयद्भिः पितॄन् स्नात्वा द्विजोत्तमः । तेनैव सर्व्वमाप्नोति पितृयज्ञक्रियाफलम् ॥ पितृयज्ञ तु निर्वर्त्य तर्पणाख्यं तु योऽग्निमान् । पिण्डान्वाहार्य्यकं कुर्य्याच्छ्राद्धमिन्दुक्षये सदा ॥ १ ॥

विवरणम्—पञ्चमहायज्ञानुष्ठानविषयकोऽयं निबन्धः ।

---

**No. 470. यजुर्व्वेदिसन्ध्याविधिः ।** Yajurvedi Sandyávidhiḥ. Substance, country-made ashcoloured paper, 14 × 3 inches. Folia, 6 Lines, 5–6 in a page, with a blank space of about half an inch square in the middle. Character, Bengali. Date, ? Appearance, very old, worn out, and partly torn. Prose and verse. Not correct. Complete.

A guide to the performance of the daily prayer as observed by the followers of the Yajurveda Taittiriya school. Anonymous.

**Beginning.** अथ सन्ध्याविधि (: ?) ॥ हिरण्यस्य श्रीं ऋतञ्च सत्यञ्चाभीद्धात्तपसोऽध्यजायत ततो (तो ?) रात्रि (त्र ?) जायत । ततः समुद्रोऽर्णव. समुद्रादर्णवा दधिसंवत्सरोऽजायत अहोरात्राणि विध (विदध ?) द्विश्वस्य मिषतो वशी सूर्य्याचन्द्रमसौ धाता यथा पूर्व्वमकल्पयत् दिवञ्च पृथिवीञ्चान्तरीक्षमथोस्वः इति मन्त्रेण

A guide to the consecration of a country house under the name of *Vanotsargavidhi*. Anonymous.

**Beginning.** श्रीगणेशाय नमः। अथ वनोत्सर्गविधिर्लिख्यते। तत्र शुभदिने चन्द्रताराद्यनुकूले वनपूर्व्वदेशे शो(शौ ?) चितायां भूमौ जयमानः (यजमानः ?) प्राङ्मुखोपविश्य॥ (प्राङ्मुख उप ?) ततो वाक्यं कृत्वा॥ देशकालौ स्मृत्वा। अद्येत्यादि आत्मनः सर्व्वपापक्षयपूर्व्वकयावद्वृक्षतजीरेणुपत्रपुष्पफलमूलत्वचाशाखाशिखास्थितिमहि-समस्ते (?) फलयुगत्रयदेवस्वर्गे समवासकामः एतदाम्र (?) वनारामप्रतिष्ठा-महं करिष्ये॥

**End.** ततः युवावध्वितमञ्जना चाद्यपुषं कारयं॥ ततो विसर्ज्जनम्। दधिपायसंव-पाठः। आशिषः पद्दणं। ब्राह्मणभोजनं। ततः सपरिवारादिभोजनम्।

**Colophon.** इति सर्व्वेतारामवनोत्सर्ज्जनविधिः समाप्तिः समातम् (?) शुभं (?) भूयात् सम्वत् १८५० मासोत्तमे मासे ज्येष्ठे मासे कृष्णे पक्षे त्रयोदश्यां बुधवासरे लिखितं नलुशीमिश्रकानकुल (?) काश्यां परमार्थः शुभमस्तु

विवरणम्—आरामाद्युपयोगिवनोत्सर्गविधिविषयकोऽयं निबन्धः।

---

**No. 473. वर्षकृत्यकौमुदी।** Varshakṛitya Kaumudí. Substance, country-made colourless paper, $22 \times 3\frac{1}{2}$ inches. Folia, 148. Lines, 4–8 in a page. Character, Bengali. Date, Sáka 1679. Appearance, very old, and worn out. Prose. Generlly correct. Complete.

A work treating of all the religious duties to be performed during the course of a year, under the name of Varshakṛitya Kaumudí, by Govindánandácharya, son of Gaṇapati Bhatta.

**Beginning.** श्रीसीतारामाभ्यां नमः। चिन्ताम्भोऽयति धातरि प्रजवधूर्व्विषेषु पाशीयति श्रीराजिष्णुवति प्रसादविहितश्यामाम्बुजश्रीयति। यस्मिन्नाचनभानुरी नन्दविमानेवाम्बुजेऽब्धीयति पौवौमारदराय यादवकुलोत्तंसाय तस्मै नमः॥ धुनोतु ध्यानमध्याकमनन्तविन्ताभिसम्भृत। गोविन्दवदनेन्दवपुपावक्षय जयध्वनिः॥ येन श्रीतिवपद्दभेषु नितरां मार्त्तण्डविख्यापित श्रीगोविन्द-पदारविन्दयुगले श्रीमामरावार्पितं वेदान्तश्रुतिमन्नतिविपदगोत्रैषे हिमा-द्रौयितं येषां श्री परिश्रीलितो गणपतिर्भट्टः सतां हर्म्यः॥ तदनुजन्मा विद्यामनुरागमधुलिकाभिरामित्रः। मधुरिपुपदारविन्द-मकरन्दमाधुरी-रसाभिज्ञः॥ श्रीशोत्याखिलधर्मपद्दानविकमं दृष्टा पुराणानपि मोक्षाः सम्य-

गयी विविच्य मुनिभिर्मन्वादिभिः संहिताः। श्रीमत्तातपदारविन्दविलसद्भृङ्गीभरीहेश्वतः श्रीगोविन्दकविः करोति ललितां वर्षक्रियाकौमुदीम्॥ अथ सम्वत्सरकृत्ये निरूपणीये प्रायशः कर्माधिकरणतया विहितानां तिथीनां प्राधान्यात् प्रथमं तावत्तिथिस्वरूपनिरूपणपूर्वकं कर्मोपयुक्तभाग निरूप्यते॥ तिथिस्वरूपमुक्तं सूर्यसिद्धान्ते। अर्कादिनि.सृतः प्राचीं प्रयात्यहरहः शशी। तच्चान्द्रमानमंशैस्तु ज्ञेया द्वादशभिस्तिथिः।

End. ॥ मद्यः यस्मै दद्यात् पिता चैनां भ्राता वानुमतः पितुः। तं शुश्रूषेत जीवन्तं संस्थितं च न लङ्घयेत्॥ व्यभिचारात्तु भर्त्तुः स्त्री लोके प्राप्नोति निन्द्यताम्। शृगालयोनिं प्राप्नोति पापरोगैश्च पीड्यते॥ पतिं या नाभिचरति मनोवाक्कायसंयुता। सा भर्त्तृलोकमाप्नोति सद्भिः साध्वीति कीर्त्त्यते॥ विशीलः कामवृत्तो वा गुणैर्वा परिवर्जितः। उपचर्य्यः स्त्रिया साध्व्या सततं देववत् पतिः॥ नास्ति स्त्रीणां पृथ + + + नात् पोषितं। पतिं शुश्रूषते येन तेन स्वर्गे महीयते॥ गोविन्दानन्दकृतिना कृतेयं वर्षकौमुदी। इमां + + + + + भजन्तु कृतकृत्यता॥ सर्व्वान्तर्यामिने तस्मै गोविन्दाय नमोनमः। यत्कृपा विदुषामस्मामनुरागप्रवर्त्तिनी॥ ०॥

Colophon. इति श्रीगोविन्दानन्दाचार्य्यकृता वर्षकौमुदी समाप्ता॥ ८॥ शकाब्दाः १६०८ तारिख. माह २० आश्विने इति॥ नवग्रगुरुतौ चन्द्रे कृष्णेपक्षे सुरदिने (?)। लिखितं बहुयत्नेन + + + + ॥

विवरणम्—वर्षकृत्यकौमुदीनाम सम्वत्सरकर्त्तव्ययावद्धर्म्मकृत्यविधानविषयकोऽयं निबन्धः श्रीगोविन्दानन्दाचार्य्यविरचितः।

---

**No. 474.** श्राद्धकल्पः। Śráddhakalpaḥ. Substance, country-made yellow and white paper, 16×6 inches Folia, 218. Lines, 9–10 in a page. Extent, 1900 ślokas. Character, Nágara Date, Samvat 1881. Appearance, fresh. Verse. Generally correct. Complete

Extracts from the Mahábhárata and several Puráṇas on the Śráddha ceremony under the name of Śráddha Kalpa. Anonymous.

Beginning. श्रीकृष्णाय नमः॥ अथ भारतोक्तं श्राद्धप्रकरणं लिख्यते॥ युधिष्ठिर उवाच॥ चातुर्वर्ण्यस्य धर्म्मात्मन् धर्म्माः प्रोक्ता यथा त्वया। तथैव मे श्राद्धविधिं कृत्स्नं प्रब्रूहि पार्थिव॥ १॥ वैशम्पायन उवाच॥ युधिष्ठिरेणैवमुक्तो भीष्मः शान्तनवस्तदा। इमं श्राद्धविधिं कृत्स्नं वक्तुं समुपचक्रमे॥ २॥

**End.** अनेन विधिना सम्यक् पूजयस्व पितॄन् क्रमात्। ततस्तप्स्यतेऽभीष्टं तत्प्रदत्ती नात्र संशयः॥ पितृपूजाविधिः सम्यक् अनंतरमहं पुनः। सर्वंतमाख्यामि विस्तरो भव मा शुचः॥ श्रीमित्युक्त्वाय देवर्षौराजस्वौ प्रययौ स्थितिं। तत्रैवान्तर्दधे राजन् क्षणेन स्पर्शमदि॥

**Colophon.** इति श्रीब्रह्माण्डपुराणोक्तश्राद्धकल्पं समाप्तं॥ समाप्तोऽयं (?) अष्टादशपुराणोक्तं श्राद्धप्रकरणं संपूर्णं ग्रंथसंख्या १८०० सं। १८॥ ८१ कार्त्तिक कृष्ण पक्ष ९ शनि



*No. 475.* भारद्वाजस्मृतियमस्मृती। *Bháradvájasmṛiti-Yamasmṛiti.* Substance, country-made white paper, 14×10 inches, (bound in the form of an ordinary book). Folia, 97. Lines, 16–22 in a page. Character, Nágara. Date, ? Appearance, very old, worn out, torn, and worm-eaten throughout. Verse. Not correct. Complete.

This codex contains three different works, viz., (1) Bháradvája Smṛiti, or rules on religious observances, rites &c., laid down by the sage Bháradvája, complete in 14 chapters; (2) Yama Smṛiti, or the rules of Yama (a sage of that name) on the same subject, complete in one chapter; and (3) Sapta Ṛishisammata Smṛiti, or the opinions of seven sages on the same subject, consisting of about 44 verses.

**Beginning.** हिमाद्रिशिखरे रम्ये सुखासीनं महाजने भरद्वाजमुनिश्रेष्ठं सर्वविद्यातपोनिधिं॥ कृष्णाजलि पुष्पगोत्रे ब्रह्मनिष्ठं जितेंद्रियं। समागम्य मुनिश्रेष्ठा भृग्वाद्या मुनिपुङ्गवाः॥ भृगुरत्रिर्वसिष्ठश्च शाण्डिल्यो रौहिणः क्रतुः। हारितो गौतमो गर्गः शंखः कात्यायनोऽङ्गिराः। मार्कण्डेयश्च माण्डव्यः कपिलो नारदश्शुकः। जमदग्निर्याज्ञवल्क्यः विश्वामित्रः पराशरः॥ एते चान्येपि मुनयः धर्मज्ञाः धर्मतत्पराः॥ सर्वोपचारैः सपू (पू ?) ज्य पचन चेदमब्रुवन्॥ भगवत्सर्वधर्मज्ञ (भगवन् सर्वधर्मज्ञ ?) सर्ववेदार्थपारगः (ग ?)। सर्वशास्त्रार्थतत्त्वज्ञ सर्वसत्कर्मकोविद॥ संध्यादिप्रमुखाः सर्वा नित्यनैमित्तिकाः क्रिया। यास्ता द्विजातिभिः कार्य्याः कथयस्व वक्तुमर्हसि: (सि ?)॥ इति पृष्टो भरद्वाजः तैर्महामुनिभिर्मुनिः। तान् प्रत्युवाच धर्मात्मा संतुष्टहृदयो भृशं॥ पृष्टा युष्माभिरधुना या' क्रियास्ता महर्षिभिः। यथाक्रमेण कथ्यते संध्याः प्रणतिपूर्व्विकाः (सध्या-प्रणतिपूर्व्विकाः ?)॥ नित्यानुष्ठानरहितैर्द्विजैरधिकृतागमाः। यस्मात् क्रतुश्च विधिवन्न भवंति फल-

मदाः ॥ तस्मात् सर्वप्रयत्नेन शुचिभूत्वा (शुचिर्भूत्वा ?) द्विजोत्तमः ॥ अनुष्ठानं प्रकुर्व्वीत प्रत्यहं शास्त्रचोदितं ॥ धर्मशास्त्रेषु (सर्व्वेषु ?) समस्तेष्वागमेषु च ॥ सारमुद्धृत्य वक्ष्यामि शृणुध्वमृषयोऽनघाः ॥

End. पवित्रोदकहस्तन्तु कुर्य्यादाचमनक्रियां ॥ नोच्छिष्टः स भवेदर्भी भुक्तो वा च्छिष्टं तु वर्जयेत् (स भवेद्दर्भी भुक्तोच्छिष्टं तु वर्ज्जयेत् ?) ॥ यं दिव्यस्य (यं दिं न्यस्य ?) पवित्रस्य न ते नाचमनक्रियाः आचामयन्तु (आचमेद् यस्तु ?) मोक्षात्मा यथा भीक्ता तथा भवेत् ॥ वामहस्ते कुशान् कृत्वा आचम्य प्रयतो भवेत् ॥ तान् कुशांस्तु परित्यज्य पुनराचम्य शुध्यति ॥ पिंडाश्च ये कुशादर्भो (?) यैः कुशैः पितृतर्पणं ॥ मूत्रोत्सर्गेषु ये दर्भास्तेषां त्यागो विधिष्यते (विधीयते ?) ॥ पवित्रं चिमुत्सृज्य (मुत्सृज्य ?) प्रक्षिपेत् क्षितिमंडले ॥ पात्रे तु निक्षिपेद् यस्तु तदा चांद्रायणं चरेत् ॥ कुशमूले भवेद्ब्रह्म कुशमध्ये तु केशवः । कुशाग्रे तु स्वयं रुद्र एव धर्मः सनातनः ॥ जपेच्चतुर्युगं चैव चरिष्टेरष्टकं यथा ॥ शंखाना च शतं ज्ञेयं प्रवालैस्तु सहस्रक ॥ मुक्ताभिर्दशसहस्रं (साहस्रं ?) मणिभिर्लक्षमुच्यते ॥ कुशग्रंथ्या च पद्माक्षैरुद्राक्षैः कोटिरुच्यते ॥ गृहे दशगुणं जप्यं गोष्ठे शतगुणं भवेत् ॥ नदीतीरे सहस्रं स्यादनंतं च शिवालये ॥ वज्रं यथा सुरेंद्रस्य शूलहस्ते हरस्य च (शूलं हस्ते हरस्य च ?) चक्रायुधं यथा विष्णोरेवं विप्रकरे कुशाः ॥ नारदेन वशिष्ठेन काश्यपेन च कौशिकैः ॥ पैंगलेन च मार्गेण दृष्टो धर्मः इति स्मृतः ॥

Colophon. इति श्रीसप्तऋषिसम्मतं धर्मशास्त्रं संपूर्णः (र्णम् ?) ॥ मिदं (इदं ?) पुस्तकं श्रीगंगानारायणस्य स्वाचरितं ॥ ० ॥

विवरणम्—पुस्तकेऽस्मिन् त्रयोधर्मशास्त्रनिबन्धाः सन्ति (१) भरद्वाजस्मृतिः (२) यमस्मृतिः (३) सप्तऋषिसम्मत धर्मशास्त्रञ्च इति ॥

---

No. 476. प्रवरविवेकः। Pravaravivekaḥ. Substance, country-made colourless paper, 14 × 4 inches Folia, 4. Lines, 6-12 in a page. Character, Nágara. Date, ? Appearance, very old, worn out, and slightly torn. Prose. Generally correct Complete.

A complete copy of the work noticed in No. 66, but under a different name.

End. अथ प्रयोगः। अमुकसमितचास्यहं शके गुरौ च शुभे काले शुभे मुहूर्ते

चार्पदान् प्रथम्य समानप्रवरादिकन्याविवाहे ये प्रायश्चित्तमुपदिशंतीति तान् पृष्ट्वा तैरनुज्ञातोऽज्ञानतो विवाहे चांद्रायणमेकं ज्ञानतश्चांद्रायणद्वयं चरेदिति। अथ प्रायश्चित्तस्य संकल्पः ममाज्ञानकृतसमानप्रवरगोत्रादिकन्यापरिणयजनितप्रत्यवायपरिहारार्थं चांद्रायणप्रत्याम्नायत्वेन रुद्रदैवत्यं गोमेयं नानानामगोत्रेभ्यो ब्राह्मणेभ्यस्त्रिभ्यः संप्रदद इति जलमुत्सृजेत्। प्रत्यक्षगोब्राह्मणयोः संभवे प्रथमं तयोः पूजनं कृत्वा हिरण्यं दक्षिणां दद्यात्। केचिदप्रत्यक्षयोरपि देयसंप्रदानयोः पूजनमिच्छंति। दक्षिणां च हिरण्यं दत्त्वा। अत्र वधूरपि समानप्रवरा सभ्याज्ञाता समानप्रवरेण वरेण सह ममाज्ञानजनितविवाहदोषपरिहारार्थं चांद्रायणप्रत्याम्नायत्वेन गोवय दास्य इति संकल्प्य त्रिभ्यो ब्राह्मणेभ्यो दद्यात्। तैरनुज्ञातौ कृतव्रतौ गृही भवतः। अतः कन्यादाता कृच्छ्रप्रत्याम्नायगोदानेनात्मशुद्धिं संपाद्य सभ्यैरनुज्ञातः शुद्धां दुहितरं सालंकारां भारद्वाजाय काश्यपाय वा इमां कन्यां दुहितृत्वेन तुभ्यं ददे इति दत्त्वा दक्षिणां दद्यात्॥ ततस्तस्मात् सुतां प्रतिगृह्य हृतकुंभे तत्समीपे वा स्वशाखोक्तगर्भाधानमंत्रैः संस्कृत्य जातकर्म-नामकरणान्नप्राशनचौलकर्मभिरावृत्तैः संस्कृत्य तच्छाखीयमधुपर्कमंत्रांश्चावयित्वा दैवज्ञाभिमते शुभे मुहूर्ते इमां भारद्वाजगोत्रां काश्यपगोत्रां वा दुहितरम् अमुकवेदाध्यायिने वराय तुभ्यमहं भार्यात्वेन प्रतिपादयामीति दद्यात्। ततो वरो गृहीतमधुपर्कः स्वगृह्योक्तवैवाहिकमंत्रांश्चतुर्थीकर्मपर्यंतान् पठेत्। ततो विप्रैः कृताशीर्वचनः तान् दक्षिणाभिः संतोष्य यथाशक्ति ब्राह्मणान् भोजयेत्॥ ॥

**Colophon.** इति विद्यादर्शे प्रवरनिर्णयः समानप्रवरादिविवाहे प्रायश्चित्तपूर्वतत्संग्रहविधिश्च समाप्तः। लिखित श्रीमदनं (?) न।

विवरणम्—प्रवरनिर्णयो नाम प्रवरविषयकोऽयं निबन्धः। यस्मिन्नस्मिन् समानप्रवरादिविवाहे प्रायश्चित्तानुष्ठानपूर्वकतज्ञार्थापुनःसंग्रहविधिश्च वर्त्तते।

---

**No. 477.** **लक्षहोमपद्धतिः।** Lakshahoma Paddhatiḥ Substance, country-made white paper, 12 × 4 inches Folia, 23. Lines, 3–9 in a page. Character, Nágara. Date, ? Appearance, very old, worn-out, and worm-eaten throughout. Not correct. Complete.

A manual on the performance of one hundred thousand homas or offerings of clarified butter in the sacred fire, in honour of the grahas

मदाः ॥ तस्मात् सर्वप्रयत्नेन शुचिभूत्वा (शुचिर्भूत्वा ?) द्विजोत्तमः ॥ अनुष्ठानं प्रकुर्वीत प्रत्यहं शास्त्रचोदितं ॥ धर्मशास्त्रेषु (सर्वेषु ?) समस्तेष्वागमेषु च ॥ सारमुद्धृत्य वक्ष्यामि सप्तर्षिमतयोऽनघाः ॥

End. पवित्रोदकहस्तस्तु कुर्यादाचमनक्रियां ॥ नोच्छिष्टः स भवेदर्भो भुक्तो वाच्छिष्टं तु वर्जयेत् (स भवेद्दर्भो भुक्तोच्छिष्टं तु वर्जयेत् ?)॥ यं दिव्यस्य (यं विन्यस्य ?) पवित्रस्य न ते नाचमनक्रियाः आचामयस्तु (आचमेद यस्तु ??) मौहात्मा यथा भोक्ता तथा भवेत् ॥ वामहस्ते कुशान् कृत्वा आचम्य प्रयतो भवेत् ॥ तान् कुशांस्तु परित्यज्य पुनराचम्य शुध्यति ॥ पिंडार्था ये कुशादर्भा (?) यैः कुशैः पितृतर्पणं ॥ मूत्रोत्सर्गेषु ये दर्भास्तेषां त्यागो विधिष्यते (विधीयते ?)॥ पवित्रं चिमुत्सृज्य (मुत्सृज्य ?) प्रक्षिपेत् चितिमंडले ॥ पात्रे तु निक्षिपेद यस्तु तदा चांद्रायणं चरेत् ॥ कुशमूले भवेद्ब्रह्म कुशमध्ये तु केशवः । कुशाग्रे तु स्वयं रुद्र एव धर्मः सनातनः ॥ अपैश्चतुर्युगं चैव अरिष्टैरष्टकं यथा ॥ शंखानां च शतं ज्ञेयं प्रवालैस्तु सहस्रक ॥ मुक्ताभिर्दशसहस्रं (साहस्रं ?) मणिभिर्लक्षमुच्यते ॥ कुशग्रंथ्या च पद्माक्षैरुद्राक्षैः कोटिरुच्यते ॥ गृहे दशगुणं जप्यं गोष्ठे शतगुणं भवेत् ॥ नदीतीरे सहस्रं स्यादनंतं च शिवालये ॥ वज्रं यथा सुरेंद्रस्य शूलहस्ते हरस्य च (शूलं हस्ते हरस्य च ?) चक्रायुधं यथा विष्णोरेवं विप्रकरे कुशाः ॥ नारदेन वशिष्ठेन कश्यपेन च कौशिकैः ॥ पैंगलेन च गार्गेण दृष्टो धर्मः इति श्रुतः ॥

Colophon. इति श्रीसप्तऋषिसम्मतं धर्मशास्त्रं संपूर्णः (र्णम् ?) ॥ मिदं (इदं ?) पुस्तकं श्रीगंगानारायणस्य स्वाचरितं ॥ ० ॥

विवरणम्—पुस्तकेऽस्मिन् त्रयोधर्मशास्त्रनिबन्धाः सन्ति (१) भरद्वाजस्मृतिः (२) यमस्मृतिः (३) सप्तऋषिसम्मत धर्मशास्त्रञ्च इति ॥

---

**No. 476. प्रवरविवेकः ।** Pravaravivekaḥ. Substance, country-made colourless paper, 14 × 4 inches Folia, 4. Lines, 6-12 in a page. Character, Nāgara. Date, ? Appearance, very old, worn out, and slightly torn. Prose. Generally correct. Complete

A complete copy of the work noticed in No. 66, but under a different name.

End. अथ प्रयोगः । अनस्तमितवास्यहहे शुक्रे गुरौ च शुभे काले शुभे मुहूर्ते

कर्यादान् प्रथम्य समानप्रवरादिकन्याविवाहे ये प्रायश्चित्तमुपदिश्यतेति तान् प्रश्न तैरनुज्ञातोऽज्ञानतो विवाहे चांद्रायणमेकं ज्ञानतश्चांद्रायणद्वयं चरेदिति। अथ प्रायश्चित्तस्य संकल्पः। ममाज्ञानकृतसमानप्रवरगोत्रादिकन्यापरिणयजनितप्रत्यवायपरिहारार्थं चांद्रायणप्रत्याम्नायत्वेन रुद्रदैवत्यं गोत्रयं नानानामगोत्रेभ्यो ब्राह्मणेभ्यस्त्रिभ्यः संप्रदद इति जलमुत्सृजेत्। प्रत्यक्षगोब्राह्मणयोः संभवे प्रथमं तयोः पूजनं कृत्वा हिरण्यं दक्षिणां दद्यात्। केचिदप्रत्यक्षयोरपि देयसंप्रदानयोः पूजनमिच्छंति। दक्षिणां च हिरण्यं दत्त्वा। यत्र वधूरपि समानप्रवरा सम्याज्ञाता समानप्रवरेण वरेण सह ममाज्ञानजनितविवाहदोषपरिहारार्थं चांद्रायणप्रत्याम्नायत्वेन गोत्रय दास्य इति संकल्प्य विप्रेभ्यो ब्राह्मणेभ्यो दद्यात्। तैरनुज्ञातौ कृतव्रतौ शुद्धौ भवतः। ततः कन्यादाता कृच्छ्रप्रत्याम्नायगोदानेनात्मशुद्धिं संपाद्य ब्राह्मणैरनुज्ञातः शुद्धां दुहितरं सालंकारां भारद्वाजाय काश्यपाय वा इमां कन्यां दुहितृत्वेन तुभ्यं ददे इति दत्त्वा दक्षिणां दद्यात्॥ ततस्तस्मात् सुतां प्रतिगृह्य घृतकुंभे तत्समीपे वा स्वशाखोक्तगर्भाधानमंत्रैः संस्कृत्य जातकर्म नामकरणान्नप्राशनचौलकर्मभिरागतैः संस्कृत्य तच्छाखीयमधुपर्कमंत्रांश्रावयित्वा दैवज्ञाभिमते शुभे मुहूर्ते इमां भारद्वाजगोत्रां काश्यपगोत्रां वा दुहितरम् अमुकवेदाध्यायिने वराय तुभ्यमहं भार्यात्वेन प्रतिपादयामीति दद्यात्। ततो वरो गृहीतवधूकरः स्वगृह्योक्तवैवाहिककर्मचतुर्थीकर्मपर्यंतान् पठेत्। ततो विप्रैः कृताशीर्वचनः तान् दक्षिणाभिः संतोष्य यथाशक्ति ब्राह्मणान् भोजयेत्॥ ॥

**Colophon.** इति विवादर्शे प्रवरनिर्णयः समानप्रवरादिविवाहे प्रायश्चित्तपूर्वतत्संग्रहविधिश्च समाप्तः। लिखितं श्रीमदनं (?) न।

विवरणम्—प्रवरनिर्णयो नाम प्रवरविषयकोऽयं निबन्धः। ग्रन्थेऽस्मिन् समानप्रवरादिविवाहे प्रायश्चित्तानुष्ठानपूर्वकतत्कार्यापुनःसंग्रहविधिश्च वर्णते।

---

**No. 477.** लक्षहोमपद्धतिः। Lakshahoma Paddhatiḥ. Substance, country-made white paper, 12 × 4 inches. Folia, 23. Lines, 3–9 in a page. Character, Nágara. Date, ? Appearance, very old, worn-out, and worm-eaten throughout. Not correct. Complete.

A manual on the performance of one hundred thousand homas or offerings of clarified butter in the sacred fire, in honour of the grahas

or planets, performed to bring about the fulfilment of one's desires under the name of Lakshahoma Paddhati, by Náráyaṇa Bhaṭṭa, son of Rámes'vara Bhaṭṭa.

**Beginning.** श्रीगणाधिपतये नमः ॥ ॥ आचार्य्य ब्रह्म-ऋत्विग्वरणं कुर्य्यात् ॥ तत्र आचार्य्यवरणमंत्रः ॥ आचार्य्यो वै यथा स्वर्गे शक्रादीनां बृहस्पतिः ॥ तथा त्वं मम यज्ञेऽस्मिन्नाचार्य्यो भव सुव्रत ॥ तथा ॥ यथा चतुर्मुखो ब्रह्मा सर्व्वे लोके पितामहः ॥ तथा त्वं मम यज्ञेऽस्मिन् ब्रह्मा भव द्विजोत्तमः ॥ ततो ऋत्विग्वरणं (तत ऋत्विग्वरणं ?) कुर्य्यात् ॥ तत्र मंत्रः ॥ अस्य यागस्य निष्पत्तौ भवंतीभ्यर्थितो मया (भवन्तोऽभ्यर्थिता मया ?) ॥ सुप्रसन्नं प्रकर्त्तव्यं शांतिकं विधिपूर्व्वकम् ॥ इति ऋत्विग्वरणं ॥ ऋत्विजश्चत्वारोऽष्टौ द्वादश वा शौघ्रकार्य्ये षोड़श वा द्वतान् (व्रतान् ?) सर्व्वान् आचार्य्यमेव वा मधुपर्केणार्हयेत् ॥ ततः शुक्लांबरः शुक्लमाल्यानुलेपः सपत्नीकः साचार्य्यः सब्रह्मा स ऋत्विको (स ऋत्विक् ?) यजमानः संपूर्णकलशहस्तः स मंगलघोषेण भद्रं कर्णेभिरिति मंत्रं पठेन्मंडपं प्रदक्षिणीकृत्य पश्चिमद्वारेण प्रविशेत् ॥

**End.** ॥ श्रीं तत्सद्ब्रह्मार्पणमस्त्विति जलं क्षिपेत् । ततः सदस्यांश्चंदनाक्षतपुष्पवस्त्रदक्षिणाभि. पूजयित्वांज बद्धा (अञ्जलिं बद्धा ?) मया यत् कृतं लक्षहोमाख्यं कर्म्म तत्कालहीनं भक्तिहीनं श्रद्धाहीनं भवतां ब्राह्मणानां वचनात् विष्णोः प्रसादात् सर्व्वं संपूर्णमच्छिद्रं चास्तु ॥ ततः संपूर्णमस्त्विति वदेयुः । यस्य स्मृत्येत्युक्त्वा (यस्य स्मृत्वेत्युक्त्वा ?) ब्राह्मणानां संभाषिणो गृहीत्वा तान् सानुनयं विसृज्य ॥ ब्राह्मणान् भोजयित्वा दीनानाथांश्चान्नादिना संभोज्य ॥ स्वयं सुहृन्मित्रादियुता स उत्साहं (युतः सोत्साहं ?) भुंजीतेति ॥ एवं प्रकारेण कुर्व्वतः फलमाख्ये (?) ॥ अनेन विधिना यस्तु ग्रहयज्ञं समाचरेत् सर्व्वान् कामानवाप्नोति प्रेत्य स्वर्गे महीयते ॥ लक्षहोमस्तु कर्त्तव्यो यदि वित्त भवेद् गृहे । यतः सर्वानवाप्नोति कुर्व्वन् कामान् विधानतः ॥ पूज्यते शिवलोके च वस्वादित्यमरुद्गणैः ॥ यावत् कल्पशतान्यष्टावथ मोक्षमवाप्नुयात् ॥ सकामो यस्त्विमं कुर्य्याल्लक्षहोमं यथाविधि ॥ सर्व्वान् कामानवाप्नोति पदं चानंतमश्नुते ॥ पुत्रार्थी लभते पुत्र धनार्थी लभते धनं । भार्य्यार्थी लभते भार्य्यां कुमारी च शुभं पतिं ॥ भ्रष्टराज्यस्तथा राज्यं श्रीकामः श्रियमाप्नुयात् ॥ यं यं चिंतयते कामं तं तं प्राप्नोति पुष्कलं ॥ निष्कामः कुरुते यस्तु परं ब्रह्माधिगच्छति ॥

Colophon. इति श्रीरामेश्वरभट्टसुतनारायणभट्टकृत लक्षहोमपद्धतिः समाप्ता ॥ ॥ छ ॥ ॥ छ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ छ ॥ ॥ श्रीविश्वेश्वरार्पणमस्तु ॥ ॥ श्रीरामाय नमः ॥ ॥ श्रीकृष्णाय नमः ॥ श्रीरस्तु ॥

विवरणम्—लक्षहोमनामकमहायज्ञविशेषानुष्ठानपद्धतिरूपोऽयं निबन्धः ॥

---

**No. 478.** वृक्षप्रतिष्ठा । Vriksha Pratishthá. Substance, country-made yellow paper, 16 × 2½ inches. Folia, 12. Lines, 5-6 in a page. Character, Bengali. Date, ? Appearance, very old, worn out, and slightly torn. Generally correct. Complete.

A manual on the ceremonies performed on the occasion of *giving up of a tree for the use of the public. Anonymous.* The codex contains also another incomplete work treating of the marriage ceremony of a Kadali plant with an As'vattha.

Beginning. श्रीश्रीहरिः शरणं । अथ वृक्षप्रतिष्ठा । तडागकृत् वृक्षरोपी इष्टयज्ञश्च यो द्विजः । एते स्वर्गे महीयन्ते ये चान्ये सत्यवादिनः । तस्मात्तडागं कुर्व्वीत आरामांश्चैव रोपयेत् । यजेच्च विविधैर्यज्ञैः सत्यञ्च परिपालयेत् ॥ एवं कृत्वा नरः स्वर्गे मोदते कालमक्षयं ॥ यावन्ति फलपत्राणि तावत् कालं सुरालये । सर्व्वयज्ञसमायुक्तो वसेत् स्वर्गपुरे नरः ।

End. वृक्षेषु संस्थिता देवा गन्धर्व्वाप्सरसो गणाः । नक्षत्रयोगाश्च तथा निवसन्ति निरामयाः ॥ धर्म्मपालात् यतो लोकाः क्षुत्पिपासाश्रमार्द्दिताः । सर्व्वे विश्रम्य गच्छन्ति संतुष्टास्तुष्टमानसाः । कृमिकीटपतङ्गाद्या ये चान्ये विहगाः स्थिताः । छायासन्तानकामाय ये च जीवार्थिनः खगाः । ते सर्व्वे प्रति मोदन्तु हविःक्षिप्रतिकर्षिताः ॥ विधानेन स्थितार्थाय स्थापितोऽयं मया तरुः । यदत्र विहितं पुण्यं तत् सम्पूर्णं भवतु च ॥ किन्नरोरगपालि देवगन्धर्व्वकिन्नराः । तथा ऋषिगणाश्चैव संश्रयन्ते महीरुहान् । ये केचि-द्वने लोका ये चाकाशविहारिणः । देवा मनुष्याः पशवो यथायथ सरी-सृपाः । पुष्पिताः फलवन्तश्च तर्पयन्तु हि मानवाः ॥ ततो वृक्ष त्रिःप्रद-क्षिणीकृत्य वादकदानं विप्रेभ्यश्च ब्राह्मणेभ्यो दद्यात् । श्रीश्रीकर्म कुर्य्यात् । ततोऽच्छिद्रावधारणं कुर्य्यात् । ततो माषान् विकीर्य्य ब्राह्मणपुरतो गृहं गच्छेत् । यथाशक्ति ब्राह्मणान् भोजयेत् ।

Colophon. इति वृक्षप्रतिष्ठाप्रदीपः ॥

विवरणम् —इच्छप्रतिष्ठाविधानविषयकोऽयं निबन्धः। पुस्तकस्यास्यान्तेऽश्वत्थकदलीविवाहविषयक. कश्चिदसम्पूर्णो निबन्धो विद्यते।

---

*Note.*—The fragment of the incomplete work mentioned above begins thus:—

अद्येत्यादि काश्यपगोत्रं अश्वत्थरूपिणं वासुदेवं पाद्यादिभिरभ्यर्च्य कदलीकन्यां विवाहेन दातुं भवन्तमहं वृणे। ततो गन्धादिभिरभ्यर्च्य कदलीवृक्षं वस्त्रेणाच्छाद्य ओं अद्येत्यादि गौरीविष्णुप्रीतिकामः एतां कदलीकन्यां गौरिविष्णुदेवताकां काश्यपगोत्राय अश्वत्थरूपिणे वासुदेवाय तुभ्यमहं संप्रददे। दक्षिणां अश्वत्थहत्ताय दत्त्वा ब्राह्मणाय दद्यात्।

**End.** (नास्ति)

**Colophon.** (नास्ति)

विवरणम्—अश्वत्थकदलीवृक्षविवाहविषयकोऽयं कश्चिदसम्पूर्णो निबन्धः।

---

**No. 479. ब्राह्मणसर्व्वस्वं।** Bráhmaṇa Sarvasvam. Substance, country-made yellow paper, 18 × 3 inches. Folia, 85. Lines, 1–6 in a page. Character, Bengali. Date, ? Appearance, not fresh. Prose. Not correct. Complete.

A manual on the performance of the rites and religious observances, as performed by the followers of the Yajurveda Mádhyandini Śákhá, by Mahámahopádhyáya Haláyudha, the chief Pandit at the court of Rájá Lakshmana, the last Hindu king of Gaud.

**Beginning.** ओं नमो गणेशाय॥ दृष्टा (दृ?) पारस्करं सूत्रं श्रुतिमालोक्य सर्व्वशः व्यासस्य वचनं दृष्टा (दृ?) मुनीनां संहितास्तथा॥ युक्त्या च स्वयमारोप्य वृद्धानां सर्व्वसम्मतम्। हलायुधेन वा + + + + + श्चोपदेशिनी॥ सन्ध्यास्नानादिकं नित्यं श्राद्धं सर्व्वं प्रकीर्त्तितं॥ अन्यत्र सकलं वाच्यं॥ यजुषामाह्निकं मया। तत्रायं क्रमः॥ रात्रिशेषे समुत्थाय रात्रि + + + + वासः परिधाय शिराचम्य शौचार्थमुदकं मृत्तिकाञ्च गृहीत्वा मूत्रपुरीषयोरुत्सर्गं कुर्य्यात्॥

**End.** अद्येत्यादि अमुकगोत्रस्य पितुरमुकदेवशर्म्मणः एकोद्दिष्टविधिना सांवत्सरिकश्राद्धकर्म्माच्छिद्रमस्तु। वाराणस्या (वाराणस्यां?) कृतमस्तु ब्राह्मण

चचनात् सर्व्वं साङ्गमस्तु किन्तु कर्म्माणि हरिकीर्त्तनेन कथं संपूर्णं भवेत्। तदुक्तं व्यासेन न्यूनातिरिक्तता छिद्रा कर्म्मो वैदोक्तकर्म्मणां हरिस्मरणमात्रेण संपूर्णफलदायकः (?)। तस्मात् श्रीविष्णुस्मरणात् सर्व्वं साङ्गमस्तु। श्राद्धं साङ्गं यातुमिति (जातमिति ?) ज्ञापनं कुर्य्यात्॥ सांवत्सरीक (रिक ?) श्राद्धं समाप्तं ॥ ० ॥ ० ॥ सन्ध्यास्नानादिकं कृत्वा श्राद्धं सर्व्वमुदाहृतं॥ चनेन विधिना ये च कुर्व्वहि: (कुर्व्वन्ति ?) स्वर्गगामिन:॥ ❧

Colophon. इति महामहोपाध्यायहलायुधेन विरचिता ब्राह्मणसर्व्वस्वपद्धतिरियं समाप्ता॥ ० ॥ ० ॥ ० ॥ ० ॥ श्रीगङ्गापास (?) प्रर्त्तव: साचरमेतत्॥ ० ॥ ० ॥ ० ॥

विवरणम्—महामहोपाध्यायहलायुधविरचितब्राह्मणसर्व्वस्वनामक यजुर्व्वेदिकर्म्मविषयकोऽयं निबन्ध:॥

---

No. 480. वृषोत्सर्गपद्धति:। Vrishotsarga Paddhatiḥ. Substance, country-made colourless paper, 10 x 4 inches. Folia, 6. Lines, 10-11 in a page. Character, Nágara. Date, ? Appearance, very old, worn out, and slightly worm-eaten in the margin. Prose Generally correct. Complete.

A manual on the same subject as that mentioned in Nos. 448, 449, 450, 451.

Beginning. श्रीगणेशाय नम:॥ अथ श्रीनवीन-वृषोत्सर्गं। तत्र लक्षणं। श्रीव-त्सायाः पयस्विन्याः पुत्रं विशालं त्रिहायणमेकहायन वा। प्रोक्तवर्णो भवे विप्रो लोहित: क्षत्रियस्य(?)। पीतवर्णो भवेद्वैश्य: शूद्र: कृष्ण: स्मृतो बुधै:॥१॥ लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुर:। श्वेत: खुरविषाणाभ्यां स नीलो वृष उच्यते॥२॥ लोहितो पिङ्गलो नर्म्मो दद्यात् ममैव मत्स्यपुराणादि बहूनि वचनानि॥

End. स्वपक्षकरीषामांसाद्यादि श्वाबाल्लांय दद्यात्। तत: स्वं ब्राह्मणान् भोज-येत् तदहं तदर्द्धदिनेन वा। ततो भूयसीं दक्षिणां दद्यात् ततो वाचयेत् श्रीकर्म। ततो यजमानस्य वामश्रोत्रेण पूर्व्वोक्तमन्त्रैरभिषेक: कार्य्य:। यस्य कृत्वा प्रमादात् न्यूनातिरिक्तम् यदिदं सम्पूर्णमस्तु। दैवताद्यं कृत्वा ब्राह्म-णान् (वा ?) दक्षिणा पुण्याभिर्व्वाचयित्वा गृहीयात्। एवं वृषोत्सर्गविधिना यस्तु नीलं समुत्सृजेत्। सर्व्वपापविनिर्मुक्त: सदा स ब्रह्मचारिव इति ब्रह्मवचनं। ततो बन्धुभिस्सार्द्धं सह भुञ्जीत। कमलाकरं दैवज्ञादिरचना: विस्तरसाहेव लिखितं॥

**Colophon.** ॥ ॥ इति श्रीरामेश्वरभट्टसुतनारायणभट्टकृता वृषोत्सर्गपद्धतिः समाप्ता ॥ ६ ॥ छ ॥ कोनेरिश्रीतिविद इदं पुस्तकं वृषोत्सर्गाख्यं ॥ ॥ आत्मार्थं परार्थं च । शुभमस्तु ममाप्तं ॥ ॥ श्रीरामाय नमः ॥ ॥ छ ॥

विवरणम्—नारायणभट्टकृतश्रौतकमतानुगतवृषोत्सर्गपद्धतिरूपोऽयं निबन्धः ।

---

**No. 481. तृचाभास्करः।** Tṛichábháskaraḥ. Substance, country-made white paper, 10 × 4½ inches. Folia, 150. Lines, 9 in a page. Character, Nágara. Date, ? Appearance, not old, but worm-eaten throughout, especially the first page in which a good many letters have disappeared. Prose. Not correct. Incomplete.

A work treating of the worship of Súrya or the sun for removing bodily illness under the name of Tṛichábháskara.

**Beginning.** ॥ श्रीगणेशाय नमः ॥ ॥ कविरपि गुरुरपि मूढो यद्वामगतः कलाधरोप-कलः ॥ भास्करमेकमकरोत् गभीरभारतीजातं ॥ १ ॥ गंभीरराज इति दीक्षितभारतीति योन्वर्थनाम समवाप नृपाङ्कुरेभ्यः । तस्यात्मजो भृशमवेत्य बहुन्निबंधान् यथात्पद' ( यथात्पदः ? ) किमपि भास्कररायनाम ॥ २ ॥ भारत्युपाख्य बधमंडलयाय्यजूक (यायजूक ?) गभीरराजसुतभास्कररायसूरिः ॥ नानानिबध ( निबध ? ) मत विप्रतिपत्तिलब्धजन्मानमप्रतिहतं + + + समुच्छिनत्ति ॥ ३ ॥ सत्येव दोषाः कतिचिद्विशेषादयापि तोषाय (?) सतां समैषा ॥ कृति(?)र्हि मुख्या तृचभास्कराख्या गुणाधिकाप्यापि तवद्यभिख्या ॥ ४ ॥ आमाय: कामरूपादुहिणसुतनदशाविदा ( प्लाविताद्या ? ) प्रतीचीं । गांधारात्सिंधुस.द्रां ( सिंधुमद्रां ? ) द्रघुवरचरिता ( रघुवररचिता ? ) दा च सेतोरवाचः ॥ आकेदाराद्दीच्यु स्तुहिनगहनत. सति विद्वत्समाज्ञा ये ये त नैष ( तानैष ? ) धनः सुखयतु समजान् कथमत्कर्तुमीडे ॥ ५ ॥ इह क खलु धर्मार्थकाममोचाणा चतुर्विधपुरुषार्थानामपि साधनार्थोपयुक्तमिदं पाचभौतिकं स्थूलशरीरं ॥ शरीरमाद्य खलु धर्मसाधनमित्यभियुक्तप्रसिद्धे. ।

**End.** (नास्ति)

**Colophon.** (नास्ति)

विवरणम्—तृचाभास्करो नाम गंभीरदीक्षितसुत भास्कररायसूरिविरचितो शारीररोगोपशम-फलक सूर्योपासनाविषयको निबन्धविशेषः ।

---

**No. 482.** ग्रहयागः। Grahayágaḥ. Substance, country-made white and red paper, 18 × 3 inches. Folia, 24. Lines, 4–8 in a page. Character, Bengali. Date, ? Appearance, very old, and worn out. Prose. Generally correct. Incomplete.

The codex contains fragments of two different works, (1) Grahayágaḥ, or a manual treating of the worship of the Grahas (planets) for removing their evil influence upon a man; (2) Dhanadá Prayogaḥ, or a manual on the worship of the Goddess Dhanadá, another name of Durgá, by one desirous of wealth, the worship being performed during seven days at night. The first has no beginning, and the latter is without an end.

**End of the first work.** अथ प्रत्यधिदेवतानि। सूर्य्यवामे अग्निं। सोमवामे अपः। मङ्गलवामे पृथिवीं बुधवामे विष्णुं। बृहस्पतिवामे इन्द्रं। शुक्रवामे शचीं। शनैश्चरवामे प्रजापतिं। राहुवामे सर्पान्। केतुवामे ब्रह्मान् (?)। मण्डल-दक्षिणे विनायकं। पश्चिमायां दुर्गां। वायव्यां वायुं। उत्तरस्यां आकाशं। प्राच्यां अश्विनौ। ओं भूर्भुवः स्वरित्यनेन प्रत्येकमावाह्य स्थापयेत् पूजयेत्।

**Colophon.** इति ग्रहयागः समाप्तः ॥ * ॥ श्रीरामशरणशर्म्मणः पुस्तकमिदं स्वाक्षरञ्च ॥ जयमङ्गली तव जननी जानकि जनको महीपतिर्जनकः। भर्त्ता त्रिभुवनकर्त्ता विधिरपि दासः कथं वने वासः ॥ ० ॥ अथ ग्रहयज्ञद्रव्याणि ॥ यागमण्डपः १ कुण्ड १ कुण्डनिर्म्माता १ ग्रहवेदी १ पञ्चवर्णगुण्डिका १ ग्रहमण्डलं १ रक्तवर्णवस्त्रयुग्मं १ शुक्लवर्णवस्त्रयुग्मं १ पीतवर्णवस्त्रयुग्मं १ कृष्णवर्णवस्त्रयुग्मं विचित्रवर्णवस्त्रं १। चन्द्रातपवस्त्रं १। वरणवस्त्राङ्गुरीयकासनानि ४प्रस्थ। धूपाङ्गुरीयकानि ८। रक्तचन्दनं १। श्वेतचन्दनं १। कुङ्कुमगन्धं ॥ शरमागन्धः, सरलाधूपः १। देवदारुधूप १। दशाङ्गधूपः १। अगुरुधूपः १। गुग्गुलधूपः। कृष्णागुरुधूपः १। सर्व्वाभावे गुग्गुलुधूपं १। आतपतण्डुलाः १। यवतण्डुलाः १। अक्षततिलाः १। गुड़ा १। मधु १। दुग्धं। दधिघृतं २ मध्यर्ह दधि १। कदलीफलानि। ताम्बूलानि। छागमांसं। छागदुग्धं। छागीकर्णरक्तं। सर्व्वाभावेऽन्यद्द्रव्य। होमघृतानि। ४०। स्रुचः ।१। स्रुवः १। उदूखलं १। मुषलं १। दर्व्वी १। मिदर्भ १। चमसः १। सूर्पः १। कुशाः। उदुम्बरसमिधः। कुशपात्रं। आज्यस्थाली। यज्ञकाष्ठानि। घटकालिकाः। स्थालिकादि। अर्कसमिधः। पलाशसमिधः। खदिर-समिधः। अपामार्गसमिधः। अश्वत्थसमिधः। उदुम्बरसमिधः। शमी-समिधः। दूर्व्वासमिधः। कुशसमिधः। दक्षिणादक्षिणा। भोजनं च।

अश्वदक्षिणा। छत्रदक्षिणा। काञ्चनदक्षिणा। पीतवस्त्रयुग्मदक्षिणा। अभावे वस्त्रमात्रं दक्षिणा। अन्नदक्षिणा। तन्मूल्यं वा। कृष्णाधेनुदक्षिणा। अन्यवर्णा वा गौः। लौहदक्षिणा। छागदक्षिणा। सर्व्वाभावे काञ्चनं रजतं वा दक्षिणा। कलसद्वयं। स्थाली द्वादश। १२। रुद्रमालस्य द्वादशपात्राणि। १२। ग्रहपूजाद्रव्याणि ग्रहयागप्रयोगपुस्तके लिखितानि ॥ ० ॥ ० ॥ ० ॥ ओँ तत्सत् ॥ ० ॥

**Beginning of the last work.** ॥ अथ धनदाप्रयोगः ॥ अद्येत्यादि बहुधनप्राप्तिकामो धनदादेवताया धं श्रीं ह्रीं रतिप्रिये स्वाहा इति मन्त्रस्याद्यारभ्य सप्त वारान् प्रतिरात्रौ अष्टोत्तरसहस्रसंख्यकजपहोमजपमहं करिष्ये। इति सङ्कल्प। पूजां कृत्वा चन्दनेनानुलिप्य दुग्धदधिखण्डपायसमधु नैवेद्यं दत्त्वा जपेत् ॥

**End.** (नास्ति)

**Colophon.** (नास्ति)

विवरणम्—धनदापरपर्य्यायश्रीदुर्गापूजापद्धतिरूपोऽयं निबन्धः ॥

---

**No. 483. अन्नमेरुदानपद्धतिः।** Annamerudána Paddhatiḥ. Substance, country-made yellow paper, 20 × 2½ inches. Folia, 2. Lines, 6–7 in a page. Character, Bengali. Date, ? Appearance, very old, and worn out. Verse. Generally correct. Complete.

Extracts from the Matsya Puráṇa on the gift of an Anna Meru, or a hillock of rice.

**Beginning.** ओँ नमो गणेशाय ॥ अथान्नमेरुदानविधिः। मत्स्यसूक्ते। अन्नमेरोर्विधिं वक्ष्ये यत् कृत्वा न हि शोचति। राजराजेश्वरो भूत्वा स्वर्गलोके महीयते ॥ भोगान्तेऽन्नन्तु पदवीमायात्यत्र संशयः ॥ स्वदेहदीर्घं कूटं स्यात् सूक्ष्मान्नस्य सुविस्तृत। सूक्ष्मवस्त्रावृत कुर्य्यात् पताकाभिरलङ्कृत। घृतदुग्धसितायुक्त मधुपर्कवनान्वितम्। मुद्गमाषतिलैर्युक्त दिक्षु गोधूमशोभितं ॥

**End.** अद्येत्यादि अमुकगोत्रः श्रीअमुकदेवशर्म्मा श्रीकविमुक्तत्वराजराजेश्वरत्वपूर्व्वकस्वर्गलोकमहीयमानत्वकामः श्रीविष्णुप्रीतिकामो वा इदं स्वदेहदीर्घसूक्ष्मान्नमयसुविस्तृतसूक्ष्मवस्त्रावृतपताकाद्यलङ्कृतदुग्धशर्करायुतं मधुपर्कमुद्गमाषतिलगोधूमादियुतरूप्यपट्टवेष्टितं मेरुं विष्णुदैवतं यथासम्भवगोत्रनाम्ने ब्राह्मणायाहं सम्प्रददे ॥ ततो दक्षिणा अद्येत्यादि कृतैतत् स्वदेहदीर्घादि-

विशिष्यान्विताश्वमेधदानकर्मणः प्रतिष्ठार्थं दक्षिणामित्यादि। ततोऽश्वमिदं प्रजापतिदैवतं ब्रह्मदानात् पर दानमित्यादि पठेत्। ततोऽच्छिद्रावधारणं कृत्वा शान्तिं कुर्यात्।

**Colophon.** इति मत्स्यपुराणीयाश्वमेधदानपद्धतिः समाप्ता ॥ श्रीं तत्सत् ॥

विवरणम्—मत्स्यपुराणसङ्गृहीताश्वमेधदानपद्धतिरूपोऽयं निबन्धः ।

---

**No. 484.** ग्रहहोमः । Grahahomaḥ. Substance, *country-made* yellowish paper, 17 × 2 inches. Folia, 6. Lines, 3–6 in a page. Character, Nágara. Date, ? Appearance, old. Prose and verse. Generally correct. Complete.

A collection of Ṛik Mantras recited in the offering of clarified butter to the Grahas, with explanatory notes on both the margins. The codex contains also a treatise on a propitiatory rite performed, *when a cow brings forth a calf when the sun is in the sign Leo of the Zodiac, under the name of Siṅhádhikaraṇaka Goprasava* Sáuti.

**Beginning.** श्रीं आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यञ्च हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् स्वाहा ॥ सूर्यस्य होममन्त्रः ॥ १ ॥

**End.** श्रीं केतुं कृण्वन्नकेतवे पेशो मर्य्या अपेशसे समुषद्भिरजायथाः स्वाहा ॥ ॥ ९ ॥ केतूनां होममन्त्रः ॥ श्रीदुर्गादासदेवशर्मणः स्वाक्षरं पुस्तकम् ॥ शकाब्द १८१०

**Colophon.** (नास्ति)

विवरणम्—नवग्रहहोमविषयकसटीकवैदिकमन्त्रसङ्कलनरूपोऽयं ग्रन्थः ।

---

**No. 485.** सम्बन्धचूडामणिः । Sambandha Chúḍámaṇiḥ. Substance, country made yellow paper, 16 × 3 inches. Folia, 5. Lines, 4–5 in a page. Character, Bengali. Date, 1712 (Śaka or Samvat, not mentioned). Appearance, old. Not correct. Complete.

A work treating of the prohibited degrees of relation in marriage, under the name of Sambandha Chúḍámaṇi. Anonymous.

**Beginning.** ओँ नमो गणेशाय ॥ असपिण्डा च या मातुरसगोत्रा च या पितुः सा प्रशस्ता (प्रशस्ता ?) द्विजातीनां दारकर्म्मनि (कर्म्मणि ?) मैथुने ॥ मातृपदं मातामहपरं असपिण्डा चेति चकारात् मातुरसगोत्रा चेति चकारात् पितुरसपिण्डा च दारकर्म्मणि भार्य्यात्वसम्पादककर्म्मणि मैथुने मिथुनशब्दवाच्य स्त्रीपुरुषसाध्ये कर्म्मणि। पितृपक्षे सापिण्ड्यं साप्तपौरुषं मातामहपक्षे तु सापिण्ड्य पाञ्चपौरुषं ॥ पञ्चमात् सप्तमादूर्द्ध मातृतः पितृतः क्रमात् सपिण्डता निवर्त्तेत सर्व्ववर्णेस्वयं (ष्वयं (?)) विधिः। सन्ताने भिज्यते (भिद्यते ?) यस्मात् पूर्व्वजादुभय एव (नच ?) तमादाय गणेद्धीमान् वरं यावच्च कन्यकां ॥ अत्र सप्तमगणनप्रतियोगी पितृबन्धुः ॥ पञ्चमगणनप्रतियोगी मातृबन्धुः। ब्रह्मपुराणं ॥ सप्तमीं पितृपक्षाच्च मातृपक्षाच्च पञ्चमीं ॥ उद्वहेत द्विजो भार्य्यां न्यायेन विना (विधिना ?) नृप सप्तमिं (मीं ?) पञ्चमीं परिहरेदिति शेष.। पितृपक्षात् पितृतश्चकारात् पितृबन्धुतश्च ॥ मातृपक्षात् मातामहात् चकारात् मातृबन्धुतश्चेत्यर्थ. ॥ बान्धवाः ॥ श्रीदुर्गा ॥ पितुः पितुःस्वसुः पुत्राः पितुर्मातुःस्वसुः सुताः पितुर्मातुलपुत्राश्च विज्ञेया पितृबान्धवाः। मातुर्मातुःस्वसुः पुत्रा मातुर्मातुःस्वसुः सुताः। मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः ॥

**End.** समानगोत्रां प्रवरां समुद्वाह्योपगम्य (पगम्य ?) च तस्यामुत्पाद्य चाण्डालं ब्राह्मन्या(ण्या ?) देव हीयते ॥ लेपभुजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः ॥ पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम् ॥ आदिपुरुषमादाय सप्तमीपर्य्यन्ता न विवाह्या.। एषां मध्ये त्रिगोत्रान्तरिता चेत् विवाह्या शूद्रादौ तु पञ्च तीन् परिहरेत् इति दिति (?) शूलपानिः (णिः ?) नैषा आप्त (प्तं ?) सम्मता ॥ समानप्रवरा चापि शिष्यसन्ततिरेव च ब्रह्मदातुर्गुरोश्चैव सन्ततिः प्रतिषिध्यते ॥ अथाध्यापयितुर्गुरोस्तद्विवाहमन्त्राध्यापयितरि ॥

**Colophon.** इति सम्बन्धचूडामणिः समाप्तोऽयं ॥ ० ॥ ० शौ(सौ ?)रचैत्रस्य अष्टादशदिवषे (से ?) गुरुवासरे + + गैते समाप्तोयं यद्दन्तः (यस्यः ?)। श्रीरामगोपालशर्म्मण. शकिय (स्वकीय ?) पुस्तकं चेति ॥ १७४२ ॥

विवरणम्—सम्बन्धचूडामणिर्नाम विवाहयोग्यसम्बन्धनिर्णयविषयकोऽयं निबन्धः।

---

**No. 486. मनुसंहिता।** Manu Sañhitá. Substance, country-made white paper. Although the codex is entitled Manusañhitá, it really contains fragments of four different works of different descriptions viz., (1) Manu-

saṁhitá, (2) Vyávahárádhyáya of Yájñavalkya, (3) a commentary of the Vyávahárádhyáya, (4) Bhavishyottara Purána. The fragments are too small to deserve any further description.

मनुसंहितेति मन्त्रितेऽपि पुस्तकेऽस्मिन् चतुर्णां भिन्नविषयकाणां पुस्तकानामंशमात्रं वर्त्तते ततश्च परित्यक्तमिदमस्माभिः।

---

No. 487. R. अधिकरणकौमुदी।* Adhikarana Kaumudí. Substance, palm leaves, 24 x 2 inches. Folia, 125. Lines, 3–4 in a page. Character, Bengali. Date, ? Appearance, nearly fresh. Generally correct. Complete.

Another copy of the work noticed in No. 229.

विवरणमूलपूर्व्वम्

---

No. 488. विश्वादर्शः। Visvádarśah. Substance, country-made white Bikáneer paper, 12 x 6 inches. Folia, 13. Lines, 7–12 in a page Extent, 146 ślokas. Character, Nágara. Date, Sáka 1819, Samvat 1954. Appearance, fresh. Correct. Complete.

A work treating of religious duties generally performed by the Hindus, under the name of Visvádars'a by Kavikánta Sarasvatí, son of A'dityácharya, divided into four káṇḍas or chapters, viz., A'chárakáṇḍa, Vyávahárakáṇḍa, Práyas'chittakáṇḍa, and Jñánakáṇḍa.

**Beginning.** श्रीगणेशाय नमः। स्वस्त्यस्तु धन्वन्तरये जयति जगदेकजनकः सम्यग् हृदयाम्बुजे मयं ज्योतिः विभुः परात्पर्णं विश्वमूर्त्तिः श्रीहरीरामः १ धर्म्माधिकारिषस्तु सुनयः सर्वे जयंति यथाथा निम्नं यथानि येषां दिशांत + + + + विश्रमन् पदाभिरामा कवि + + ये. यद्वदयुत्सवीरे इव + + + २ स्फुरति सुहृते विमले विश्रा + रपि वि स्पष्ट सर्वस्य सर्वधर्म्म-धर्म्मूर्त्ति यत्रे ३ तत्र मदनकाशे सम्भराशे चायहीक: श्रीमहामाभिधानं

---

* This codex is one of a number of MSS. recently bought for the Sanskrit College Library from the collection of the late Kaviraj Ramánátha Nyáyaratna. Codices belonging to this collection have been marked with the letter R.

विधुतकलिमलं प्रद्यधर्मस्य मूलं धृत्वा ब्राह्मे मुहूर्त्ते सकलसुकृतीभिः (तिभिः ?) संप्रबुद्धैकपाम्यं न्वा मन्वविमुख्यानपि निखिलमुनीन् धर्मधामप्रदीपान् विद्यादर्शं विधास्ये विमलमतिकृतिर्धर्मशास्त्रस्य रं × (?) १

End. कृत्तिः सुकृत्तिः सपुज्य मलंकृतमिदं कृतं आसमुद्रं समुद्रं च राजते धन्यराजते ॥ ११ ॥ प्रबंधे विज्ञानेश्वरविरचितेत्यादि महतो महीभर्त्तुः कौर्त्तिः त्रिजाति यथा पुण्यकृदिति तथा श्रीमन्नागार्जुनतनुज धन्य प्रतिगृह्य स्फुरद्विश्वादर्शे जयति तव कीर्त्तिः सुकृतिनः १४ श्रीरामस्य युधिष्ठिरस्य च तथा रामायणे भारते कौर्त्तिर्भाति यथा च सुंजनृपतिः सा कारिका भूषणे श्रीमद्दन्यमिताचरादिषु यथा श्रीवर्द्दभर्त्तुस्तथा विश्वादर्श-निबन्धने तदग्रभश्लोका अर्थत्र्जिताः १५ राज्ञः कौर्त्तिः पडितैः पंडितानां तथाद्राज्ञः शाश्वतीस्था व्यवस्था प्रदार्थाभ्यां सत्प्रबन्धैरनसैराकल्पं स्थाप्यते पुण्यकीर्त्तिः १६ संख्यवानुपजातशत्रुरिति यं कौर्त्तिं च पूर्व्वं कलेः साचाद्धर्मसुतो भवद्दरिसुकृत् सौर्यं कलंकं तयोः । दृष्टाद्भुत (?) मरातिभिः स्फुरभिर्दिश्यावतीर्णं कलौ ब्रातामलं (?) सरस्वती विजयताम्नयस्त्वयीवाम्बवः । १७ सन्तानः प्रथमं धनं धनदर्वं संवेदिरे मंदिरे धन्यः कर्ण इवार्थिदोःर्थिनिकरैर्धीमानयं मानयन् चाकल्पं परिपूरयन् विजयतां श्रीगङ्करं शंकरं कर्पूरप्रकरैः प्रदीपनिकरैः स्रक्चन्दनैर्यदनैः १८

Colophon. इति श्रीगीतार्थप्रवीणप्रमदाचार्य्यादित्यसुतकविकान्तसरस्वतीविरचितविश्वादर्शाख्यधर्मशास्त्रज्ञानकाण्डचतुर्थः समाप्तः ॥ ४ ॥ संवत् १८५४ शके १८१८ तत्र फाल्गुनकृष्णातिथौ १२ गुरुदिने पूर्त्तिमगमत् ॥ । लिखित रामानंदशर्मणा कालिंजमध्ये । श्रीशुभं कल्याणमस्तु ।

विवरणम् —श्रीमदादित्याचार्य्यपुत्रकविकान्तसरस्वतीविश्वादर्शाभिधो धर्मशास्त्रीयनिबन्धश्चतुर्भिः काण्डैः सम्पूर्णः । १ आचारकाण्ड, २ व्यवहारकाण्ड, ३ प्रायश्चित्तकाण्ड, ४ ज्ञानकाण्डश्चेति ।

---

**No. 489. दानपारिजातः ।** Dána Párijátaḥ Substance, country-made white paper, 13 × 6 inches. Folia, 424. Lines, 3–7 in a page. Extent, 6,300 ślokas. Character, Nágara. Date, ? Appearance, partly old, worm-eaten, and torn, and partly fresh. Generally correct. Complete.

A work treating of gifts under the name of Dána Párijáta by Ananta A'chárya, forming a part of his series of works entitled Párijáta, well-known throughout the country.

**Beginning.** श्रीसच्चिदानंदघनाय नमः ॥ गणेशाय नमः ॥ वंदे श्रीमदनंतसंज्ञगिरिसं-
यंञ्जी (?) निवासं हरिं विघ्नध्वांतदिवाकरं सुरगुरुं सर्व्वार्थसिद्धिप्रदं । ब्रह्मे-
शार्कसुरेंद्रपूर्व्वकसुरा यस्य प्रसादात् सदा सर्व्वारम्भसमाप्तिमीयुरमलं मदंग-
देव परं ॥ १ ॥ नत्वा श्रीरामजिनाजानि तथा ब्रह्मादिकान् सुरान् । गणेशं
वीघ्र (विघ्न ?) हर्त्तारं वंदे हैमवतीसुत ॥ २ ॥ चतुर्दशसु विद्यासु निष्ठाता:
( निष्णाता: ? ) शुद्धमानसा: । अपरोक्षब्रह्मतत्त्वा जयंति गुरवो मम ॥ ३ ॥
श्रुतिसकलरहस्यं विंवितं यस्य चित्ते मुकुर ई (इ ?) व सुधाजं दीपमालिन्य-
शून्ये । स्वपदविमलभक्त्या यस्य तुष्टो रमेशो जनकजनकवल्लह भट्टमेनं
नतोऽस्मि ॥ ४ ॥ जातोऽहमर्थेण मनोरथेन यस्यानुकम्पाऽमृतदृष्टिपुष्टः ।
पारं गतश्चाखिलदर्शनानां नागेशभट्टं जनकं नतोऽस्मि ॥ ५ ॥ वंदे भागी-
रथीमवां गुणैरेवशालिनीं । यत्प्रसादादहं प्राज्ञः सञ्जातो जडधीरपि ॥६॥
श्रीमत्काण्वकुलाब्धिशीतकिरणो विद्याकलानां निधिः श्रीमद्विष्णुपदाश्रितः
सरसगुर्विहगकीरप्रियः । भट्टश्च इमं पितृव्यमभिनम्यानतभट्टः सुधीनांना-
दानविधानसत्सुरत्न ( त ? ) कं व्यारोपयद्धृत्तं ॥ ७ ॥ संति दानविधौ
ग्रंथा: प्रणीता: मु(मू ?)रिभिः खलु । कोप्यस्य महिमा वैयोऽभिश्रैर्ज्ञयसि
सर्व्वतः ॥ ८ ॥ न पांडित्याभिमानेन नापि विजय लिप्सया । निबंधो रच्यते
किंतु विदुषां परितुष्टये ॥९॥ यत्किंचिन्मम चापल्य चचर्यं सां (चम्यतां तत् ?)
विपश्चिभिः । गुणग्राह्या सदा संतोबालस्य पितराविव ॥ १० ॥ ग्रंथस्थानि
विकीर्णानि नानादानानि कृत्स्नशः । प्रोच्य तेऽत्र मया तानि विष्णुप्रीतिमभी-
प्सया ॥ ११ ॥ ग्रंथस्यास्यानुक्रमस्तु प्रोच्यते ज्ञानसिद्धये । आदौ दान-
प्रशंसेह तत्स्वरूपनिरूपणं ॥ १२ ॥ ततश्च दानदीपाख्या तद्दानां निरूपणं ।
दानांगानां तथा आतुरस्य पात्रनिरूपणं ॥ १३ ॥ अपात्रीकरणं श्रद्धा देयद्रव्य-
निरूपणं । याच्यद्रव्यमयाच्यमदेयं च निरूप्यते ॥ १४ ॥ दानदेशाश्च
तत्काला निषिद्धा अपि तत्र ये । इति कर्त्तव्यता दाने परिभाषा ततः-
पर ॥ १५ ॥ तत्राधिकारी संकल्पस्नानादिनियमाश्च ये । प्रतिमा द्रव्यमानं च
कलशादेश्च लक्षणं ॥ १६ ॥ दर्भादिलक्षणं चान्यनियमानां निरूपणं । अनुक्त
दक्षिणादाननिर्णयः प्रोच्यते तदा ॥ १७ ॥ द्रव्यमानं धान्यमानं मानं चारादि-
कस्य च । भूमानमंगुल्यादीनां भेदाः स विनिर्णीतकं ॥ १८ ॥ प्राच्या-
दिश साधनं तु प्रोच्यते वास्तुनिर्णय. ॥ मर्त्तारत्नपताकादेर्मेदस्तत्र
लक्षणं ॥ १९ ॥ कुंडानां विनियोगोऽत्र तन्निर्माणं सविस्तरं । मेखलायोनि-
कुंडादिलक्षणं योग्यवर्णितं. ॥ २० ॥ तुलापुरुषपूर्वाणि महादानानि
षोडश । अथ पर्वतदानानि धान्यादीनां क्रमेण हि ॥ २१ ॥ सुवर्णदानानि

तथा तथानंदनिधेर्विधिः। ततो भद्रनिधेर्दानं दानञ्च शतमानकं ॥ २२ ॥ हेमदानं रूप्यदानमश्वदानमतःपरं। तिलदानानि दानं च कांस्यपात्रस्य कीर्त्यते ॥ २३ ॥ तिलराशिस्ततोदानं तिलपद्मस्य वै पुनः ॥ रुद्रैकादशदानं च (दानञ्च ?) तिलगर्भक ॥ २४ ॥ गजदानं देवताभ्यो गजदानं द्विजाय च ॥ दास्यादानं रथस्यापि शिबिकाभूमिवेश्मनां ॥ २५ ॥ मतप्रतिश्रयस्यापि दानयोः प्रभकस्य च (?) ॥ कन्यादानं च कपिला दशभिर्दानमयुतं (?) ॥ २६ ॥ गोदान च ततो हैमस्य गोगोदानमेव च। समानवत्सगोदानं दशवर्णा गवां तत ॥ २७ ॥ विराजगोदानमथोगोदानं दैवतेषु च ॥ दानं चोभयतो मुख्या वैतरण्यास्ततःपरम् ॥ २८ ॥ ततो वृषभदान च गुड-धेन्वादयोदश। विद्यादानं च सांगानां वेदानामितरस्य च ॥ २९ ॥ दानं विपुरुषाणां च यज्ञानां दानमीर्य्यते। दशावतारदानं च द्वादशादित्य-दानकम् ॥ ३० ॥ चन्द्रादित्यप्रतिकृतेः कालाख्यपुरुषस्य च ॥ श्राम-प्रतिकृतेर्दानमुदकुम्भस्य चैव हि ॥ ३१ ॥ चनकप्रतिमायाश्च लोक-पालाष्टकस्य च ॥ मैथशा महिषी महिषदान कृष्णाजिनस्य च ॥ ३२ ॥ गवि कृष्णाजिनस्योक्तमार्द्रकृष्णाजिनस्य च ॥ मैथ्यआर्महिषी मतिर्मविवार व्रत-योगमासर्ल्यनदानक ॥ ३३ ॥ दाम सवत्सरस्यापि प्रकीर्णानां च दानकं ॥ जालाशया (जलाशया ?) रामवापी कूपादीनां प्रतिष्ठिभिः ॥ उच्यते हि निबन्धेऽस्मिन् विदुषां प्रीतये मया ॥ इति दानपारिजातेऽनुक्रमणिका ॥ ॥

**End.** इत्युक्त्वा मामकौं मूर्त्ति दद्याद्दक्षिणसयुतां ॥ एवमेव गणेशस्य दुर्गायाः सूर्य-वैधोः (वेधसो. ?) ॥ अन्येषामपि देवानां प्रतिमां प्रतिपादयेत् ॥ तत्र लोका (तत्तल्लोक ?) मवाप्नोति सर्व्वत्र जयमाप्नुयात् ॥ भग्नां वा खण्डितां वापि दत्वा दोषमवाप्नुयात् ॥ तस्मात्सलक्षणसपन्नां प्रतिमां सर्व्वदार्पयेत् ॥ महदैश्वर्य्यमाप्नोति स्वर्गलोके महीयते ॥

**Colophon.** इति श्रीमदनन्ताचार्य्यविरचिते दानपारिजाताभिधे निबंधे शालग्राम-विष्णुमूर्त्तिलिंगशिवमूर्त्तिदानविधानानि ॥ ॥ श्रय ॥ श्री श्री श्री शुभं भवतु कल्याणमस्तु सकुल उदेराम हस्तेन लखीत (शुक्ल उदय राम हस्तेन लिखित ?) श्रीलक्ष्मीनारायणजी प्रसादात् याद्दशं पुस्तिकं (पुस्तक ?) द्दष्टा (द्दष्ट ?) ताद्दश लषितं (लिखित ?) मया जदी (यदि ?)। शुद्धमशुद्धं वा मम दोशो (दोषो ?) न दीयते ॥ ग्रन्थसंख्या ६३००

विवरणम्—श्रीमदनन्ताचार्य्यविरचितो दानपारिजातो नामाऽयं निबन्धः सुप्रसिद्ध एव ॥

